महाकवि-श्रीकविराज पण्डित-विरचितम्

# राघवपाण्डवीयम

कलिकातास्थ-संस्कृतपाठशालाध्यापकचर-

वैकुण्ठवासि-प्रेमचन्द्रतर्कवागीशभट्टाचार्य-विरचितया

कपाटविपाटिकाख्यया टीकया सहितम् ।

द्वितीयसंस्करणम् ।

---

एल. सि. इ. उपाधि-धारिणा टीकाकर्त्तुः भ्रातुष्पुत्रेण

श्रीभवदेवचट्टोपाध्याय-भट्टाचार्य्येण सम्पादितम्

प्रकाशितञ्च ।

---

काव्यवेदान्ततीर्थोपाधिक—

श्रीकृपामयभट्टाचार्य्येण संशोधितम् ।

---

शकाब्दाः १८४७

मूल्यं ।

# भूमिका

परमपूजनीया मम ज्येष्ठतातपादाः स्वर्गीयप्रेमचन्द्रतर्कवागीश-महोदयाः स्वरचितया कपाटविपाटिकाभिधया टीकया सह महाकवि-श्रीकविराजविरचितं राघवपाण्डवीयं नाम महाकाव्यं कलिकाता-नगर्यां पञ्चसप्तत्यधिकसप्तदशशतमितशकनृपसंवत्सरे मुद्राक्षरे रञ्ज-यित्वा प्रकाशयामासुः ।

अथ सहृदयधुरीणः तुकारामजावाजिमहोदयः मुम्बइनगरस्थ-निर्णयसागरयन्त्रालये शशधरकृतया प्रकाशाख्यया टीकया सह महा-काव्यमिदं सप्तनवत्यधिकाष्टादश-शततमखृष्टवर्षे मुद्रितवान् ।

उक्तसंस्करणद्वयं विशेषतः पूज्यपादज्येष्ठतातपादकृत-संस्कर-णम् निःशेषितमिति आकलय्य तातपादकृतया टीकया सह उक्तमहाकाव्यस्य पुनर्मुद्रणे सत्वरं यत्नवानपि यन्त्राधिकारिणां शिथिलप्रयत्नतया वर्षकल्पेन कालेन कार्यमिदं समापयितु-मलं-मभवम् ।

ज्येष्ठतातपादकृत-"कपाटविपाटिका"-शशधरविरचित-"प्रका-शाख्ययोः" कतरा सहृदय-हृदयहारिणीति सुधिय एव विदांकुर्वन्तु ।

मुद्रणेऽस्मिन् तातपादमहोदयस्य सुयोग्यान्तेवासिनः अग्रज-प्रतिमस्य स्वनामधन्यस्य श्रीमत्-शशिभूषणचट्टोपाध्यायमहोदयस्य तथा मम सुहृद्वरस्य महामहोपाध्यायोपाधिकस्य श्रीयुक्तहरप्रसादशास्त्रि-महा-शयस्योपदेशः सर्वथा बहुमततया परिगृहीतः। किं बहुना— अनेनैव कार्येऽस्मिन् सफलमनोरथोऽहमभवम् । वर्द्धमानमण्डलायत्त-दामोदरनददक्षिणतटान्तिकं-जुविला-ग्रामनिवासी काव्यवेदान्ततीर्थो-पाधिकः श्रीमान् कृपामयभट्टाचार्य-महाशयः परमप्रयत्नेनास्य मुद्रण-संशोधनादिकार्यं सम्पाद्य महतीमुपकृतिं मे विहितवान्, अन्यथा कार्यमिदं कदा पूर्णता-माप्नुयादिति वक्तुं न शक्यते ?

मत्वरं तत्तच्छ्लोकदिदृक्षूणां कार्यसौकर्य-मपेक्षमाणोऽहमत्र श्लोकानां मातृकावर्णानुयायिनो अनुक्रमणिका आधुनिकरीत्या संन्यवेशयम्।

एकसप्ततितमपृष्ठाया-मेकादशपङ्क्तौ "वरवरणविधा"-वित्यत्र "वरवरणकृते" इति, द्वासप्ततितमपृष्ठायां सप्तदशपङ्क्तौ "तस्या" इत्यत्र "दीन" इति, पञ्चाशीतितमपृष्ठायां पञ्चविंशपङ्क्तौ "सहसा" इत्यत्र "सद्दशानिति", षडशीतितमपृष्ठायां पञ्चविंशपङ्क्तौ "वल्गित" इत्यत्र "वल्गित" इति, "प्रोङ्खित इत्यत्र "प्रेरित" इति च, तथा सप्ताशीतितम पृष्ठायां द्वाविंशपङ्क्तौ "तेन" इत्यत्र "तत्र" "प्रेषिते"-रित्यत्र 'प्रोज्झिते"—रितिच शशधरधृतपाठान्तरम् प्रकाशकेन मया निवेशितं; न तत्रभवता टीकाकृतेति सुधीभिर्द्रष्टव्यम्।

संस्करणेऽस्मिन् पूज्यपाद-ज्येष्ठतातपादविरचितं श्रीश्रीगङ्गास्तोत्र-मधिकं निवेशितमिति।

श्रीभवदेव-चट्टोपाध्यायस्य।

---

# शुद्धिपत्रम्

| अशुद्धं | शुद्धं | पृष्ठा | पङ्क्तिः |
|---|---|---|---|
| मुक्ता | मुक्ता | २ | १५ |
| जलएव | जलंएव | ३ | १८ |
| स्थिता | स्थिता | ४ | १८ |
| असो | असौ | ११ | १४ |
| विनष्टि | विघ्निनष्टि | १२ | १५ |
| तया | तथा | १३ | २५ |
| सम्भवी | सम्भवो | १४ | १६ |
| अतएवेयमेव | अतएवेममेव | १६ | २५ |
| रपकं | रूपकं | २२ | २५ |
| एकयोक्त्य रामायण महाभातेति हातंद्वयस्य | एकयोक्त्या रामायण-महाभारतेति-हासद्वयस्य | २४. | २४ |
| चब्धाः | क्षुब्धाः | ३८ | २५ |
| तत्पितर | तत्पितरम् | ४२ | १८ |
| स्वरादैः | स्वदारैः | ४३ | ८ |
| नारायणांश-संभूत | नारायणांश-संभूतं | ४८ | २३ |
| सव | सर्वं | ६७ | २७ |
| शार्दूलविक्रीडितं-मिदं वृत्तं | स्रग्धरावृत्तमिदं | ७३ | २२ |
| अनायास | अनायासं | ८२ | १४ |
| अतिमास्वत् | अतिभास्वत् | ९१ | ८ |
| भारतः | भरतः | ९२ | २१ |
| सुमर्वं | सगर्वं | ९६ | २१ |
| सा | मा | ९८ | १६ |
| सर्वयज्ञेभ्यः | सर्वयज्ञेभ्यः | १०४ | १० |

| अशुद्धं | शुद्धं | पृष्ठा | पङ्क्तिः |
| --- | --- | --- | --- |
| प्रागवंशो | प्राग् वंशो | १०४ | १३ |
| पृथला | पृथ ला | १०८ | ८ |
| वाक्यानि | वाक्यानि | १२८ | २० |
| शीती, रुचिरा, | शीती, रुचिरा | १३२ | २५ |
| रोषभोभिनः | रोषभोगिनः | १३५ | १५ |
| मांसान्यश्नन्तीति | मांसान्यश्नन्तीति | १३८ | २४ |
| विधिनैष | विधिनैव | १५८ | २५ |
| सर्वलोकप्रकाश | सर्वलोकप्रकाशे | १६० | २३ |
| मारीच | मारीचः | १६१ | ११ |
| सुव्यक्त | सुव्यक्तं | १६२ | १३ |
| स्फुटोऽभत् | स्फुटोऽभवत् | १६५ | ६ |
| त्यक्ता | त्यक्ता | १६७ | १२ |
| तदीय | तदीयं | १७४ | ४ |
| मातङ्गतेजः क्षपितारिशक्तो | मातङ्गतेजःक्षपितारिशक्तौ | १७६ | २ |
| वलीयसी | वलीयसी: | १७८ | ११ |
| चालयन्त | चालयन्तं | १८५ | २० |
| शोभ | शोभं | २१७ | ३ |
| वानरवयस्य | वानरवयस्य | २३२ | ११ |
| सुमोद्भिः | सुयोद्भिः | २४४ | १७ |
| सुरेणः | सूरेणः | २४८ | २३ |
| निकृत्तगल: | निकृत्तगलः | २४९ | २० |
| एता | एताः | २५२ | ८ |
| मरीपः | मरीषः | २६७ | ५ |
| पूर्वपरी | पूर्वापरी | ३२५ | ११ |
| महाघाषा: | महाघोषाः | ३४५ | १८ |
| अभ्यर्ण | अभ्यर्णा | ३८१ | १८ |
| छिन्ना | छिन्नाः | ३८१ | १९ |

## मङ्गलाचरणादि

दधन्मरकतस्थलीद्युतिविडम्बिकान्तिच्छटां
पुरःप्रबलमारुतो निहितजिष्णुचापोज्ज्वलः ।
हरन् सपदि दुःसहां रविजतापभीतिं नृणां
मदीयहृदयाम्बरे स्फुरतु कोऽपि धाराधरः ॥ १ ॥

आसीदसीमगरिमास्पदकश्यपर्षि-
वंशप्रशंसितजनुर्मनुतोऽप्यनूनः ।
सर्वेश्वरोऽनवरतक्रतुकर्मनिष्ठा-
निर्वर्तितावसथिसंज्ञतया प्रतीतः ॥ २ ॥

तदन्वयसुधाम्बुधेरजनि रामनारायणः
शशीव विमलान्तरो द्विजवरः श्रिया भासुरः ।
यदीयगुणचन्द्रिकोल्लसितराढ़नीराशये
सतां हृदयकैरवं कलितगौरवं मोदते ॥ ३ ॥

श्रीप्रेमचन्द्रेण तदात्मजेन काव्योत्तमे राघवपाण्डवीये ।
बालावबोधाय सतां मुदे च वितन्यते सद्विवृतिः स्फुटार्था ॥ ४ ॥

अर्थान् ग्रहीतुमिह काव्यपुरे प्रविश्य
युष्माकमस्ति यदि चेतसि सत्यमिच्छा ।
काठिन्यदुर्द्धरकपाटविपाटिकां मे
टीकां तदा प्रथममेव करे कुरुध्वम् ॥ ५ ॥

अगर्वाः पूर्वेषामतिगहनवाणीचतुरता-
प्रकाशक्लेशज्ञा जगति विजयन्ते कतिपये ।
खलास्तु स्वच्छन्दं परभणितिदोषानुसरणी-
रवज्ञायां विज्ञा विदधति न केषामपयशः ॥ ६ ॥

---

श्रीगणेशाय नमः

# राघवपाण्डवीयम्



## प्रथमः सर्गः

**स्वाधिष्ठानाम्बुजरजःपुञ्जपिञ्जरमूर्त्तये ।**
**इच्छाधीनजगत्सृष्टिकर्म्मणे ब्रह्मणे नमः ॥ १ ॥**

अत्र तावदभूतपूर्व्वकाव्यवर्णनाजनितयशोराशिप्रकाशितप्रकर्षतया कविसार्थसार्थकीकृतनामा श्रीकविराजनामा महाकविः प्रकरणैक्यादिना राघवपाण्डवीयेतिहासवर्णनरूपं राघवपाण्डवीयाभिधं महाकाव्यमारभमाणस्तत्समाप्तिप्रतिबन्धकीभूतमात्मनः प्रत्यूहव्यूहमाशङ्क्य तद्विघाताय कृतमपि नानादेवतोपासनारूपं मङ्गलं शिष्यशिक्षार्थमुपनिबध्नन् सुरज्येष्ठत्वात् प्रथमं ब्रह्माणमुपश्लोकयति ।

स्वाधिष्ठानेति । ब्रह्मणे परमेष्ठिने नमः किम्भूताय स्वस्य अधिष्ठानम् आसनभूतं यदम्बुजं पद्मं तस्य रजसां परागाणां पुञ्जैः समूहैः पिञ्जरा पीतवर्णा मूर्त्तिः शरीरं यस्य स तथा तस्मै । स्वभावतो रक्तवर्णापि ब्रह्मणोमूर्त्तिर्निजासनकमलपरागैः पीतवर्णा जातेत्यर्थः । एतेन तदम्बुजस्य परागाधिक्यात् इतराम्बुजापेक्षया वैलक्षण्यं ब्रह्मणश्च नियततदम्बुजावस्थायित्वं ध्वनितम् । पुनः किम्भूताय इच्छाया निजाभिलाषमात्रस्य नतु कुलालादेरिव कायिकक्लेशस्य अधीनम् आयत्तं जगतो विश्वस्य सृष्टिकर्म्म निर्म्माणकार्य्यं यस्य स तथा तस्मै । एतेन ब्रह्मा स्वेच्छया जगन्निर्म्मिमीते उत्पत्स्यमानमेतत्

**पुनातु वः सरस्वत्याविलासशिशुकः शुकः।**
**तलांशुमयमाणिक्यपञ्जरान्तरगोचरः ॥ २ ॥**

काव्यमपि जगदन्तर्गतं भविष्यति तस्मादेतस्मिन्नपि किञ्चिदिच्छां विदधात्विति कवेरभिलाषो ध्वनितः। अथवा ब्रह्मणे परमात्मने नमः। किम्भूताय स्वमेव अधिष्ठानं यस्यास्तादृशी माया सैव अम्बुजं मधुवद्वैषयिकसुखास्पदत्वात् पद्मं तस्य रजःपुञ्जेन रजोगुणाधिक्येन अथच परागसमूहेन पिञ्जरा रक्ता मूर्तिः स्वरूपं यस्य तत् तथा तस्मै रजसा रक्तवर्णत्वमागमेषु प्रसिद्धं अतएव 'बहुस्यां प्रजायेय' इत्यादि रूपाया इच्छाया अधीनं जगतः प्रपञ्चस्य सृष्टिकर्म्म यस्य तादृशाय स्वतोगुणक्रियाशून्यायापि मायासम्बन्धात् तदुभयवते इत्यर्थः पिञ्जरमूर्त्तये इत्यत्र तद्गुणालङ्कारः। "स्वमुत्सृज्य गुणं योगादत्युज्ज्वलगुणस्य यत्। वस्तु तद्गुणतामेति भण्यते स तु तद्गुणः" इति लक्षणात्। "पिञ्जरोऽश्वान्तरे क्लीवे स्वर्णे पीते च वाच्यवत्" इति मेदिनी। "पिञ्जरस्तु पीतरक्ते" इति हेमचन्द्रः। 'वेदस्तत्त्वं तपोब्रह्म ब्रह्मा विप्रः प्रजापतिः' इत्यमरः ॥ १ ॥

नमस्काररूपं मङ्गलमुक्त्वा आशीर्वादरूपं मङ्गलं कुर्वन् वाङ्मयाधिष्ठात्रीं सरस्वतीं उपश्लोकयन् प्रार्थयते।

पुनात्विति। सरस्वत्यावाग्देवताया विलासस्य क्रीड़ाया विलासाय वा शिशुकः कृत्रिमपुत्रकरूपः शुकः कीरः वोयुष्मान् पुनातु पवित्रीकरोतु युष्माकं काव्यकृतिश्रमिप्रतिकूलं दुष्कृतविशेषमुपशमयत्वित्यर्थः। पक्षिविशेषस्य शुकस्य पवित्रकारित्वाभावेऽपि उपास्यदेवताभ्योऽभीष्टशंसनापेक्षया तद्गुणक्रियापरिवारादितस्तथा शंसनमधिकतरं वैदग्ध्यं द्योतयतीति कविसम्प्रदायः। अतएव 'वैनायक्यश्चिरं वो वदनविधुतयः पान्तु चीत्कारवत्यः' इत्यादयो महाकविप्रयोगाः। विना पक्षिणा लासः क्रीड़ा विलासस्तत्र शिशुक इत्यपरे। किम्भूतः तलस्य सरस्वत्याः करतलस्य येंऽशवोलोहितकिरणास्तन्मयं तद्रूपं यन्माणिक्यपञ्जरं शोणमणिनिर्म्मितं पक्षिरक्षणयन्त्रं तस्य अन्तरं मध्यं तस्य गोचरोविषयस्तन्मध्यवर्तीत्यर्थः। अन्यापि क्रीड़नशीला पुत्रकोयमिति मत्वा शुकेन क्रीड़ति शुकश्च माणिक्यपञ्जरे तिष्ठति शुकहस्ता काचित् सरस्वती-

ब्रह्माण्डमण्डलच्छद्मपद्मकुटमलदीर्घिका ।
जायतां जगतः शान्त्यै शाम्भवी शक्तिरेकिका ॥३॥
श्रीलतालिङ्गिताङ्गस्य विष्णुकल्पद्रुमस्य वः ।
अवतारमहाशाखाः फलन्तु फलमीप्सितम् ॥ ४ ॥

मूर्त्तिर्वा आगमविशेषे स्यात्। भारतवक्तारं शुकदेवं स्तौतीत्याभाष्य शुकः शुकदेव इत्यादि केषाञ्चित् व्याख्यानमश्रद्धेयं शुकदेवस्य भारतवक्तृत्वाभावात् वैशम्पायनस्यैव तथात्वात्। उत्तरार्द्धे तत्तांशूनामपह्नवेन माणिक्य पञ्जरस्थापनादपह्नुत्यलङ्कारः। 'प्रकृतं यः निषिध्यान्यत् साध्यते सा त्वपह्नुतिः' इति लक्षणात्। 'तारामयास्तत्र च फेनभङ्गा' इत्यादि साहित्यदर्पणीयो-दाहरणदर्शनाच्च ॥ २ ॥

जलमयीं शिवस्य मूर्त्तिमुपश्लोकयन् प्रार्थयते

ब्रह्माण्डेति। एकिका अद्वितीया शाम्भवी शिवसम्बन्धिनी शक्तिः शिवस्य जलमयी मूर्त्तिरित्यर्थः जगतो लोकस्य शान्त्यै रक्षणाय सुखाय वा जायतां भवतु। शाम्भवी शक्तिरेव उपद्रवेभ्यो लोकान् रक्षत्वित्यर्थः। किम्भूता ब्रह्माण्डमण्डलमेव छद्म छलं यस्य तादृशं यत् पद्मं तस्य यः कुड्मलोऽङ्कुरोभावेन प्रथमोत्पत्तिरित्यर्थः तस्य दीर्घिका वापी जल एव ब्रह्माण्डस्य प्रथमाविर्भावात्। तथा च मनुः "अप एव ससर्जादौ तासु वीजमवासृजत्। तदण्डमभवद्धैमं सहस्रांशु समप्रभम्" इति। अन्योऽपि कुड्मलोदीर्घिकायां जायते। ब्रह्माण्ड सन्निवेशोऽपि कमलाकारतया पुराणादौ वर्णितः अत्र प्रकृतस्य ब्रह्माण्डमण्डल-स्यापह्नवेनाप्रकृतपद्मकुड्मलस्थापनादपह्नुत्यलङ्कारः। उक्तादेव लक्षणात् तन्मूलतश्च शक्तौ दीर्घिकारोपाद्रूपकालङ्कारश्च 'तद्रूपकमभेदोय उपमानो-पमेययोः' इति लक्षणात्। एवञ्चात्र द्वयो रङ्गाङ्गिभावः सङ्करः। ब्रह्माण्ड-मण्डलाशेषेति पाठे शुद्धरूपकमेव ॥ ३ ॥

अभीष्टफलदातृतया सलक्ष्मीकं नारायणमुपश्लोकयन् प्रार्थयते

श्रीलतेति। विष्णुर्नारायणरूपो यः कल्पद्रुमस्तस्य येऽवतारा मत्स्यकूर्म्मा-

**कान्तिः श्रीकण्ठकण्ठस्य जयत्यालिङ्गनोत्सुका।**
**स्कन्धारूढेव कालिन्दी मौलिमन्दाकिनीर्ष्यया ॥५॥**

दयस्तएव महाशाखाः प्रधानत्वचाङ्गविशेषास्ता वोयुष्माकं ईप्सितं अभिलषितं यत् फलं वर्गचतुष्टयान्यतमरूपं उद्देश्यं तदेव फलं शस्यं तत् फलन्तु निष्पादयन्तु ददत्वित्यर्थः। किम्भूतस्य श्रीर्लक्ष्मीस्तद्रूपा या लता वल्ली तया आलिङ्गितं वेष्टितम् अथ च परिरब्धम् अङ्गं यस्य स तथा तस्य। अन्योऽपि कल्पवृक्षो-लतालिङ्गितो भवति तस्य शाखाश्च याचकेभ्योऽभीष्टं ददति। निष्पत्त्यर्थकस्य फलधातोरकर्म्मकत्वेऽपि अन्तर्भाविणयर्थत्वात् क्वचित् सकर्म्मकत्वम्। तथा च मुरारिः 'वाल्मीकि फलति स्म यस्य चरितस्तोत्राय दिव्यागिर' इति। अत्र साङ्गमाङ्गिनोरूपणात् साङ्गरूपकम्। "अङ्गिनो यदि साङ्गस्य रूपणं साङ्ग-मेव तत्।" इति लक्षणात्। फलशब्दश्लेषोऽप्यत्र साङ्गरूपकेऽधिकमेव वैचित्र्य-मावहति। "दृश्यन्ते क्वचिदारोप्याः श्लिष्टाः साङ्गेऽपि रूपके" इत्युक्तत्वात्। 'शाखा वेदविभागेऽपि पादपाङ्गे भुजेऽपि च' इति विश्वः। 'फलं हेतुफले जातीफले फलकशस्ययोः' इति हेमचन्द्रः ॥ ४ ॥

पुनरपि सर्वज्ञानप्रदं शिवमुपश्लोकयति

कान्तिरिति। श्रीकण्ठस्य शिवस्य कण्ठोगलस्तस्य कान्तिर्नीलाच्छवि-र्जयति सर्व्वोत्कृष्टतया वर्त्तताम्। अत्रोत्प्रेक्षते मौलौ मस्तके स्थिता मन्दा-किनी स्वर्गङ्गा मौलिमन्दाकिनी। शाकपार्थिवादित्वात् मध्यपदलोपी समासः। तस्या ईर्ष्यया मन्दाकिन्याहरशिरोऽवस्थानरूपस्य सौभाग्य-स्यासहन्या इत्यर्थः आलिङ्गनोत्सुका शिवस्य कण्ठग्रहपूर्वकपरिरम्भणायोद्यता अतएव स्कन्धारूढा शिवस्यांससमीपमागता कालिन्दीव यमुनेव। नेयं भगवतः कण्ठे विषपाणजनिता श्यामा कान्तिः किन्तु नद्योरवयोर्मध्ये त्वमेका हरशिरोऽवस्थान सौभाग्यं लभसे नाहं किमपि अतस्तव सौभाग्या-दधिकं कण्ठग्रहपूर्वकालिङ्गनसौभाग्यमनुभवामीति मनसि कृत्वा तदर्थं शिवकण्ठमारूढा यमुनेवेति कालिन्दीरूपद्रव्यस्य सम्भावनात् द्रव्योत्प्रेक्षेयम्।

स न करोतु विघ्नानां वारणं वारणाननः ।
मदराविभिरारब्धभोगावलिरिवालिभिः ॥ ६ ॥
जगत्प्रदीपयोर्वंशौ सूर्य्याचन्द्रमसोरपि ।
ययोरुद्दीपितौ वाग्भिस्तौ वन्दे कविपुङ्गवौ ॥ ७ ॥

'सम्भावनमथोत्प्रेक्षा प्रकृतस्य समेन यत्' इति लक्षणात् । 'श्रीकण्ठोदेशभिद्युग्रे' इति मेदिनी ॥ ५ ॥

विघ्नापहर्त्तारं गणेशमुपश्लोकयन् प्रार्थयते

स इति । सः विघ्नविनाशकतया प्रसिद्धो वारणाननो गजाननः नोऽस्माकं विघ्नानां काव्यकृति प्रतिबन्धकीभूतदुरदृष्टानां वारणं निवारणं करोतु विघ्नान् नाशयत्वित्यर्थः । उत्प्रेक्षया विशिनष्टि मदेति भोगस्य सुखस्य आवलिः श्रेणी यतः सा भोगावलिः स्तुतिः मदेन मत्ततया मदजलपानाभिलाषेण वा रवितुं गुञ्जितुं शीलं येषां तादृशैरलिभिर्भ्रमरैः कर्तृभिरारब्धा प्रस्तुता भोगावलिः स्तुतिपाठो यस्य स तथा तादृश इव । अत्र भ्रमराणां गुञ्जिते स्तुतिपाठस्योत्प्रेक्षणादुत्प्रेक्षेयम् । न इत्यत्र व इति पाठे वो युष्माकमित्यर्थः । मदराविभिरित्यत्र मदवारिभिरिति आरब्धेत्यत्र आबद्धेति च पाठे मदवारिभिर्मदजलैर्हेतुभिरितस्ततः श्रेणीरूपेणोपविष्टैर्भ्रमरैराबद्धा कृता 'भोगावलिः सर्पशरीरश्रेणी यत्र स इव इत्यन्वयः । वृ र वल सञ्चलने इत्यस्य रूपेण मदवारिभिर्मदचपलैरिति वा । 'भोगः सुखे धने चाहेः शरीरफणयोरपीति' मेदिनी । अलिभिरलिवत् श्यामैर्मदवारिभिर्मदजलैराबद्धा भोगावलिर्गण्डस्थचित्रं यस्य स इव । शोभार्थं गण्डस्थचित्रं भोगावलिरुच्यते । "गन्धचन्दनसंयुक्ता रोचना कुङ्कुमैर्युता । नाम्ना भोगावलिः ख्याता सुपूर्व्वा गण्डशोभिनी" इत्युक्तेरिति केचित् ॥ ६ ॥

अथ रामायणभारतशाब्दकौ वाल्मीकिव्यासावुपश्लोकयितुमुपक्रमते

जगदिति । अपिर्भिन्नक्रमे. जगत्प्रदीपयोरपि जगतां प्रकाशकयोरपि सूर्य्याचन्द्रमसोर्वंशौ अन्ववायौ ययोर्वाग्भिर्वचनैः रामायणमहाभारतरूपैरुद्दी-

अन्योविधाता वाल्मीकिरादिकाव्यं कमण्डलुः।
रघुनाथकथा गङ्गा तया पूता जगत्त्रयी ॥ ८ ॥
द्वैपायनोऽपरोब्रह्मा तत्सृष्टिर्भारतार्णवः।
सूक्तयोदिव्यरत्नानि त्रैलोक्यं तैरलङ्कृतम् ॥ ९ ॥

पितौ प्रकाशितौ तौ कविपुङ्गवौ कविश्रेष्ठौ वाल्मीकिव्यासौ अहं वन्दे नमामि। येन सूर्य्योत्पन्नोराघववंशोवर्णितः येन च चन्द्रोत्पन्नः पाण्डववंशोवर्णितस्तावहं वन्दे इत्यर्थः। अत्र जगत्प्रदीपयोरपि वंशावल्याभ्यामुद्दीपिताविति विरोधाभासः उद्दीपितौ वर्णितौ इति विरोधभङ्गश्च। एतेन वाल्मीकिव्यासयोरतिमहत्त्वं ध्वनितम् ॥ ७ ॥

अन्य इति। वाल्मीकिर्मुनिरन्योऽपरोविधाता विलक्षणकाव्य सृष्टिकरणात् ब्रह्मा तथा आदिकाव्यं तत्कृतं रामायणम् अन्यः कमण्डलुः जलाधारविशेषः। तथा तद्वर्त्तिनी रघुनाथस्य श्रीरामचन्द्रस्य कथा माहात्म्योक्तिरन्या गङ्गा भागीरथी तया कथारूपया गङ्गया जगत्त्रयी भुवनत्रयं पूता पवित्रीकृता अन्यस्यापि ब्रह्मणः कमण्डलुविलासिनी गङ्गा जगत्त्रयीं पुनीते। अत्र वाल्मीक्यादौ ब्रह्माद्यध्यवसानात् अयं राजा अपरः पाकशासनइत्यादिवदन्येति विशेषणयोगाच्चातिशयोक्त्यलङ्कारः 'सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यत' इति लक्षणात्। अन्येति यथायथं लिङ्गव्यत्ययेन सर्वत्र योजनीयम् ॥ ८ ॥

द्वैपायन इति। द्वैपायनो व्यासोऽपि अपरो ब्रह्मा प्रजापतिरेव तथा भारतमेव अर्णवः समुद्रः स तस्य द्वैपायनब्रह्मणः सृष्टिः सर्गः तन्निर्म्मितं भारतमप्यपरः समुद्र इत्यर्थः। तत्र च सूक्तयः शोभनवचनानि दिव्यरत्नानि मनोज्ञहीरकादिरत्नानि तैर्दिव्यरत्नैस्त्रैलोक्यं लोकत्रयं समलङ्कृतं भूषितम्। श्रूयमाणैर्भारतवचनैरेव कर्त्तव्याकर्त्तव्यविधानाविधानादिना सन्मार्गावस्थापनाल्लोकाः शोभिता इत्यर्थः। अत्रापि पूर्व्वोक्त एवालङ्कारः ॥ ९ ॥

निश्रेण्यौ ब्रह्मलोकस्य वाग्देव्याः कर्णकुण्डले।
धर्म्मद्रुममहामूले वाल्मीकिव्यासयोः कृती ॥ १० ॥
भारतादिपुराणानि श्रीरामचरितानि च।
त्रिसन्ध्यसवनान्येष सर्व्वसाधारणोमखः ॥ ११ ॥

स्वविधेयग्रन्थस्य मूलभूते रामायणभारते स्तौति

निश्रेण्याविति। वाल्मीकिव्यासयोः कृती रामायणभारतरूपे निर्म्मिती ब्रह्मलोकस्य निश्रेण्यौ सोपानरूपे ब्रह्मलोकप्रापिके इत्यर्थः। तथा ते वाग्देव्याः सरस्वत्याः कर्णकुण्डले कर्णभूषणस्वरूपे अत्युत्कृष्टतया वाङ्मयानां शोभाजनिके इत्यर्थः। तथा धर्म्मद्रुमस्य धर्म्मरूपवृक्षस्य महामूले प्रधानमूलस्वरूपे अतितरां धर्म्मोत्पादिके इत्यर्थः। एतेन रामायणभारतानुयायितया मदीयोऽपि ग्रन्थस्तद्वदादरणीय इति भावः। धर्म्मद्रुमेत्यत्र धर्म्मे द्रुमत्वारोपस्य भारतरामायणयोर्मूलत्वारोपं प्रतिनिमित्तत्वात् परम्परितरूपकम् अन्यत्र तु निरङ्ग मालारूपकम्। निश्रेणिस्त्वधिरोहणीत्यमरः ॥ १० ॥

भारतादीति। त्रिसन्ध्ये प्रातर्म्मध्याह्नसायाह्नरूपसन्ध्यात्रय सवनानि स्नानानि त्रिसन्ध्यस्नानजन्यफलसमफलजनकानीत्यर्थः भारतादिपुराणानि द्वैपायनप्रणीतानि तथा श्रीरामचरितानि वाल्मीक्यादिप्रणीतानि रामायणानि च एष सर्व्वेषां वर्णानां साधारणो मखो यज्ञः अश्वमेधादियागो यथा स्वर्गादिकं साधयति एतान्यपि तथेत्यर्थः। तत्तद्यागे तु न सर्व्वेषां वर्णानामधिकारः भारतादिरूपयागस्तु सर्व्ववर्णसाधारणः निर्व्विवादात् शूद्राणामप्यन्ततः श्रवणेऽधिकारस्मरणात् उक्तञ्च पुराणमधिकृत्य। "श्रोतव्यमिह शूद्रेण नाध्येतव्यं कदाचन" इति। अत्र भारतादौ मखत्वारोपाद्रूपकालङ्कारः। भारतादय इतिहासाः पुराणानि वैष्णवादीनि चेतीतरेतरद्वन्द्वः। किम्वा भारतमादि प्रधानभूतं येषां तादृशानि पुराणानीति कर्म्मधारयः। इतरपुराणादिशास्त्रापेक्षया भारतस्य प्रधानत्वं विद्यत एव तथाचोक्तम्। "संक्षिप्य सर्व्वशास्त्रार्थं भारतार्थानुसारतः। निर्णयः सर्व्वशास्त्राणां भारतं परि-

पुराणरामायणभारतादि
चीराणि संयोजितभक्तिवत्सैः।
पुरातनैर्या दुदुहे कवीन्द्रैः
सा भारती कामदुघा ममास्तु ॥ १२ ॥

कीर्त्तितम् ॥" इति। "भारतं सर्व्ववेदाश्च तुलामारोपिताः पुरा। देवैर्ब्रह्मादिभिः सर्व्वैर्ऋषिभिश्च समन्वितैः॥ व्यासस्यैवाज्ञया तत्र त्वत्यरिच्यत भारतम्। महत्त्वाद्भारवत्त्वाच्च महाभारतमुच्यते॥" इति च। एष इत्यत्र विधेयापेक्षया पुंस्त्वमेकत्वञ्च। 'प्राह्णापराह्णमध्याह्नास्त्रिसन्ध्यम्' इति 'सप्ततन्तुर्मखः क्रतुः' इति चामरः। 'सवनन्त्वध्वरे स्नाने सोमनिर्द्दलनेऽपि चेति' मेदिनी। एष्वनुष्टुप्वृत्तम् ॥ ११ ॥

इदानीमुपश्लोकितान् स्वाभिलाषं प्रार्थयते

पुराणेति। पुरातनैः प्राचीनैः कवीन्द्रैर्वाल्मीक्यादिभिर्महाकविभिः संयोजितो भक्तिरूपो वत्सो यैस्तादृशैः सद्भिः संयोजिता भक्तिरूपा ये वत्सास्तैः करणैरिति वा या भारती पुराणरामायणभारतादिरूपाणि चीराणि दुग्धानि दुदुहे दुग्धा सा भारती वाणी मम कामदुघा अभिलषितप्रपूरिका अस्तु भवतु मयापि सा भारती स्वाभिलषितं तत्काव्यं चीरं दोहनीया भवत्वित्यर्थः। अत्र पुराणादौ चीरारोपस्य भक्तौ च वत्सत्वारोपस्य शब्दत्वात् भारत्यां धेनुत्वारोपोऽर्थादवगन्तव्यस्तस्मादेकदेशविवर्त्तिरूपकमलङ्कारः। केषाञ्चिन्मते समासोक्त्यलङ्कारः अन्यापि धेनुवत्ससंयोगात् चीराणि दुह्यते कामधेनुश्च सेव्यमाना कामान् पूरयति। दुदुहे इति कर्म्मणि लिट्। येत्यत्र गौणं कर्म्म दुह्यादेरित्यनेनोक्तत्वात् प्रथमा। अत्रोपेन्द्रवज्रेन्द्रवज्रयोरुपजातिवृत्तम्। "उपेन्द्रवज्रा जतजास्ततो गौ। स्यादिन्द्रवज्रा ततजा स्ततो गौ। अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः" इति केदारभट्टः ॥ १२ ॥

अस्ति कादम्बसन्तानसन्तानकनवाङ्कुरः ।
कामदेवः क्षमादेव-कामधेनुर्जनेश्वरः ॥ १३ ॥
कामः पुरातनो येन नूतनेनाभिभूयते ।
भार्गवो राघवेणेव रामो रामेण सङ्गरे ॥ १४ ॥
दत्तयः कीर्त्तयश्चैव यदीयाः कर्णमार्गगाः ।
कान्ताभ्यश्च कविभ्यश्च कामदं यस्य दर्शनम् ॥ १५ ॥

सम्प्रत्येतत्काव्यनिर्माणाय दत्तप्रोत्साहं स्वोपजीव्यं कामदेवनृपतिं चतुर्विंशतिभिः श्लोकैः कविर्वर्णयति

अस्तीति । कामदेवः कामदेवनामा जनेश्वरो राजा अस्ति वर्त्तते । किम्भूतः कादम्बसन्तानः कादम्बवंश एव सन्तानको देवतरुभेदस्तस्य नवाङ्कुरः नवोत्थितोद्भिद्रूपः तथा क्षमादेवानां ब्राह्मणानां कामधेनुः कामपूरक इत्यर्थः । विशेषणद्वयेन कामदेवस्यातिवदान्यत्वं सूचितम् । अस्तीति वर्त्तमानप्रयोगस्तदानीं तस्य वर्तमानत्वसूचकः । निरङ्गमालारूपकमलङ्कारोऽयम् । "सन्तानः सन्ततौ गोत्रे स्यादपत्ये सुरद्रुमे" इति मेदिनी ॥ १३ ॥

काम इत्यादि । सङ्गरे सौन्दर्ययुद्धे नूतनेन येन कामेन राज्ञा पुरातनः प्राचीनः कामः कन्दर्पोऽभिभूयते सौन्दर्यातिशयात् जीयते । उपमिनोति सङ्गरे युद्धे राघवेण रघुकुलोत्पन्नेन नूतनेन रामेण दाशरथिना पुरातनो भार्गवो रामो जामदग्न्य इव यथा दाशरथिना रामेण परशुरामोऽभिभूतस्तथेत्यर्थः । कन्दर्पवदतिसुन्दर इत्यर्थः । अत्र मनुष्यमात्रस्य कन्दर्पपराभवकर्तृत्वासम्भवात् विम्बप्रतिविम्बभावे पर्यवसानं, तेनोपमापरिपुष्टोऽसम्भवद्वस्तुसम्बन्धनिबन्धनोनिदर्शनालङ्कारः । एवञ्चोपमानिदर्शनयोरङ्गाङ्गिभावः सङ्करोऽयम् । "सम्भवन् वस्तुसम्बन्धोऽसम्भवन्नपि कुत्रचित् । यत्र विम्बानुविम्बत्वं बोधयेत् सा निदर्शना" इति साहित्यदर्पणः ॥ १४ ॥

दत्तय इति । यदीया यत्सम्बन्धिन्यो दत्तयो दानानि कीर्त्तयश्च यशांसि च कर्णमार्गगाः कर्णोऽङ्गराजस्तत्पथानुसारिण्यः अङ्गराजस्येव यस्य दानानि

दधानोऽपि धनुर्विद्यावैशारद्यं किरीटिवत्।
अङ्गनापाङ्गवाणानां यः स्वयं याति लक्ष्यताम् ॥१६॥
यद्यशो राजहंसस्य ब्रह्माण्डं पञ्जरायते।
ग्रासक्षीरायते चास्य पुरस्तात् क्षीरनीरधिः ॥१७॥

यशांसि चेत्यर्थः, यद्वा कर्णमार्गगाः सर्व्वेषां श्रवणपथगामिन्यः सर्वैरपि यस्य दानानि यशांसि च श्रुतानीत्यर्थः। अथवा यदीया दत्तयः कर्णगाः राधेय-दानानुकारिण्यः। तथा कीर्तयश्च मार्गगाः मार्गान् मार्गोपलक्षितनानाजन-पदान् गच्छन्ति, नतु स्वविषय एव तिष्ठन्तीति तादृश्य इति क्रमेणान्वयः। तथा यस्य कामदेवस्य दर्शनं कान्ताभ्यः प्रमदाभ्यः कामं मदनोद्रेकं ददातीति तादृशं स्त्रीणां कामोद्दीपकमित्यर्थः। तथा कविभ्यः पण्डितेभ्यश्च कानम् अभिलषितं ददातीति तादृशं कवीनामभिलाषपूरकमित्यर्थः। अत्र दाना-दीनां प्रस्तुतमाहात्म्यप्रकाशकत्वेन प्रस्तुतत्वात् श्लेषमूलातिशयोक्त्यनुप्राणितः कर्णमार्गगत्वकामदत्वरूपैकधर्मसम्बन्धरूपस्तुल्ययोगितालङ्कारः ॥ १५ ॥

दधान इति। यः कामदेवः किरीटिवत् अर्जुनवत् धनुर्विद्यायां वैशारद्यं नैपुण्यं दधानोऽपि धारयन्नपि धनुर्विद्यायामर्जुन इव विशारदो भवन्नपीत्यर्थः। अङ्गनानां स्त्रीणां येऽपाङ्गाः कटाक्षास्ते एव वाणास्तेषां लक्ष्यतां शरव्यत्वं स्वयं आत्मनैव याति प्राप्नोति, अति मनोज्ञतया स्त्रीणामपाङ्गविक्षेपास्पदं भवती-त्यर्थः। अत्रार्जुनवत् धनुर्विद्यावैशारद्यं धारयन्नपि स्वयं स्त्रीणामपाङ्गवाण लक्ष्यत्वं यातीति क्रिययोर्विरुद्धत्वात् विरोधाभासालङ्कारः। अतिधनुर्द्धरो-रमणीनामत्याह्लादकश्चेति भावः। 'पार्थः किरीटी गाण्डीवी' इति त्रिकाण्ड-शेषः ॥ १६ ॥

यद्यश इति। ब्रह्माण्डं कर्त्तृ यद्यशो राजहंसस्य यस्य राज्ञो यश एव राजहंसस्तस्य पञ्जरायते पञ्जरं पक्षिरक्षणस्थानं तद्वदाचरति। तथा पुरस्ता-दग्रे वर्तमानः क्षीरनीरधिर्दुग्धसमुद्रश्चास्य यशोराजहंसस्य ग्रासक्षीरायते पानीयदुग्धमिवाचरति। अतिप्रभूततरं यस्य यश आसीदिति भावः। अन्यो

श्रीविद्याशोभिनो यस्य श्रीमुञ्जादियती भिदा ।
धारापतिरसावासीदयं तावद्धरापतिः ॥१८॥
धर्म्मार्थकामान् भजता यथावदनुबन्धिनः ।
अवन्ध्या येन नीयन्ते सज्जना इव वासराः ॥१९॥

राजहंसोऽपि पञ्जरमध्ये तिष्ठति तस्य पुरस्ताच्च पानार्थं दुग्धपात्रं तिष्ठति। यशो राजहंसस्येत्यत्र यशसि राजहंसारोपात् रूपकं, पञ्जरायते इत्यादौ चाय प्रत्ययस्यौपम्यप्रतिपादकत्वादुपमा एवञ्चात्रोपमानुप्राणितो रूपकालङ्कारः। यद्वा यशो राजहंस इवेति उपमिति समासे तु शुद्धोपमेयम्॥ १७॥

श्रीविद्येति। यस्य कामदेवस्य श्रीमुञ्जात् श्रीयुक्तमुञ्जनामक नृपतेरियती भिदा एतावान् भेदः। किम्भूतस्य श्रीर्लक्ष्मीः विद्या पाण्डित्यं ताभ्यां शोभत इति तादृशस्य, यद्वा श्रीविद्या राजराजेश्वरी देवी तया शोभते इति तस्य, श्रीविद्योपासनया लब्धसम्पत्तेरित्यर्थः। अथ च श्रीविद्योभयवतः श्रीमात्र-युक्ताद्भेदो युज्यत एव। भिदामेवोद्भेदयति असौ मुञ्जो धारापतिर्धारा नाम दक्षिणदेशप्रसिद्धा काचिन्नगरी तस्याः पतिः स्वामी आसीत्। अयं तावत् कामदेवः पुनर्धरायाः पृथिव्याः पतिः धारापतित्वं धरापतित्वञ्च द्वयोरसा-धारणधर्म्मद्वयमेव परस्परभेदकमित्यर्थः उक्तञ्च अयमेव हि भेदोभेदहेतुर्वा यद्विरुद्धधर्माध्यास इति। मुञ्जापेक्षयास्यातिसमृद्धं राज्यमिति भावः। मुञ्जो हि किल सिन्धूलनृपतेर्भ्राता भोजराजस्य पितृव्यो धारापुरीपतिरतिमहान् नृपतिरासीदिति श्रूयते। अयं ततोऽप्यधिकतर इति उपमानादुपमेयस्या-धिक्यरूपो व्यतिरेकालङ्कारः। धारानगरी भोजवंश्यानां राजधानीति प्रसिद्धिः। उक्तञ्च केनापि अथ धारानगरे न कोपि मूर्खो निवसति। क्रमेण पञ्चशतानि सेवन्ते विदुषां श्रीभोजम्। वररुचिसुबन्धुबाणमयूरवामदेव हरिवंश-शङ्कर-कलिङ्ग-कर्पूर-विनायक-मदनविद्याविनोदकोकिलतारेन्द्रप्रमुखा इति॥ १८॥

धर्म्मार्थ इति। यथावत् यथायथम् अनुबन्धिन उत्पद्यमानान् परस्पर-मविरोधितया सम्पद्यमानानित्यर्थः। धर्म्मार्थकामान् त्रिवर्गान् भजता

**दूषणध्वंसदक्षेण पुण्यसेतुप्रवर्त्तिना।**
**रामेणेव कृतं येन जनस्थानमकण्टकम् ॥२०॥**

सेवमानेन येन कामदेवेन वासरादिवसाः अवन्ध्याः सफलाः कृत्वा नीयन्ते याप्यन्ते प्रतिदिनमेव यस्य धर्म्मार्थकामा उत्पद्यन्ते इत्यर्थः। उपमिनोति सज्जना इवेति यथा त्रिवर्गपरायणैर्जनैः सज्जना अवन्ध्या नीयन्ते तथेत्यर्थः। त्रिवर्गपरायणा हि सज्जनान् प्राप्य तेभ्यः स्वाभीष्टान् धर्म्मादीनेवार्जयन्ति नतु तान् वृथा परित्यजन्ति। अत्रावन्ध्यतानयनं प्रति धर्मादिभजनस्य हेतुतयोपन्यासात् काव्यलिङ्गालङ्कारः तन्मूला च सज्जना इवेत्युपमा तस्मात्तयोरङ्गाङ्गिभावसङ्करोऽयम्। "हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं प्रचक्षते" इति साहित्यदर्पणः ॥ १९ ॥

दूषणेति। येन कामदेवेन राज्ञा जनस्थानं जनपदः अकण्टकं क्षुद्रशत्रुरहितं कृतं शत्रून् विनाश्य जनपदाः स्वास्थ्यं प्रापिता इत्यर्थः। उपमिनोति रामेणेवेति यथा रामेण जनस्थानं दण्डकारण्यं तन्निकटवर्त्ती स्थानविशेषो वा राक्षससेनाविनाशनेनाकण्टकं कृतं तथेत्यर्थः। तौ युगपद्विनष्टि, किम्भूतेन दूषणस्य दोषस्य ध्वंसे नाशे दक्षेण निपुणेन पक्षे दूषणस्य राक्षसविशेषस्य ध्वंसे दक्षेण तथा पुण्यसेतुप्रवर्त्तिना धर्ममर्य्यादास्थापकेन पुण्यजनकसेतुकारिणा वा। लोकसञ्चरणाय तेन बहवः सेतवः कृता इत्यर्थः। पक्षे लङ्कागमनार्थं समुद्रे पुण्यसेतोः सुन्दरसेतोः प्रवर्त्तकेन। रामस्येव यस्य चरितानि लोकप्रतिष्ठितानीति भावः। अत्र दूषणादिशब्दानां श्लिष्टत्वात् श्लेषमूलोपमालङ्कारः। "पुण्यं त्रिषु मनोज्ञे स्यात् क्लीवं सुकृतधर्म्मयोः" इति विश्वः। जनस्थानं दण्डकारण्यमिति जटाधरः। इक्ष्वाकुपुत्रं प्रति शुक्रशापमुपक्रम्य "इत्युक्त्वा क्रोधसन्तप्तस्तदाश्रमनिवासिनम्। जनं जनपदस्यान्ते स्थीयतामित्यवोचत ॥ सप्ताहाद्भस्मसाद्भूतः स चापि ब्रह्मतेजसा। तस्य दण्डस्य विषयो विन्ध्यशैलस्य सानुषु ॥ ततः प्रभृति काकुत्स्थ दण्डकारण्यमुच्यते। तपस्विनः स्थिता यत्र तज्जनस्थानमुच्यते ॥" इति रामायणम्। कण्टकः क्षुद्रवैरिणि। "वेणौ द्रुमाङ्गे रोमाञ्चे" इति हेमचन्द्रः ॥ २० ॥

भूरिक्षमाभारभृता विजयार्ज्जितसम्पदा ।
भूमेरुत्खातशल्येन यस्तुल्यो धर्म्मजन्मना ॥२१॥

यथा सर्व्वेषु देवेषु कामदेवो जगत्प्रियः ।
तथा मनुष्यदेवेषु कामदेवो जगत्प्रियः ॥२२॥

आदित्यस्यान्ववायोजयति रघुपतेर्जन्मनोज्जृम्भितश्री-
स्तत्साम्यं सोमवंशः श्रयति सुरभितः पाण्डवानां यशोभिः ।
धत्ते तत्प्रौढिमद्य स्मरहरधरणीसम्भवस्यान्ववायो
यस्यालङ्कारभावं भजति कृतधियां कामदः कामदेवः ॥२३

भूरीति। यः कामदेवो धर्म्मजन्मना युधिष्ठिरेण तुल्यः सदृशः। किम्भूतेन भूरिर्महान् यः क्षमाभारः शान्त्याधिक्यं पृथिवीभारो वा तं बिभर्त्तीति तादृशेन कामदेवोऽपि तादृशः, पुनः कीदृशेन विजयेनार्जुनेन अर्जिता सम्पत् यस्य स तथा तादृशेन। अयमपि विजयेन शत्रुपराजयेनार्जितसम्पत्तिः। पुनः कीदृशेन भूमेः सकाशात् उत्खातोयुद्धे विनाशनेन स्वर्गं नीतः शल्यो मद्राधिपो येन स तथा तादृशेन। अयमपि भूमेरुत्खात उद्धृतः शल्योऽङ्गविद्धशस्त्रादिकं तद्वत् पीड़ाकारी शत्रुर्येन तादृशः। अस्मिन् पक्षे भूमेरिति षष्ठ्यन्तं पदं शल्य-शब्दश्च गौणः। उपमेयमार्थी। क्षमा शान्तौ क्षिताविति। विजयो विजये पार्थे विमाने इति। शल्यः स्यान्मदनद्रुमे। "नृपभेदे श्वाविधि च सीम्नि शस्त्रशलाकयाः" इति च हेमचन्द्रः ॥ २१ ॥

यथेति। यथा सर्व्वेषु देवेषु मध्ये कामदेवः कन्दर्प एव जगत्प्रियः अति-सुन्दरदेहत्वात् जगतां सन्तोषजनकः। तथा मनुष्यदेवेषु राजसु मध्ये अयं कामदेव एव जगत्प्रियः अत्राप्युपमा ॥ २२ ॥

आदित्यस्येति। आदित्यस्य सूर्य्यस्यान्ववायो वंशो जयति सर्वोत्कृष्टतया वर्त्तते किम्भूतः रघुपतेः श्रीरामचन्द्रस्य जन्मना आविर्भावेन उज्जृम्भिता वर्द्धिता श्रीः शोभा यस्य तादृशः तया सोमवंशश्चन्द्रवंशोऽपि तत्साम्यं सूर्य्यवंश-

केचिद्दानेषु वीराः समरभुवि पुनः केचिदन्ये दयायां
कर्णाद्याः पार्थमुख्याः खचरपतिमुखाः पूर्वमासन् युगेषु
तेषां तेषाञ्च तेषामपि वहति धुरं साम्प्रतं तावदस्या--
मेकः श्रीकामनामा जलनिधिलहरी स्रग्धरायां धरायाम्
॥ २४ ॥

तुल्यतां श्रयति धारयति किम्भूतः पाण्डवानां युधिष्ठिरादीनां यशोभिः कीर्त्तिभिः सुरभितः प्रसिद्धिं नीतः। अद्य सम्प्रति स्मरहरधरणीसम्भवोऽन्ववायोऽपि कादम्बवंशोऽपि तयोः सूर्य्यवंशसोमवंशयोः प्रौढ़िम् औन्नत्यं तद्वदुत्कर्षमित्यर्थः, धत्ते धारयति यस्यान्ववायस्यायं कामदेवः अलङ्कारभावं मण्डनत्वं भजति धारयति किम्भूतः कृतधियां पण्डितानां कामदोऽभिलाषपूरकः। अन्यनिष्ठायाः प्रौढ़ेरन्यस्य धारणमसम्भवद्बिम्बप्रतिविम्बत्वे पर्य्यवस्यति तेनात्र निदर्शनालङ्कारः "सम्भवन् वस्तुसम्बन्धोऽसम्भवन्नपि कुत्रचित्। यत्र विम्बानुविम्बत्वं बोधयेत् सा निदर्शना॥" इति लक्षणात्। स्मरहरधरणीसम्भव इति धरणीत्युपनामकः स्मरहरनामा कश्चिदेतस्य प्राक्तनपुरुष आसीदिति केचित्। स्मरहर इत्यस्य कश्चित् पूर्वपुरुषः तत्पत्नी च धरणीति ताभ्यां सम्भवोयस्येत्यन्ये। अपरे तु स्मरहर धरणी काशी तस्यां सम्भवो यस्य तादृशः कादम्बवंशस्य प्रथमं काश्यामेवाविर्भावादिति वदन्ति। स्रग्धरावृत्तमिदम्। "म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुतां स्रग्धरेयं प्रसिद्ध" इति लक्षणात्॥ २३॥

केचिदिति। केचित् कर्णाद्या राधेयप्रभृतयो दानेषु वीरा दानोत्साहवन्तः। एवं केचिच्च पार्थमुख्या अर्ज्जुनप्रभृतयः पुनः समरभुवि रणभूमौ वीराः तथा अन्ये: खचरपतिमुखाजीमूतवाहनादयश्च दयायां वीराः एते पूर्वं युगेषु द्वापरादिषु आसन् वभूवुः नाधुना सन्तीत्यर्थः साम्प्रतमिदानीं पुनरेकः केवलः श्रीकामनामा श्रीकामदेवनृप एव अस्यां धरायां पृथिव्यां तावत् साकल्येन तेषां दानवीराणां कर्णादीनां तेषाञ्च युद्धवीराणां पार्थादीनां तेषामपि दयावीराणां जीमूतवाहनादीनाञ्च धुरं भारं साधर्म्यमित्यर्थः

आनेता मध्यदेशात् प्रवचनविदुषां सोमपां ब्राह्मणाना-
मारोढ़ा मर्त्यमूर्त्या सुरपतिसदसो मण्डनं मानवत्याः ।
जेता भूमेर्जयन्तीपुरपुरमथनश्रीपदाम्भोजभृङ्गः
सोऽपि क्ष्मापश्शिवोऽत्र स्वकुलकुलगिरिं योऽनुलेभे तपोभिः ॥ २५ ॥

वहति धारयति एक एवायं दानवीरो युद्धवीरो दयावीरश्चेत्यर्थः । किम्भूतायां धरायां जलनिधेः समुद्रस्य या लहरीस्रक् तरङ्गमाला तां धरति धारयतीति तादृश्यां समुद्रपर्य्यन्तायामित्यर्थः । जीमूतवाहनस्य विद्याधरचक्रवर्त्तित्वात् खचरपतित्वं स दयावीर एव नागानन्दनाटकादौ तथा दर्शनात् अत्र कर्णादीनां धुरं वहतीति निदर्शनालङ्कारेण एकैकं दानवीरादिरसावलम्बिनः कर्णादीनपेक्ष्य दानादि त्रितयाश्रयत्वेन कामदेवस्याधिक्यप्रतीतेर्व्यतिरेकालङ्कारो व्यज्यते । "उत्तमप्रकृतिर्वीर उत्साहस्थायिभावकः इत्युपक्रम्य स च दानधर्म्मयुद्धैर्दयया च समन्वितश्चतुर्धा स्यात्" इति दर्पणः क्वचिद्वीरा इत्यत्र धीरा इति पाठः स न मनोरमः । स्रग्धरावृत्तमिदम् ॥ २४ ॥

आनेतेति । जयन्तीपुरं स्वराजधानीं प्राच्यो नगरविशेषस्तत्र यः पुरमथनो महादेवस्तस्य यत् श्रीयुक्तं पदाम्भोजं चरणपद्मं तत्र भृङ्गो भ्रमर इव सततभगवच्चरणारविन्दचिन्तनानुरक्त इत्यर्थः तादृशः, सोऽपि क्ष्मापः पृथिवीपालः कामदेवश्शिवोऽत्र साक्षान्महादेवस्वरूपः व्यस्तरूपकं निरन्तरं शिवध्यानेन शिवत्वं प्राप्त इत्यर्थः । शिवत्वमेव घटयति यः क्ष्मापस्तपोभिर्हेतुभिः स्वकुलं स्ववंश एव कुलगिरिं विस्तृतत्वात् पवित्रत्वाच्च हिमालयस्तम् अनुलेभेप्राप्तवान् । शिवोऽपि सतीवियोगानन्तरं तपस्यार्थं हिमाचलं प्राप्तवान् । किम्भूतः मध्यदेशात् हिमवद्विन्ध्ययोर्मध्यवर्त्तिदेशात् प्रवचनविदुषां वेदज्ञानां सोमपां सोमयागादौ सोमलतारसपायिनां ब्राह्मणानाम् आनेता यज्ञार्थं मध्यदेशतच्छान्दसब्राह्मणाम् स्वराजधानीं जयन्तीपुरमानीतवानित्यर्थः अतएवेयमेव यज्ञार्थं मध्यदेशात् पञ्चानां ब्राह्मणानामानेतारम् आदिशूरं नृपतिं केचित्

न्यञ्चत्काञ्चीमनोज्ञां सुललितमधुराः कुन्तलैरुल्लसन्त्यः
पुष्णान्त्यो हारशोभां धृतकरकटकाः कान्तिमद्वेदिमध्याः।
अङ्गश्रीभङ्गिभाजः परिमिलदलकाः प्रोल्लसत्कामरूपाः
सेवन्ते तं समन्तादनुदिनमबलाश्रेणयः क्षौणयश्च ॥२६॥

प्रचक्षते, शिवोऽपि याज्ञिकब्राह्मणानाम् आ सम्यक् नेता नायकः यज्ञफल-दातृत्वात्, अतएव पुष्पदन्तः क्रतुषु फलदानप्रतिभुवमिति। यद्वा मध्यदेशात् नभोभागात् ब्राह्मणानां सप्तर्षीणाम् आनेता पार्वतीविवाहार्थमानीतवान्। तथा मर्त्यमूर्त्त्या मानवशरीरेणैव सुरपतिसदस इन्द्रसभायाः आरोढ़ा आरोहणकर्त्ता मन्त्रसिद्धत्वादव्याहतगतिकतया कामदेव इन्द्रलोकं गच्छतीति तात्कालिकानां किम्बदन्ती। शिवोऽपि इन्द्रेणावाहितस्तत्सभां गच्छत्येव। तथा मानवती तन्नाम्नी काचिन्नगरी तस्या मण्डनं भूषणं, मानवती कामदेवस्य पत्नीति केचित्, शिवोऽपि मानवत्यामनस्विन्याः पार्वत्या इत्यर्थः, मण्डनमलङ्कारकः। तथा भूमेः पृथिव्या जेता विपक्षविनाशनेनाधिकर्त्ता शिवोऽपि भूमिं स्वमनसि आस्पदं करोतीति भूम् भूमेर्णिङ् क्विप् तादृशो यज्ञः कामस्तस्य जेता भूना महांश्चासाविश्चेति भूमैः तस्य भूमेर्जेतेति वा। सोमपामिति धातोराल्लुक् शसाद्यचोत्याकारलोपः। "हिमवद्विन्ध्ययोर्मध्यं यत् प्राग्विनशनादपि। प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्त्तितः" इति मनुः। "विनशनात् सरस्वत्यन्तर्धानदेशात्" इति कुल्लूकभट्टः। "स्यात् प्रवचनमागमे" इति हेमचन्द्रः। सग्धरावृत्तमिदम् ॥ २५ ॥

न्यञ्चदिति। अबलाश्रेणयः कामिनीपङ्क्तयस्तथा क्षौणयश्च भूमयश्च समन्तात् सर्वतोऽनुदिनं प्रतिदिनं तं कामदेवरूपं सेवन्ते भजन्ते कामिन्य इव भूमयोऽपि तस्य वशवर्त्तिन्य इति भावः। एकोक्त्या द्वयोर्विशेषणान्याह किम्भूताः न्यञ्चन्ती किञ्चिदधो लम्बमाना या काञ्ची नितम्बाभरणविशेषस्तया मनोज्ञा मनोहारिण्यः पक्षे न्यञ्चन्ती दक्षिणदेशीयत्वान्निम्नस्थलवर्त्तिनी या काञ्ची नगरीविशेषस्तया मनोज्ञाः। तथा सुललितेन शोभनविलासेन

कूर्माकारं चरणयुगलं धूतदिग्दन्तिशुण्डा
दण्डावूरू भुजयुगमपि व्यक्तनागेन्द्रशोभम् ।

मधुरामनोहराः पक्षे सुललिता शोभमाना मधुरा मथुरापरनामा नगरी-विशेषो यासु तादृश्यः । तथा कुन्तलैः केशपाशैरुल्लसन्त्यः शोभमानाः पक्षे कुन्तलैर्देशविशेषैरुल्लसन्त्यः । तथा हारेण मुक्तावल्या कृता शोभा सौन्दर्यं हारशोभा तां पुष्णन्त्यो धारयन्त्यः पक्षे हारेण युद्धस्थलेन देशविशेषेण वा कृतां शोभां पुष्णन्त्यः । तथा धृतं करेण कटकं वलयो याभि स्ताः पक्षे धृतो गृहीतः करोराजग्राह्यभागो येभ्यः तादृशाः कटकाः पर्वतनितम्बभागा यासु ताः कटकः कटकनामक उत्कलदेशविशेषो राजधानी वा । तथा कान्तिमत् सुन्दरं वेदिवत् यज्ञवेदिविशेषस्येव मध्यं मध्यभागोयासां ताः पक्षे वेदिः परिष्कृता भूमिर्मध्यो मध्यदेशः कान्तिमन्तौ वेदिमध्यौ यासु ताः । तथा अङ्गानां मुखाद्यवयवानां या श्रीः शोभा तस्याभङ्गिं विशेषं भजन्त इति तादृश्यः पक्षे अङ्गैर्देशविशेषैः श्रीभङ्गिभाजः । तथा परिमिलन्तोऽलका चूर्णकुन्तला यासां ताः पक्षे परिमिलन्ती अलका कुवेरपुरी यासु ताः । तथा प्रोल्लसन् प्रादुर्भवन् कामोयस्मात् तादृशं रूपं सौन्दर्यं यासां ताः पक्षे प्रोल्लसन् कामरूपः कामाचलोपलक्षितः प्राग्ज्योतिषापरनामको देशविशेषो यासु ताः । अत्र अवलाश्रेणीनां क्षौणीनाञ्च प्रस्तुतप्रकर्षकृतया प्रस्तुतत्वादेकधर्म्माभिसम्बन्धाच्च श्लेषानुप्राणितमतुल्ययोगितालङ्कारः । "काञ्ची स्यान्मेखलादाम्नि प्रभेदे नगरस्य च" इति मधुरा शतपुष्पायां मिश्रेयानगरीभिदोः, इति 'कुन्तलश्चषके बाले जवे पुंभूम्नि नीवृतीति,' हारो मुक्तावली युधि' इति 'कटकोऽस्त्री नितम्बेऽद्रेर्दन्तिनां दन्तमण्डले सामुद्रलवणे राजधानीवलययोरपीति' 'अङ्गं गात्रे प्रतीकोपाययोः पुंभूम्नि नीवृतीति' 'अलका कुवेर पुर्य्यामस्त्रियां चूर्णकुन्तले इति च मेदिनी । स्रग्धरावृत्तम् ॥ २६ ॥

कूर्म्मेति । प्राय उत्प्रेक्षे त्रिभुवनसृजा ब्रह्मणा पृथ्वीधरणविषये निरालम्बायाः पृथिव्याधारणकार्य्ये तत्समर्थान् पृथिवीधारणयोग्यान् पदार्थान् वस्तूनि एकीकृत्य एकत्र नीत्वा यस्य कामदेवस्य मूर्तिः शरीरं निर्मिता सृष्टा

प्रायः पृथ्वीधरणविषये तत्समर्थान् पदार्थान्
एकीकृत्य त्रिभुवनसृजा निर्म्मिता यस्य मूर्त्तिः ॥२७॥

कस्त्राता कामदेवः समरविजयिनां कोऽग्रणीः कामदेवः
कस्त्यागी कामदेवः सरसकविगिरां कः पदं कामदेवः।

ब्रह्माहि पृथिवीं निरालम्बां निर्म्माय तद्धारणोचितान् कूर्म्मादीन् निर्म्मायापि तेषां बहुत्वादपरितोषेण ततः सर्व्वमेकीकृत्य तद्योग्यामेकामेव यस्य मूर्तिं किं निर्म्मितवानित्यर्थः। तथाहि यस्य चरणयुगलं कूर्म्माकारं मध्योन्नतत्वात् कूर्म्मशरीरसदृशं कूर्म्मेणापि पृथिवी धार्यते, तथा यस्य ऊरू धृतः कल्पितः स्थूलत्वात् सदृशीकृत इत्यर्थः दिग्दन्तिनां दिग्गजानां शुण्डादण्डो दण्डाकारा शुण्डा याभ्यां तादृशौ दिग्दन्तिनोऽपि पृथिवीं शुण्डाभिर्धारयन्ति। धृतेत्यत्र वृत्तेति पाठे शुण्डादण्डाविति व्यस्तरूपकं ततः कर्म्मधारयः तथा यस्य भुज-युगमपि बाहुद्वयमपि व्यक्ता आजानुलम्बमानत्वात् प्रकटीभूता नागेन्द्रस्य सर्पराजस्य शोभा सौन्दर्य्यं यत्र तादृशं सर्पराजोऽपि पृथिवीं धारयति दुर्वृत्त-जनदमनादिना कृत लाघवतया कामदेवोऽपि कूर्म्मादिवत् पृथिवीभार-ग्राहीति भावः। अत्र वाक्यार्थस्य सम्भाव्यमानत्वात् प्रायःपदयोगाच्च उत्-प्रेक्षालङ्कारः। व्यक्तनागेन्द्रशोभमित्यत्र व्यक्तनागेन्द्रस्य प्रकटहस्तिनः शोभा यत्रेति कस्यचित् टीकाकारस्य व्याख्यानं कस्य न वा हास्यमुल्लासयति। मन्दाक्रान्तावृत्तमिदं "मन्दाक्रान्ताम्बुधिरसनगैर्म्मोभनौ तौ गयुग्मम्"इति लक्षणात् ॥ २७ ॥

कस्त्रातेति। एवमीदृशानां प्रश्नानां रामवत् राम इव एकः कामदेव एव प्रतिवचनं प्रत्युत्तरविषयः नन्वितरे कामवदिति पाठे कन्दर्प इवेत्यर्थः। तादृश-प्रश्नप्रतिवचनानां प्रकारं दर्शयति कस्त्रातेत्यादि। त्राता प्रजानां साधुरक्षिता कः उत्तरमाह कामदेव इति कामदेवनृप एव विलक्षणप्रजारक्षितेत्यर्थः। एवं सर्वत्र समरविजयिनां युद्धे लब्धजयानां अग्रणीः श्रेष्ठः कः, तथा त्यागी दाता

कः सेव्यः कामदेवः श्रितभरणविधौ कः कृती कामदेवः
प्रश्नानामेवमेकः प्रतिवचनमहो रामवत् कामदेवः ॥२८॥

जित्वा शत्रून् स्वमभिविशतोधाम हर्म्म्याग्रलग्ना
भावोद्भेदाद्गलितगतयो लोलमीनायताच्यः।
प्रान्तप्रेङ्खच्छफरकनकस्तम्भशोभैर्निजाङ्गैः
सीमन्तिन्यो विदधति दृढं यस्य मीनध्वजत्वम् ॥२६॥

कः, तथा सरसकविगिरां रसवत्काव्यानां पदं स्थानं कः काव्यरसास्वादे निरूपमः सामाजिकः क इत्यर्थः, तथा सेव्यः जीविकार्थमुपास्यः कः, तथा श्रितानाम् अनुगतानां भरणविधौ पालनकर्म्मणि कृती कुशलः कः सर्वलोत्तरं कामदेव इति। अत्र वाक्यानां प्रश्नोत्तररूपत्वात् परिसंख्यालङ्कारः 'किञ्चित् पृष्टमपृष्टं वा कथितं यत् प्रकल्पते तादृगन्य व्यपोहाय परिसंख्या तु सा स्मृता' इति लक्षणात्। रामवदित्यत्र च आर्थी उपमा एवञ्च द्वयोः संसृष्टिः। वातेति साध्वर्थे वृत्ति। स्रग्धरावृत्तम् ॥ २८ ॥

जित्वेति। सीमन्तिन्यः स्त्रियो निजाङ्गैः स्वकीयावयवैः करणैः यस्य राज्ञो मीनध्वजत्वं मीनकेतनत्वं कन्दर्पत्वमित्यर्थः दृढमतिशयेन विदधति व्यक्तीकुर्वन्ति, किम्भूतस्य शत्रून् जित्वा स्वं स्वकीयं धाम गृहम् अभिविशतः प्रविशतः, किम्भूताः सीमन्तिन्यः हर्म्म्यस्य प्रासादस्याग्रे उपरि लग्नाः स्थिताः, तथा हर्षाधिक्यात् भावस्य स्तम्भाख्य सात्विकभावस्य उद्भेदादुदयात् गलिता विनष्टा गतिर्गमनं यासां ताः तथा, लोलं चञ्चलं मीनवत् आयतं विस्तृतम् अक्षि चक्षुर्यासां ताः लोलमीनवदायतमक्षि यासामिति वा, किम्भूतैर्निजाङ्गैः प्रान्ते समीपे प्रेङ्खंश्चलन् शफरीमत्स्यविशेषो यत्र तादृशो यः कनकस्तम्भ कन्दर्परथोपरिवर्तमाना सौवर्णी स्थूणा तस्येव शोभा सौन्दर्य्यं येषाम् तादृशैः अयम्भावः कन्दर्पस्य रथोपरि समीनः कनकस्तम्भो वर्तते येन च स मीनध्वजत्वेन व्यपदिश्यते अयमपि पुरप्रवेशकाले उपरिस्थाभिर्गौराङ्गत्वात् कनकस्तम्भायमानाङ्गयष्टिभिः सत्वोदयान्निश्चलाभिः शफरायमाणलोलनयनाभिश्च स्त्रीभिः

योषावेशो विषधरगृहं केशमोचोऽम्बुगर्भः
शष्पग्रासः शवरशिविरं शम्बरत्वङ्निचोलः।
पाणेः शाखाकवलनविधिर्धारणं कण्ठदाम्नां
यच्छत्रूणां भवति भुवने जीवनोपायवर्गः ॥३०॥

कृत्वा मीनध्वजत्वं प्राप्त इति। अत्रान्यस्य धर्म्मं कथमन्यो वहत्विति असम्बन्धे सम्बन्ध कल्पनरूपातिशयोक्त्यलङ्कारस्तेन च कामदेवः कामदेव इवेत्युपमा गुणीभूततया व्यज्यते। मन्दाक्रान्तावृत्तम् ॥ २९ ॥

योषेति। भुवने लोके यच्छत्रूणां यस्य कामदेवस्य रिपुणाम् एतत् सर्वं जीवनोपायवर्गः प्राणरक्षणकारणकलापः, के ते उपाया इत्याह योषावेशः स्त्रीवेशधारित्वं स्त्रीणामबध्यत्वात्, तथा विषधरगृहं पातालं विवरप्रवेश इत्यर्थः तत्रापि शत्रुगमनासम्भवेन विनाशाभावात्, तथा केशमोचः केशानां मुण्डनं मुण्डव्रतधारणमित्यर्थः मुण्डपतिनामबध्यत्वात्। तथा अम्बुगर्भः जलमध्यं जलमध्यनिमज्जनमित्यर्थः तथात्वे शत्रूणामलक्षित्वेन विनाशासम्भवात्। तथा शष्पस्य तृणस्य ग्रासः कवलीकरणं न मां विनाशय दन्ते तृणं करोमीत्युक्त्वा मुखे तृणार्पणमित्यर्थः तथाभूतानामप्यबध्यत्वात्। तथा शवरशिविरं शवराश्चाण्डालभेदाः आरण्यास्तेषां शिबिरं गृहं पलाय्य शवरशिविरं प्रविश्यात्मगोपनमित्यर्थः तादृशानामप्यलक्षितत्वेन विनाशासम्भवात्। तथा शम्बरत्वङ्निचोलः शम्बरो मृगविशेषस्तस्य त्वक् चर्म्म तद्रूपोनिचोल आच्छादनवस्त्रं मृगाजिनप्रावृताङ्गानां तपस्विनां वेशधारणमित्यर्थः तपस्विनामबध्यत्वात्। तथा पाणेः करस्य शाखा अङ्गुल्यस्तासां कवलनविधिः मुखाभ्यन्तरे प्रवेशनं मुखाभ्यन्तरेऽङ्गुलिप्रवेशनं हि स्वस्य रिपोरधीनत्वं ज्ञापयति यद्वा कवलनविधिः सङ्कोचकरणम् अञ्जलिकरणमिति यावत् कृताञ्जलिर्हि शत्रुभिर्न हन्यते। तथा कण्ठदाम्नां धारणं गले रज्जूनां स्थापनम् अपराधमार्ज्जनाय कण्ठधृतरज्जवो हि जयिभिर्न हन्यन्ते एतेनास्यातितरां पराक्रमित्वं ध्वनितम्। "चण्डालभेदे पानीये शवरश्चण्डिकापतौ" इति विश्वः। "शम्बरं सलिले पुंसि मृगदैत्यविशेषयोः" इति मेदिनी। मन्दाक्रान्ता वृत्तम् ॥ ३० ॥

विशिष्टगीता धृतवंशदीप्तिः
श्रुतिप्रतिष्ठा पुरुषार्थसूतिः।
सन्मार्गविस्तारवती सुजाति-
र्यं भारतश्रीर्भजतेऽभिरामा ॥ ३१ ॥

विशिष्टेति। भारतस्य भारतवर्षस्य श्रीर्लक्ष्मीर्यं नृपं भजते आश्रयति, किम्भूता विशिष्टैर्देवादिभिर्गीता कर्मभूमित्वात् प्रशंसिता। तथा च विष्णुपुराणम्। "अत्रापि भारतं श्रेष्ठं जम्बुद्वीपे महामुने। यतो हि कर्मभूरेषा ह्यतोन्या भोगभूमयः। अत्र जन्म सहस्राणां सहस्रैरपि सत्तम। कदाचिल्लभते जन्तुर्मानुष्यं पुण्य सञ्चयात्। गायन्ति देवाः किल गीतकानि धन्यास्तु ते भारतभूमि भागे। स्वर्गापवर्गास्पदमार्गभूते भवन्ति भूयः पुरुषाः सुरत्वात्।" सुरत्वं प्राप्तानस्मानपेक्ष्य भूयोऽधिकं धन्याः सुकृतिनः इत्यर्थः इति श्रीधरस्वामिव्याख्यानञ्च। तथा धृता वंशैर्वेणुभिः कृत्वाः दीप्तिः शोभा यया तादृशी, तथा श्रुतौ वेदे प्रतिष्ठा कर्मक्षेत्रत्वात् प्रशंसा यस्याः सा तथा, पुरुषार्थानां धर्म्मार्थकाममोक्षाणां सूतिरुत्पत्तिर्यतस्तादृशी अत्रापि पूर्वोक्त एव हेतुः, तथा सतां शोभनानां मार्गाणां वर्त्मनां योविस्तारः स विद्यते यस्यां तादृशी, तथा सुजातिः शोभना जातयो ब्राह्मणादिवर्णा यत्र तादृशी, तथा अभिरामा मनोज्ञा यद्वा रामं भार्गवं दाशरथिं वा अभिगतेत्यभिरामा। "द्वितीययात्यादेः क्रान्तादौ" इति तत्पुरुषः पूर्व्वं रामादिभिरुपभुक्तेत्यर्थः। अथ च भारतस्य व्यासप्रणीतेतिहासविशेषस्य श्रीर्भारती लक्ष्मीर्यं भजते तस्य भारतानुरक्तत्वात् सापि विशिष्टगीता विशिष्टा उपनिषत्त्वात् पर्यप्रकाशनात् मनोज्ञा गीता भीष्मपर्व्वान्तर्गतभागविशेषो यस्यास्तादृशी तथा धृता वंशस्यान्ववायस्य वंशानुचरितस्य वा दीप्तिः प्रकाशो यया तादृशी तथा श्रुतेर्वेदस्येव प्रतिष्ठा प्रामाण्यं यस्याः सा यद्वा श्रुत्या श्रवणेन्द्रियेण प्रतिष्ठा ग्रहणं यस्याः सा भारतस्य शब्दरूपत्वात् किंवा श्रुतेर्वेदस्य प्रतिष्ठा तात्पर्य्यं यत्र तादृशी अतएवोक्तं भारतव्यपदेशेन ह्याम्नायार्थः प्रदर्शित इति। तथा पुरुषार्थस्य वर्ग चतुष्टयस्य सूतिर्यतः सा भारतं हि श्रूयमाणं पाठ्यमानं वा चतुर्वर्गं साध-

छत्रचन्द्रमसि यस्य निर्म्मले
लोकतापमपहन्तुमुद्यते।
कुटमलीभवति वैरिभूभृता
मातपत्रशतपत्रसन्ततिः ॥ ३२ ॥

यति, तथा सन्मार्गविस्तारवती शिष्टव्यवहारप्रकाशकारिणी, तथा सुजातिः शोभना जातयः छदांसि यत्र सा, तथा अभिरामा इतिहासादिभिः सर्वेषां मनोज्ञा। भारतश्रीर्भरतन्त्रपश्रीयं भजत इत्यपि केचिद्याचक्षते भाः कान्तिः रतं सम्भोगस्ताभ्यां युक्ता श्रीरित्यपरे। शब्दश्लेषोऽयम्। 'वंशः सङ्केऽन्वये वेणौ' इति 'जातिः सामान्यगोत्रयोः मालत्यामामलक्याञ्च "चुल्लां कम्पिल्ल-जन्मनोः जातीफले छन्दसि च" इति च हैमचन्द्रः। लक्ष्मीसरस्वतीधात्री त्रिवर्ग-सम्पद्विभूति शोभासु। उपकरणवेशरचनाविधासु च श्रीरिति प्रथितेति व्याडिः। वृत्तमिदमिन्द्रवज्रोपेन्द्रवज्रयोरुपजातिः यदाह केदारभट्टः 'स्यादिन्द्रवज्रायतजास्ततोगौः। उपेन्द्रवज्रा जतजास्ततोगौः। अनन्तरोदी-रितिलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः' इति ॥ ३१ ॥

छत्रेति। यस्य नृपस्य निर्म्मले विशदे छत्रचन्द्रमसि सितातपत्र रूपे चन्द्रे लोकानां तापं सन्तापम् अथच उपद्रवम् अपहन्तुम् उद्यते उद्युक्ते सति वैरि-भूभृतां विपक्षनृपतीनाम् आतपत्राणि श्वेतछत्राण्येव शतपत्राणि पद्मानि तेषां सन्ततिः समूहः कुड्मलीभवति सङ्कोचं प्राप्नोति। कामदेवे राजनि सति सर्वे तद्विपक्षा भ्रष्टराज्या जाता इति भावः। चन्द्रोदये हि पद्मानां मुकुली-भावो युज्यत एव। अत्र तापहननस्य मुकुलीभावस्य च उपमान एव सङ्गतत्वा-द्रूपकालङ्कारः, एतेन छत्रं चन्द्रमा इवेति केषाञ्चिदुपमितिसमासकरणमबोध विलसितं यत्र ह्युपमेय एव साधारणधर्म्मस्यान्वयस्तत्रैव मुखपद्मं चुम्बामीत्यादौ उपमा न तु मुखपद्मं विकाशत इत्यादौ। अत्र हि दलविभागरूपस्य विकाशस्य उपमानेनैवान्वयाद्रूपकमेव। रथोद्धता वृत्तं "रान्नराविह रथोद्धता लगौ" इति लक्षणात्। "सहस्रपत्रं कमलं शतपत्रं कुशेशयम्" इत्यमरः ॥३२॥

औदार्ये रघुनाथधर्मसुतयोस्तत्सोदराणां पुनः
सौभ्रात्रे पतिदेवताव्रतविधौ पृथ्वीसुताकृष्णयोः।
श्रीरामायणभारतार्णवकृतेष्वाख्यानरत्नेषु च
श्रेयान् सम्प्रति कामदेवनृपतिः कौतूहली वर्त्तते ॥२३

ज्ञानं जृम्भयति श्रियं विशदयत्यानन्दमुद्दीपय-
त्याधत्ते मतिपाटवं वितनुते वाचां समीचीनताम्।

इदानीमेकयोक्त्या रामायणभारतार्थवर्णनस्य कारणं सूचयन्नाह।

औदार्य इति। सम्प्रति श्रेयान् श्रेष्ठः कामदेवनृपतिरेतेषु विषयेषु कौतूहली वर्त्तते एतान् विषयान् श्रोतुं कामदेवस्य कौतुकमस्तीत्यर्थः। कुत्रे-त्याह रघुनाथधर्मसुतयोः श्रीरामयुधिष्ठिरयोरौदार्ये उदारत्वे महत्त्वे दातृत्वे वेत्यर्थः। तथा तत्सोदराणां पुनः तयोः श्रीरामयुधिष्ठिरयोः सोदराणां भ्रातृणां भरतादीनां भीमादीनाञ्चेत्यर्थः सौभ्रात्रे परस्परभ्रातृसौहृदे। तथा पृथ्वीसुता सीता कृष्णा द्रौपदी च तयोः पतिदेवताव्रतविधौ पतिरेव देवता यासां ताः पतिदेवताः पतिव्रतास्तासां यद्व्रतं मन्वाद्युक्तनियमस्तस्य विधौ अनुष्ठाने तथा श्रीरामायणभारतरूपौ यावर्णवौ समुद्रौ तत्र कृतेषु वाल्मीकि-व्यासाभ्यां निर्मितेषु आख्यानरत्नेषु इतरेष्वप्युत्कृष्टाख्यानेष्वित्यर्थः। सर्वेषां सप्तम्यन्तपदार्थानां कौतूहलीत्यनेनान्वयः। एतादृशनृपानुरञ्जनार्थमेवायं प्रबन्धः क्रियत इति कवेरभिप्रायः। पतिव्रतामाह हारीतः। "आर्त्तार्त्ते मुदिता हृष्टे प्रोषिते मलिना कृशा। मृते म्रियेत या पत्यौ साध्वी ज्ञेया पतिव्रता" इति। "उदारो दातृमहतोर्दक्षिणेऽप्यभिधेयवत्," इति "कृष्णा स्याद्द्रौपदी नीली" इति च मेदिनी। शार्दूलविक्रीडितमिदं वृत्तम् "सूर्य्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितम्", इति लक्षणात् ॥ २३ ॥

अस्य काव्यानुरागस्त्वाह—ज्ञानमिति। सतां कवीनां सूक्ति शोभनावाणी यत्र तादृशी या गोष्ठी संलापः परस्परभाषणमित्यर्थः तत्र रसोऽनुरागस्तस्मादन्यो

प्रत्यक्षीकुरुते पदार्थनिवहं ख्यातिं प्रतिष्ठापय-
त्यन्यः को नृपतेर्विनोदविभवः सत्सूक्तिगोष्ठीरसात् ॥ ३४

तस्यावदातैः कविसूक्तिसूत्रैः
संस्यूतनानागुणरत्नराशेः।
विनोदहेतोः कविराजसूरि
र्निबन्धनद्वन्द्वमिदं विधत्ते ॥ ३५॥

नृपतेः कामदेवस्य विनोदविभवः कः विनोदस्य उद्वेगापनयनस्य विभवो धनम् ऐश्वर्यं वा कः अपि तु न कोऽप्यस्तीत्यर्थः, केवलं सत् सूक्तिगोष्ठीरस एव तं विनोदयतीत्यर्थः, यतः स ज्ञानं व्यवहारादि बोधं जृम्भयति वर्द्धयति तथा श्रियं सम्पत्तिं विशदयति उत्कर्षयति तथा आनन्दं रसास्वादनसमुद्भूतं लोकोत्तराह्लादम् उद्दीपयति जनयति तथा मतिपाटवं बुद्धिकौशलम् आधत्ते करोति तथा वाचां समीचीनतां उत्कृष्टतां वितनुते विस्तारयति तथा पदार्थनिवहं वाच्य-लक्ष्यव्यङ्ग्यरूपार्थसमूहं प्रत्यक्षीकुरुते ज्ञापयति वैदग्ध्यसम्पादनेन दुर्बोध-मप्यर्थजातं बोधयतीत्यर्थः तथा ख्यातिं सामाजिकतया प्रसिद्धिं प्रतिष्ठापयति करोति। काव्यालापो हि व्यवहारज्ञानादिकं जनयत्येव यदुक्तं मम्मटभट्टैः। "काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये। सद्यः परनिर्वृतये "इत्यादि। अनेकस्य सत्सूक्ति गोष्ठीरसरूपकारकस्य जृम्भणादिनानाक्रियासम्बन्धाद्दीप-कालङ्कारः "अथ कारकमेकं स्यादनेकासु क्रियासु च" इति लक्षणात्। "गोष्ठी सभासंलापयोः स्त्रियाम्" इति मेदिनी ॥ ३४ ॥

अथ कामदेवप्रीत्यर्थोऽयमुद्यम इति प्रतिपादयन् प्रतिजानीते

तस्येति। कविराजसूरिः कविराजनामा कविस्तस्य कामदेवस्य विनोद-हेतोः प्रीत्यर्थं इदं वक्ष्यमाणप्रकारं निबन्धनद्वन्द्वं रामायणभारतार्थवर्णनयुग्मम् एकयोक्त्या रामायणभारतेतिहासद्वयस्य वर्णनमित्यर्थः विधत्ते करोति तस्य किम्भूतस्य अवदातैः शुद्धैः अथ च शुक्लैः कवीनां सूक्तयः शोभनवचनान्येव

**श्रीरामायणमाणिक्यं भारतस्वर्णमुद्रितम्।**
**न कस्य कुरुते लोके विस्मयोल्लासि मानसम् ॥ ३६ ॥**

**प्रायः प्रकरणैक्येन विशेषणविशेष्ययोः।**
**परिवृत्त्या क्वचित्तद्वदुपमानोपमेययोः ॥ ३७ ॥**

सूत्राणि तन्तवस्तैः कृत्वा सयूतः सम्बद्धः अथ च ग्रथितो नानागुणरत्नराशिः नानागुणाएव रत्नानि तेषां राशिः समूहोयस्य तादृशस्य। अन्योऽपि रत्नराशिः शुक्लैः सूत्रैर्ग्रथ्यते कविभिः श्लोकादिना वर्णितगुणसमूहस्येत्यर्थः। अत्र पूर्वार्द्धे रूपकालङ्कारः। स्यूतेति सिवुतन्तुसन्ताने इत्यस्मात् क्तः ऊडन्त्य-वान्तस्येति वकारस्योकारः। विधत्तइति 'रामः स्वयं याचते' 'जीवत्यस्तोरावणः' इत्यादिवत् अस्मदर्थाविवक्षया प्रथमपुरुषैकवचनम्। "धीमान् सूरिः कृती कृष्टिः" इत्यमरः। इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिर्वृत्तम् ॥ ३५ ॥

न केवलमिदं कामदेवस्यैव प्रीतिजनकं किन्तु सर्व्वेषामपि चमत्कारकं भविष्यतीत्याह

श्रीति। श्रीरामायणं रामायणोक्तश्रीरामादिचरितं तदेव माणिक्यम् अत्युपादेयत्वात् मणिविशेषः श्रीरामायणं माणिक्यमिवेत्युपमितिसमासोवा तत्, भारतस्वर्णमुद्रितं भारतं भारतोक्तयुधिष्ठिरादिचरितमेव स्वर्णं तेन मुद्रितं सम्बद्धम् अथ च जड़ितं सत् लोके जगति कस्य जनस्य मानसं चित्तं विस्मयो-ल्लासि विस्मयेन अहो अपूर्वमिदमिति चमत्कारेण उल्लसतीति तादृशं न कुरुते, अपि तु सर्वेषामेव कुरुतइत्यर्थः। अन्यदपि माणिक्यं स्वर्णमुद्रितं सत् सर्वेषां चमत्काराय भवति। अत्र पूर्वार्द्धे एकतरसाधकाभावादुपमारूपकयोः सन्देहसङ्करस्तेन च रामायणभारतचरितयोरन्यतरदेकमपि लोकोत्तरत्वा-च्चमत्कारजनकं किं पुनस्तयोरुभयोरेकोक्त्या निबन्धनमित्यर्थापत्त्यलङ्कारो-व्यज्यते। अनुष्टुव्वृत्तम् ॥ ३६ ॥

ननु दुर्घटमिदमुभयोरेकोक्त्या निबन्धनं तत् केन प्रकारेण करिष्यसीत्या-शङ्का तत्प्रकारमाह

क्वचित्पदैश्च नानार्थैः क्वचिद्वक्रोक्तिभङ्गिभिः ।
विधास्यते मया काव्यं श्रीरामायणभारतम् ॥ ३८ ॥

युग्मम् ॥

पदमेकमपि श्लिष्टं वक्तुं भूयान् परिश्रमः ।
कथाद्वयैक्यनिर्वोढुः किं धरापतितोऽधिकम् ॥ ३९ ॥

प्राय इति । मया श्रीरामायणभारतम् एकोक्त्या तदुभयेतिहासवर्णनरूपं राघवपाण्डवीयं काव्यं विधास्यते करिष्यते कथमित्याह प्रायोबहुषु विषयेषु प्रकरणस्य भेरीरवशरद्वर्णनवनवासयज्ञोद्धरणादिप्रस्तावस्य ऐक्येन एकरूपतया यथा आभूमण्डलेत्यादि अत्र उभयपक्षेऽपि भेरीरवस्य प्रस्तावः । तथा विशेषण-विशेष्ययोः परिवृत्त्या विपर्ययेन एकत्र यद्विशेषणं तदेवान्यत्र विशेष्यमित्येवं रीत्येत्यर्थः । यथा एकत्र यशोभिः पाण्डुर्दशरथो राजा बभूव पक्षे दशरथ-स्फुटवीरलक्ष्मीः पाण्डुराजा बभूवेति तथा उपमानोपमेययो स्तद्वत्परिवृत्त्या एकत्र यदुपमानं तदेवान्यत्र उपमेयमित्येवं रीत्येत्यर्थः । यथा तस्य रामस्य लक्ष्मीर्विपक्षेण कृष्टा कान्ताकचेष्विव पक्षे तस्य युधिष्ठिरस्य कान्ता विपक्षेण कचेषु कृष्टा लक्ष्मीरिवेति । तथा क्वचिन्नानार्थैरनेकार्थवाचकैः श्लिष्टैः पदैः बाहुल्येन तस्यैवोदाहरणानि । तथा वक्रोक्तिभङ्गिभिः वक्रकथनप्रकारैः उद्देश्यताविधेयतापरिवृत्तिरूपान्यथायोजनादिभिरित्यर्थः यथा कर्णनासापनो-दोऽयं स्त्रीणां यदपमाननेति अत्र सूर्पणखापक्षे कर्णनासापनोद एव स्त्रीणा-मपमानना उर्वशीपक्षे अपमाननैव कर्णनासापनोदइति एभिः प्रकारैर्मयेदं विधास्यते इत्यन्वयः ॥ ३७ ॥ ३८ ॥

नैतत्सुकरमित्याह

पदमिति । का कथा बहुनाम् एकमपि श्लिष्टम् अनेकार्थप्रतिपादकं पदं वक्तुं प्रयोक्तुम् इतरेषां भूयान् महान् परिश्रमः प्रयासो भवति अतएव कथाद्वयस्य रामायणभारतोक्तेतिहासद्वयस्य ऐक्येन एकयोक्त्या निर्वोढुर्मद्द्वारा निर्वाहकर्तुर्निबध्नतो धरापतितः कामदेवरूपात् अधिकं श्रेष्ठतरं किम्

श्रीमद्रामायणं गङ्गा भारतं सागरो महान्।
तत्संयोजनकार्य्यज्ञः कविराजो भगीरथः॥ ४० ॥
सुबन्धुर्बाणभट्टश्च कविराज इति त्रयः।
वक्रोक्तिमार्गनिपुणाश्चतुर्थो विद्यते न वा॥ ४१ ॥

अपितु न किमपि, अत्र न केवलं द्वितायां पदानां श्लिष्टता किन्तु सर्वप्रबन्धएव इतिहासद्वयोपस्थापकत्वात् श्लिष्टः तस्मादेतत्कर्ता कामदेवनृपएव श्रेष्ठतर इत्यर्थः। अत्र स्वक्रियमाणेऽप्यस्मिन् प्रयोजकस्यापि राज्ञोनिर्वाहकत्वकथनेन अति दुर्घटमपि मया यत् कर्त्तुमध्यवसीयते तत्र राजप्रसादएव हेतुरिति, कामदेवस्य गौरवातिशयोध्वनितः। अधिकमिति सामान्यत्वान्नपुंसकम्। यद्वा धरापतितोराजादेशाद्धेतोः कथाद्वयैक्यनिर्वोढुर्मम अधिकं किम्, इदमेव महत् पौरुषमित्यर्थः। अथवा धरापतितइति सप्तम्यन्तं कथाद्वयैक्यनिर्वोढुर्मम धरापतितोराज्ञि अधिकम् अधिकसन्तोषकारणं किम्, अपित्विदं सन्तोषकारणमित्यर्थः॥ ३९ ॥

कथाद्वयैक्यनिर्वाहेस्वस्य सामर्थ्यं प्रकटयन्नाह

श्रीति। श्रीमत् श्रीयुक्तं रामायणं रामचरितं गङ्गा स्वच्छत्वपावनत्वादिधर्म्मवत्त्वात् गङ्गास्वरूपं, तथा भारतं तदुक्तयुधिष्ठिरादि चरितं महान् अगाधः सागरः गभीराशयत्वेन दुरवगाहत्वादगाधसागरस्वरूपम्। भगीरथो भगीरथस्वरूपः कविराजः कविराजनामा कविः तत्संयोजनकार्य्यज्ञः तयोः रामचरितयुधिष्ठिरादिचरितरूपयोर्गङ्गासागरयोः संयोजनं परस्परमेलनं तद्रूपं कार्य्यं जानातीति तादृशः, यथा अतिदुर्घटमपि गङ्गया सह सागरस्य सम्मेलनं भगीरथः कृतवान् तथा कविराजोऽप्यतिदुर्घटं रामायणेन सह भारतस्य योजनं कर्त्तुं जानातीत्यर्थः। अत्र क्वचित् समासाभावेऽपि रूपकं दृश्यते यथेति स्वरसात् व्यस्तं साङ्गरूपकमलङ्कारः॥ ४० ॥

एवंविधकाव्यकरणक्षमा न बहव इत्याह

सुबन्धुरिति। सुबन्धुर्वासवदत्ताकारः बाणभट्टः कादम्बरीकारः

**रम्यं रामायणं येषा भारती सैव भारतम्।**
**अर्द्धनारीश्वरमयी मूर्तिरेकैव शोभताम् ॥ ४२ ॥**

**एकत्र चन्द्रातपसुन्दरस्य**
**पार्श्वेऽपरस्मिन् स्फुरदुष्णभासः।**
**अयं सुमेरोरनुयाति लीलां**
**कथाद्वयाश्चर्य्यपदं प्रबन्धः ॥ ४३ ॥**

कविराजः प्रस्तुतकाव्यकर्त्ता इत्येते त्रयो वक्रोक्तिमार्गनिपुणाः श्लेषाद्युक्तिकुशलाः, एते त्रयएव वक्रोक्तिमार्गं जानन्तीत्यर्थः, चतुर्थ एतेभ्योऽन्यः कश्चिदेतादृशोविद्यते न विद्यते वा पृथिवी ह्यतिविपुला, यदि कुत्रापि प्रच्छन्नतया एतादृशः कश्चित् स्यादित्यतः सन्दिह्य विद्यते न वेत्युक्तम्। अत्राप्रकृतयोः सुबन्धुबाणभट्टयोः प्रकृतस्य कविराजस्य वक्रोक्तिमार्गनिपुणत्वरूपैकधर्माभिसम्बन्धाद्दीपकालङ्कारः ॥ ४१ ॥

रम्यमिति। या एषा भारती मम वाणी रम्यं रामायणं रामायणस्वरूपा रामायणार्थोपस्थापिकेत्यर्थः तथा सैव भारती भारतं भारतार्थोपस्थापकत्वात् भारतस्वरूपा अर्थभेदसत्त्वेऽपि शब्दस्याभिन्नत्वादेकाप्युभयरूपेत्यर्थः अतएकैवेयम् अर्द्धनारीश्वरमयी मूर्त्तिः अर्द्धनारीश्वरमूर्त्तिरूपा सती शोभतां यथा एकापीश्वरमूर्त्तिः स्त्रीपुंसावयवद्वयघटिता शोभते तथैवैकापि मदीयभारती अर्थद्वयघटिता शोभतामित्यर्थः। व्यस्तरूपकम्। एष्वनुष्टुब्वृत्तम् ॥४२॥

एकत्रेति। अयं प्रस्तुतः प्रबन्धोग्रन्थः सुमेरोः कनकाचलस्य लीलां विलासम् अनुयाति अनुगच्छति सुमेरुं सदृशीकरोतीत्यर्थः, किम्भूतः कथाद्वयेन इतिहासद्वयेन आश्चर्यस्य विस्मयस्य पदं स्थानम् आश्चर्यजनकमित्यर्थः। सुमेरोः किम्भूतस्य एकत्र पार्श्वे चन्द्रस्य आतपेन किरणेन सुन्दरस्य शोभमानस्य एषप्रबन्धोऽपि चन्द्रवंशीयनृपाणां युधिष्ठिरादीनां प्रतापवर्णनेन सुन्दरः, पुनः किम्भूतस्य अपरस्मिन् पार्श्वे स्फुरन्नुष्णभाः सूर्य्योयस्य स तथा तादृशस्य,

मनोज्ञरामायणभारताख्य
भागीरथीसागरसन्निपाते ।
सन्तः प्रकुर्वन्त्ववगाहलीला
मस्मिन्नघच्छेदिनि काव्यतीर्थे ॥ ४४ ॥
विस्तारितागाब्धिपुरीवनान्तां
सन्दर्शितेन्द्वर्कदिनर्त्तुशोभाम् ।

एतत् प्रबन्धेऽपि अपरस्मिन् पक्षे सूर्यवंशीया रामादयोवर्ण्यन्ते । क्वचित् कथाद्वयाश्चर्य्यपदइति पुंलिङ्गं दृश्यते तत्र कथाद्वयेन आश्चर्य्याणि पदानि यत्रेति विग्रहः । अत्र सुमेरुप्रबन्धयोः परस्परविम्बप्रतिविम्बभावेन पर्य्यवसानान्निदर्शनालङ्कारः । "पदं स्थाने विभक्त्यन्ते" इति हेमचन्द्रः । इन्द्रवज्रा-उपेन्द्रवज्रोपजातिर्वृत्तम् ॥ ४३ ॥

पण्डितानामप्यत्रादराविधेयइति प्रार्थयते ।

मनोज्ञेति । सन्तः साधवः अस्मिन् काव्यतीर्थे काव्यशास्त्रे अथवा काव्यरूपे तीर्थे जलावतारे पुण्यक्षेत्रे वा अवगाहलीलां परिशीलनविलासम् अथवा मज्जनक्रीड़ां प्रकुर्व्वन्तु प्रकर्षेण रचयन्तु, किम्भूते मनोज्ञः सुश्लिष्टतया प्रयुक्तः अथ च सुदृश्यः रामायणभारताख्ययो रामायणभारतरूपयो-र्भागीरथीसागरयोर्गङ्गासमुद्रयोः सन्निपातः सङ्गमोयत्र तादृशे, अतएव अघच्छेदिनि पापनाशके अन्यत्रापि पापनाशके, गङ्गासागरसङ्गमतीर्थे सन्तोऽवगाहन्ते एतेन रामायणभारतकथाश्रयत्वेन पापनाशकमेतत् काव्य मितरकाव्येभ्योवैलक्षण्येन सद्भिरवश्यमेवादरणीयमिति भावः । रूपक मिदम् "तीर्थं शास्त्रे गुरौ यज्ञे पुण्यक्षेत्रावतारयोः । ऋषिजुष्टे जले सत्रिण्युपाय स्त्रीरजस्यपि" इति हेमचन्द्रः । पूर्वोक्तं वृत्तम् ॥ ४४ ॥

कविवाङ्निर्मितिर्ब्रह्मनिर्मितिसमानतया चमत्कारं जनयतीत्याह ।

विस्तारितेति । सूक्तिमयीं सुन्दरवचनरूपां सृष्टिं सर्गं वितन्वन् विस्तारयन् कविः काव्यकर्त्ता प्रजापतेः सृष्टिं वितन्वतीब्रह्मणः किं समानयत्नो न तुल्य-

सृष्टिं कविः सूक्तिमयीं वितन्वन्
प्रजापतेः किं न समानयत्नः ॥ ४५ ॥

दोषान्धकारव्यपसारणेन
गुणाम्बुजोन्मीलननित्यदक्षाः।
सन्तः प्रबन्धं मम शोधयन्तु
लोकं मयूखाइव चण्डरश्मेः ॥ ४६ ॥

प्रयत्नो न भवति अपि तु भवत्येवेत्यर्थः, सृष्टिं किम्भूतां विस्तारितोवच्छलतया प्रकाशितोऽगः पर्वतः अब्धिः समुद्रः पुरो वनान्तश्च यत्र सा तथा तादृशीं, तथा सन्दर्शिता इन्दोश्चन्द्रस्य तथा अर्कस्य सूर्यस्य दिनानां दिनघटकप्रभातादीनां ऋतूनां वसन्तादीनाञ्च शोभा यत्र सा, तथा तादृशीं प्रजापतिसृष्टौ हि पर्व्वतादीनां विस्तारश्चन्द्रादीनां शोभा च विद्यतएव। काव्ये च पर्व्वतादि वर्णनस्यावश्यकत्वम्। तथा च दण्डी। "नगरार्णवशैलर्त्तुचन्द्रार्कोदयवर्णनैः। उद्यानसलिलक्रीडामधुपानरतोत्सवैः" इत्यादि। (काव्यादर्शे प्रथमपरिच्छेदे १६श श्लोकः) अत्र समानयत्नत्वं प्रति तादृशसृष्टिविस्तारस्य हेतुत्वात् काव्यलिङ्गानुप्राणितोऽयमुपमालङ्कारः। पूर्वोक्तं वृत्तम् ॥ ४५ ॥

औद्धत्यपरिहाराय पण्डितान् सविनयं प्रार्थयते।

दोषेति। सन्तः पण्डिताः मम प्रबन्धं राघवपाण्डवीयाभिधम् इमं ग्रन्थं शोधयन्तु शुद्धं कुर्व्वन्तु, उपमिनोति चण्डरश्मेः सूर्यस्य मयूखाः किरणाः लोकमिव, यथा सूर्यस्य किरणा भुवनं पवित्रयन्ति तथा पवित्रयन्त्वित्यर्थः, केनेत्याह दोषाश्च्युतसंस्कारत्वादयो मोहकत्वादन्धकाराइवेति दोषान्धकारास्तेषां व्यपसारणेन निराकरणेन यदत्र कश्चिद्दोषः स्यात्तदा तमपसार्य शोधयन्त्वित्यर्थः सूर्यमयूखा अपि दोषाया रात्रेरन्धकारस्य व्यपसारणेन लोकं शोधयन्ति, सन्तः किम्भूताः गुणामाधुर्यादयः उपादेयत्वादम्बुजानीवेति गुणाम्बुजानि तेषां उन्मीलने प्रकाशने नित्यदक्षा निरन्तरप्रवीणाः, सूर्य्यमयूखा

**अनध्वन्याः काव्येष्वलसगतयः शास्त्रगहने**
**ष्वदुःखज्ञा वाचां परिणतिषु मूकाः परगुणे ।**
**विदग्धानां गोष्ठीष्वकृतपरिचर्याश्च खलु ये**
**भवेयुस्ते किम्वा कविभणितिकण्डूतिनिकषाः ॥४७॥**

अपि गुणतुल्यानि अम्बुजानि गुणाम्बुजानि, शाकपार्थिवादित्वात् कर्मधारयः तेषामुन्मीलने नित्यदक्षाः उपमेयं श्रौती । "दोषा रात्रौ भुजेऽपि च" इति मेदिनी ॥ ४६ ॥

नन्वसन्तोऽपि बहवः सन्ति तान् प्रत्यपि किमिति नैवं प्रार्थयसे इत्यत आह अनध्वन्या इति । ये जनाः काव्येषु काव्यमार्गेषु अनध्वन्या अपथिकाः अपरिशीलितकाव्यवर्त्मान इत्यर्थः, तथा शास्त्रगहनेषु शास्त्ररूप-काननेषु अलसगतयो मन्दगमनाः मन्दबुद्धय इत्यर्थः, गहने हि मूर्खा एव सालसं गच्छन्ति, तथा वाचां परिणतिषु वाक्परिणामेषु रसवत्सालङ्कारशब्दप्रयोगेष्वित्यर्थः, अदुःखज्ञाः तज्जवं कवीनां दुःखं न जानन्तीति तादृशाः, तथा परगुणे परेषां गुणकीर्तने मूकाः मौनवन्तः, तथा विदग्धानां सामाजिकानां गोष्ठीषु सभासु खलु निश्चयेन न कृता परिचर्या सामाजिकानामुपासना यैस्तादृशाः सामाजिकैरनुपदिष्टा इत्यर्थः, ते जनाः कविभणितेः काव्यस्य कण्डूतिर्निघर्षणं परिशीलनेन परीक्षणमित्यर्थः । तत्र निकषाः निकषप्रस्तरायमाणाः किम्वा भवेयुः अपि तु नैवेत्यर्थः, यथा निकषोपलाः स्वस्मिन्निघर्षणेन स्वर्णस्योत्त-माधमत्वपरीक्षका भवन्ति तथा ते काव्यपरीक्षका न भवन्तीत्यर्थः अतस्तान् प्रति न पूर्वोक्तं प्रार्थये इति भावः । अत्र प्रार्थनाभावे एकतमस्यानध्वन्यत्वस्य कारणत्वे पर्याप्तेऽपि कारणान्तरस्यालसगमनादेरुपादानात् समुच्चयालङ्कारः । "समुच्चयोऽयमेकस्मिन् सतिकार्यस्य साधके । खले कपोतिकान्यायात् तत्कर-स्यात् परोभवेद्" इति लक्षणात् । "गहनं काननं वनम्" इति, "परिचर्याप्युपा-सनः" इति चामरः । शिखरिणीवृत्तमिदं "रसैरुद्रैश्छिन्ना यमनसभलागः शिखरिणी" इति लक्षणात् ॥ ४७ ॥

असद्भिरारोपितदूषणापि
न सूक्तिरार्यैरवधीर्यते मे।
पीतोज्झितां राहुमुखेन चान्द्रीं
न किं सुधां नाकजुषो जुषन्ते ॥४८॥

रत्नावतंसइव भारतमण्डलस्य
क्रामन् दिशो दशरथस्फुटवीरलक्ष्मीः।
राजा सुमन्त्रविहिताभिरतिर्बभूव
पाण्डुर्यशोभिरभिरञ्जितसर्वलोकः ॥४९॥

नन्वसतां मास्तु काव्यपरीक्षकता किन्तु हठेन तैर्दूषिते सति सतामपि कथमत्रादरो भविष्यतीत्याशङ्क्याह।

असद्भिरिति। असद्भिर्मूर्खैः आरोपितं नतु वास्तविकत्वेनोपन्यस्तं दूषणं यत्र सा तथा तादृश्यपि मे मम सूक्तिः एतत् काव्यरूपा वस्तुतः शोभना वाणी आर्यैः सद्भिर्न अवधीर्यते नावज्ञायते, वर्तमानसामीप्ये लट्। मूर्ख-दोषदूषितमप्येतत् काव्यं सतामादरणीयं भविष्यत्येवेत्यर्थः। दृष्टान्तेनेदं द्रढ़यति राहुमुखेन पीतोज्झिताम् आदौ पीता कवलिता पश्चादुज्झिता उद्गीर्णा तादृशीं चान्द्रीं चन्द्रसम्बन्धिनीं सुधाममृतं नाकजुषो देवाः किं न जुषन्ते न सेवन्ते अपि तु जुषन्त एवेत्यर्थः, महान्तो हि क्षुद्रैर्दूषितमपि स्वभावतः समीचीनं वस्तु सबहुमानमेवाद्रियन्ते। अत्र सधर्मयोः पूर्वोत्तरा-र्द्धार्थयोः प्रतिबिम्बनात् दृष्टान्तालङ्कारः, "दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रति-बिम्बनम्"इति लक्षणात् ॥ ४८ ॥

इत्थं मङ्गलाचरणादिमुखबन्धं विधाय प्रकृतमनुसरन् राम युधिष्ठिरयोः पितरौ वर्णयति।

रत्नावतंसइति। दशरथोनाम राजा बभूव किम्भूतः, भारतमण्डलस्य उत्तरं यत् समुद्रस्य हिमाद्रेश्चैव दक्षिणम्। वर्षं तद्भारतं नाम भारती यत्र

मातुः श्रियं सन्दधदिन्दुमत्याः
श्लाघ्यः शरत्काल इवोडुपङ्क्तेः ।
असौ प्रजारञ्जनदक्षभावा
दजस्य चक्रे मनसः प्रमोदम् ॥ ५० ॥

सन्ततिः" इत्युक्तलक्षणभारतवर्षस्य रत्नावतंसइव महत्त्वातिशयात् रत्नमयशिरोभूषणमिव जात्युत्प्रेक्षेयम्। तथा दिशः क्रामन् बलेन दिग्भवान् राज्ञ आक्रामन्, तथा स्फुटवीरलक्ष्मीः प्रकटवीरशोभः। यद्वा क्रामन्निति लक्षणाहेत्वोः क्रियायाइति हेतौ शतृः, दिशः क्रामन् आक्रमितुं स्फुटा व्यक्तीभूता वीरलक्ष्मीर्यस्य सः, तथा सुमन्त्रोनाम तस्य मन्त्री सारथिश्च तत्र विहिता अभिरतिः प्रीतिर्येन सः, तथा यशोभिः पाण्डुः शुक्लः अतियशस्वीत्यर्थः, तथा अभिरञ्जिता दानमानादिभिः सन्तोषिताः सर्वे लोका जनाः येन सः। अस्मिन् पक्षे दशरथ इत्येतदुत्तरस्य विसर्जनीयस्य स्फुट इत्यस्मिन् परे कादियुक्ते शषसे लुग्वेत्यनेन लोपः।

भारतपक्षेतु पाण्डुर्नाम राजा बभूव, किम्भूतः भरतो दौष्मन्तिस्तस्यापत्यानि भारतानि तेषां मण्डलस्य समूहस्य रत्नावतंस इव, तथा दिशः क्रामन् प्रयाणेनास्कन्दयन्, तथा दशरथस्येव स्फुटा वीरलक्ष्मीर्यस्य सः, यद्वा दशेति दिशइत्यस्य विशेषणं तात्कालिकनृपाणां तपोबलेन ऊर्द्धाधोगमनमप्यासीत् तथा रथेन हेतुना स्फुटा वीरलक्ष्मीर्यस्य सः, अथवा दशदिक्षु रथोयस्य सः एतद्व्याख्याने दशरथइत्युभयत्रापि सविसर्गएव पाठः। तथा सुमन्त्रेषु शोभनमन्त्रणावत्सु शोभनमन्त्रणासु वा विहिताभिरतिः, तथा यशोभिरभिरञ्जिता धवलिताः सर्व्वलोकास्त्रिभुवनानि येन सः। अत्र द्वयोरपि पाण्डुदशरथयोः प्राकरणिकत्वात् श्लेषानुप्राणितेयं तुल्ययोगितेति केचित् वस्तुतस्तु तुल्ययोगितादीनां श्लेषादन्यत्र सम्भवद्विषयत्वादेवंविधस्थले श्लेषस्यैव प्राबल्येन चमत्कारविधायित्वाच्च प्रधानतया श्लेषेणैव व्यपदेशो युज्यते, एवमग्रेऽपि बोध्यम्। "पाण्डुः कुन्तीपतौ सिते" इति विश्वः। वसन्ततिलकं वृत्तं 'उक्ता वसन्ततिलका तभजा जगौ ग' इति लक्षणात् ॥ ४९ ॥

विचित्रवीर्यस्य दिवं गतस्य
पितुः स राज्यं प्रतिपद्य बाल्ये।
पुरीमयोध्यां धृतराष्ट्रभद्रां
सहस्तिशोभां सुखमध्युवास ॥ ५१ ॥

मातुरिति। असौ दशरथः प्रजानां रञ्जने सम्यक्पालनेन सन्तोषणे दक्षभावात् निपुणत्वात् अजस्य अजनामकस्य स्वपितुर्मनसः प्रमोदं हर्षं चक्रे कृतवान्, किम्भूतः इन्दुमत्याः इन्दुमती नाम्ना मातुः श्रियं शोभां सन्दधत् सम्यग्धारयन् मातुरिवाङ्गसौष्ठवं धारयन्नित्यर्थः, अतएव श्लाघ्यः धन्यः। "धन्योमातृमुखः पुमान्" इत्यादिसामुद्रिकवचनात्। उपमिनोति उडुपङ्क्ते-र्नक्षत्रश्रेण्याः श्रियं सन्दधत् शरत्काल इव, यथा नक्षत्रश्रेण्याः श्रियं धारयन् शरत्कालः श्लाघ्योभवति तथेत्यर्थः।

पक्षे असौ पाण्डुः प्रजारञ्जनदक्षभावात् अजस्य ब्रह्मणोमनसः प्रमोदं चक्रे ब्रह्मनिर्मितप्रजारक्षणेन ब्रह्माणं तोषयामासेत्यर्थः, किम्भूतः मातुरम्बिकायाः श्रियं पाण्डुत्वशोभां सन्दधत् धारयन् अम्बिका किल व्यासमभिसरन्ती भयेन पाण्डुवर्णा जाता अतस्तदवस्थायां तस्यामुत्पन्नोऽयमपि पाण्डुर्जातः, तथा श्लाघ्यः सर्वेषां प्रशंसनीयः। उपमीनोति इन्दुमत्याः सचन्द्राया उडुपङ्क्तेः श्रियं सन्दधत् शरत्कालइव। उपमेयं श्रौती। "तां भीतां पाण्डुसङ्काशां विवर्णां प्रेक्ष्य भारत। व्यासः सत्यवतीपुत्रइदं वचनमब्रवीत्। यस्मात् पाण्डुत्वमापन्ना विरूपं प्रेक्ष्य मामिह। तस्मादेष सुतस्ते वै पाण्डुरेव भविष्यति" इति महाभारतम्। "अजश्छागे हरे विष्णौ रघुजे वेधसि स्मरे" इति हेमचन्द्रः ॥ ५० ॥

विचित्रेति। स दशरथः दिवं गतस्य इन्दुमतीविरहेण शरीरं विहाय इन्द्रलोकं प्राप्तस्य पितुर्जनकस्य अजस्य राज्यं बाल्ये प्रतिपद्य प्राप्य अयोध्यां नाम पुरीं सुखं यथा तथा अध्युवास अधिष्ठितवान्। वसतेरुपान्वध्याङ्-इत्याधारस्य कर्मत्वम्। किम्भूतस्य विचित्रमाश्चर्यरूपं वीर्यं बलं यस्य स तथा तस्य, पुरीं किम्भूतां धृतम् अवधृतं निश्चितं राष्ट्रस्य राज्यस्य भद्रं मङ्गलं

वाणश्रेणिकरालकार्मुकभृता येन घ्नता विद्विषः
क्ष्माभारक्षयजृम्भितोरगपतिप्रारब्धनानाशिषा।
पूर्वोर्वीपतिकल्पिताभयचतुर्दिक्पालवर्जं निजा
माज्ञां स्थापयता त्रिलोकवलयैर्दोर्मण्डलं मण्डितम्
॥ ५२ ॥

यस्यां तादृशीं राजधानीरूपामित्यर्थः। तथा हस्तिशोभां हस्तिभिः सम्पादितश्रियम्।

पक्षे पाण्डुर्दिवं गतस्य विचित्रवीर्यस्य विचित्रवीर्यनामकस्य पितुः क्षोणिराज्यं बाल्ये प्रतिपद्य सहस्तिशोभां हस्तीतिशब्दकृतशोभया सह वर्तमानां हस्तिपदचिह्निताम् हस्तिनां पुरीं सुखमध्युवास, किम्भूताम् अयोध्याम् अन्यैरयोधनीयां, यद्वा अविद्यमाना योध्या योधनीयाः शत्रवो यत्र तादृशीं शत्रुरहितामित्यर्थः। तथा धृतराष्ट्रः पाण्डोर्ज्येष्ठभ्राता तेन भद्रां कुशलिनीम्। सहस्तिशोभामिति हस्तिनामकः कश्चित् पौरव आसीत् येन स्वनाम्ना हस्तिनापुरं स्थापितं तेन कृतया शोभया सह वर्तमानामिति वा ॥ ५१ ॥

अविशेषेण द्वावपि श्लोकद्वयेन विशिनष्टि

वाणेति। येन दशरथेन पक्षे पाण्डुना च त्रिलोकवलयैः पालकत्वसम्बन्धेन त्रिभुवनमण्डलैरथ च वलयरूपैस्त्रिलोकैर्दोर्मण्डलं बाहुप्रकाण्डं मण्डितं भूषितम् अन्योऽपि वलयेन दोर्मण्डलं मण्डयति, किम्भूतेन वाणश्रेण्या शरपङ्क्त्या करालं दन्तुरं भीषणं वा यत् कार्मुकं धनुस्तद्बिभर्त्ति धारयतीति तादृशेन सता विद्विषः शत्रून् घ्नता नाशयता अतएव क्ष्मायाः पृथिव्या यः शत्रुकृतोभारः गुरुत्वं तस्य क्षयेणापगमेन जृम्भितः सुखोदयात् स्फीतीय उरगपतिः शेषनागस्तेन प्रारब्धाः प्रस्तुता नाना जयजीवेत्यादिबहुप्रकारा आशिषोयस्य स तथा तेन तथा पूर्व्वे स्वपूर्वपुरुषा ये उर्वीपतयो राजानस्तैः कल्पितम् अनुग्रहेण दत्तम् अभयं येभ्यस्ते च चतुर्दिक्पाला इन्द्रादयस्ते चेति द्वन्द्वः तद्वर्ज्जं तान् वर्जयित्वा निजां आज्ञां स्थापयता

विच्छिन्नस्य प्रतिनृपकुलं राजशब्दस्य लोके
तेनात्मानं नियतविषयं कुर्वता तेजसश्च।
पादन्यासः शिरसि रचितः सर्वपृथ्वीधराणां
छत्रच्छायापगमसुगमे घर्मभासा च तुल्यम्॥ ५२॥

निवेशयता यद्वा पूर्वोर्वीपतिकल्पिताभयेति चतुर्दिक्पालानां विशेषणम्, इन्द्रादिष्वपि निजाज्ञाख्यापने तस्य सामर्थ्यमासीत् किन्तु प्राचीनैस्तन्न कृतमिति मत्वा तेनापि न कृतमिति भावः। क्वचित्त्रिलोकवलये इति सप्तम्यन्तः पाठः, तत्र त्रिलोकवलये निजामाज्ञां ख्यापयतेत्यन्वयः, दोर्मण्डल-मित्यत्र भूमण्डलमिति क्वचित् पाठः। अत्र द्वयोरपि पाण्डुदशरथयोः प्राकरणिकतया एकधर्माभिसम्बन्धात्तुल्ययोगितालङ्कारः। किञ्चालौकिक-कृत्यवर्णनादुदात्तालङ्कारोऽपि "लोकातिशयसम्पत्तिवर्णनोदात्तमुच्यते" इति लक्षणात्। "करालो दन्तुरे तुङ्गे भीषणे चाभिधेयवत्" इति मेदिनी॥ ५१॥

विच्छिन्नस्येति। तेन राज्ञा दशरथेन पाण्डुना च तथा घर्मभासा च सूर्य्येण च तुल्यं युगपत् सर्वेषां पृथ्वीधराणां राज्ञाम् अथ च पर्वतानां शिरसि मस्तके अथ च शिखरे पादन्यासश्चरणार्पणम् अथ च किरणपातः रचितः कृतः तुल्यं समानमिति वा यथा सूर्य्येण सर्वे पर्वताः क्रमेण किरणपातेनाक्रम्यन्ते तथा सर्वे नृपास्तेन क्रमेण जिता इत्यर्थः, शिरसि किम्भूते छत्रस्य राजचिह्नभूत सितातपत्रस्य अथ च आवरणमात्रस्य या छाया तस्या अपगमेनाभावेन सुगमे प्राप्ये झटिति पादमर्पयितुं योग्ये इत्यर्थः, तेन किम्भूतेन लोके नृपकुलं राजसमूहं प्रति विच्छिन्नस्य अन्यैरारोपितस्य राजशब्दस्य राजेतिशब्दवाच्य-त्वस्य, तथा तेजसश्च बलप्रतापस्य च नियतविषयम् अद्वितीयास्पदम् आत्मानं कुर्वता अन्यान् नृपतीन् पराजयेन भ्रष्टराज्यान् कृत्वा तेषां राजशब्दवाच्यत्वं बलं तेजश्च आत्मन्यर्पयतेत्यर्थः स सम्राडासीदिति भावः, सूर्य्यस्यापि विशेषण-मिदं सम्भवति तथाहि नॄन् पान्ति सदुपदेशेनासत्कार्याद्रक्षन्तीति नृपाः पण्डितास्तेषां कुलं समूहं प्रति विच्छिन्नस्य क्रोधादिभिर्बाधितस्य राजशब्दस्य राजते कान्त्या प्रकाशते इति व्युत्पत्त्या चन्द्रवाचकस्य राजेतिशब्दस्य तथा

करग्रहात् कोशलकेकयेन्द्र
भुवोर्गुरुश्रीर्विलसत्सुमित्रः ।
पृथावरोधः समरे जितारि
र्गीप्ताहिमाद्रीश्वरतां स लेभे ॥ ५४ ॥

तेजसश्चन्द्रकान्तेश्च नियतविषयम् अव्यभिचारिहेतुम् आत्मानं कुर्वता अयं भावः, चन्द्रोहि केवलं जलमयो न स्वतः कान्तिमान् नापि यौगिकराजशब्द-वाच्यश्च किन्तु सूर्य्यकिरणसम्पर्कादेव तादृशोभवति, अतः सूर्य एव चन्द्रस्य राजशब्दवाच्यत्वे तेजस्वित्वे च कारणमिति। तथाच सिद्धान्तशिरोमणिः "तरणिकिरण सङ्गादेष पीयूषपिण्डोदिनकरदिशि चन्द्रश्चन्द्रिकाभिश्चकास्ति। तदितरदिशि बालाकुन्तलश्यामलश्रीर्घटइव निजमूर्त्तिच्छाययैवातपस्थ" इति। अत्र प्रस्तुताप्रस्तुतयोरेकधर्माभिसम्बन्धाद्दीपकालङ्कारः। "राजा मृगाङ्के क्षत्रिये नृपे" इत्यमरः, "पादोमूलोस्तुर्य्यांशाङ्घ्रिषु प्रत्यन्त पर्व्वत" इति हेमचन्द्रः। "शिरः प्रधाने सेनाग्रे शिखरे मस्तकेऽपि च" इति मेदिनी। मन्दा-क्रान्तावृत्तम् ॥ ५३ ॥

करग्रहादिति। स दशरथ आहिमाद्रीश्वरतां हिमालयपर्यन्त देशस्वामित्वं लेभे प्राप्तवान्, स किम्भूतः कोशलकेकयौ देशविशेषौ तयोरिन्द्रौ राजानौ कोशलाधिपतिः केकयाधिपतिश्चेत्यर्थः ताभ्यां भूरुत्पत्तिर्ययोः ताभ्यां भवतः इति वा तयोः कौशल्याकैकय्योरित्यर्थः करग्रहात् पाणिग्रहात् विवाहात् गुर्वी श्रीः शोभा यस्य सः तथा, विलसन्ती शोभमाना सुमित्रा तन्नामपत्नी यस्य सः दशरथस्य बहुपत्नीकत्वेऽपि कौशल्या-कैकयीसुमित्रा इति तिस्रएव प्रधानादेव्यः स्थिता इति भावः, किम्भूतः पृथौ महत्यपि समरे युद्धे अरोधः शत्रुभिरवारणीयः अतएव जिता अरयो येन सः तथा गोप्ता आत्मपक्षाणां रक्षिता।

पक्षे पृथा कुन्ती अवरोधः पत्नी यस्य तादृशः स पाण्डुर्माद्रीश्वरतां मद्राधिपतनयायाः स्वामित्वं हीति प्रसिद्धौ लेभे कुन्त्यामनुरक्तोऽपि माद्रीा-मपि प्रणयवान् बभूवेत्यर्थः। एतेनास्य दक्षिणत्वं ध्वनितम्। किम्भूतः

ततः प्रजानां परिपालनेन
कृतात्मकृत्यः क्षितिपः कदाचित्।
प्रियानुयातो मृगयानुरोधात्
सयौवनश्रीः प्रययौ वनान्तम् ॥ ५५ ॥
शावानुविद्धहरिणीरसितोलुपानां
कोलावलीदलितबालकशेरुकाणाम्।

कोशलकेकयेन्द्रभुवोः कोशलाधिपकेकयाधिपभूम्योः करग्रहात् राजग्राह्यभागग्रहणात् गुर्व्वी श्रीः सम्पत्तिर्यस्य सः तथा, विलसन्ति सुमित्राणि शोभनबान्धवायस्य सः तथा, समरे जिता अरयो येन सः तथा, गोप्ता रक्षिता। श्लेषतुल्ययोगितयोः सङ्करः ॥ ५४ ॥

ततइति। ततोऽनन्तरं क्षितिपो दशरथः कदाचित् प्रावृट्काल रात्रौ प्रियैः सुहृद्भिरनुयातः कृतानुगमनः सन् मृगयानुरोधात् शब्दवेधिबाणपरीक्षार्थं मृगयां कर्त्तुं वनान्तं जलसमीपं सरयूतीरमित्यर्थः प्रययौ गतवान्, किम्भूतः यौवनश्रिया सह वर्तमानः यौवनजनितचापल्यान्मृगयार्थं जगामेति भावः। तर्हि किं मृगयादिव्यसनासक्तोऽयमासीदित्याशङ्काह। पुनः किम्भूतः। प्रजानां परिपालनेन सम्यग्रक्षणेन कृतमात्मनः कृत्यं कर्तव्यं येन सः प्रजापरिपालन एव तस्यासक्तिरासीत्, मृगयायान्तु कदाचित् प्रवृत्तिरिति भावः।

पक्षे क्षितिपः पाण्डुः कदाचित् कस्मिंश्चित् समये प्रियाभ्यां कुन्तीमाद्रीभ्यामनुयातः सन् वनान्तं काननान्तं प्रययौ अन्यत् सर्वं पूर्ववत्। दशरथपक्षेऽपि वनान्तं काननान्तमिति केचिद्व्याचक्षते, रामायणे जलसमीपगमनस्यैवाभिधानात् तथा च "ततः प्रावृडनुप्राप्ता मम कामविवर्द्धिनी" इत्युपक्रम्य "तस्मिन्नतिसुखे काले धनुष्मानिषुमान्रथी। व्यायामकृतसङ्कल्पः सरयूमन्वगां नदीम्। निपाने महिषं रात्रौ गजं वाभ्यागतं मृगम्। अन्यद्वा श्वापदं किञ्चिज्जिघांसुरजितेन्द्रियः" इत्याद्ययोध्याकाण्डे दशरथवाक्यम्। "वनं सलिलकानने" इत्यमरः ॥ ५५ ॥

दन्तावलोन्मथितपल्लवशल्लकीनां
राजाभवद्वनभुवामुपकण्ठवर्त्ती ॥ ५६ ॥
शङ्कुव्याकीर्णरङ्कुद्रुतनिशितशरक्षुण्णदीव्यत्तरक्षु
ज्याघोषक्षुब्धकण्ठीरवरवचकितध्वस्तमातङ्गयूथम् ।
खड्गव्यालूनखड्गं तुमुलकलकलप्रान्तकूजच्छकुन्तं
भल्लध्वस्ताच्छभल्लं वनभुवि मृगयाकर्म तेन प्रतेने ॥
॥ ५७ ॥

शावेति । राजा दशरथः वनभुवां सरयूसमीपवनस्थलीनाम् उपकण्ठवर्त्ती निकटवर्त्ती अभवत्, किम्भूतानां शावैर्वत्सै रनुविद्धाभिः कृतानुगमनाभिर्हरिणीभिः रसितानि भक्षितानि उलुपानि तृणविशेषा यत्र तास्तथा तासां तथा कोलावल्या वनवराहकुलेन दलितानि खण्डितानि बालानि कोमलानि कशेरुकाणि मुस्ताविशेषा यत्र तास्तथा तासां, तथा दन्तावलैर्हस्तिभिरुन्मथिताः पातिता भक्षिता वा पल्लवा यासां तादृश्यः शल्लक्यो वृक्षविशेषायत्र तास्तथा तासाम् ।

पक्षे राजा पाण्डुर्वनभुवां शतशृङ्गपर्वतसमीपस्थवनस्थलीनाम् उपकण्ठवर्त्ती अभवत् अन्यत् सर्वं पूर्ववत् । तृणभिद्गुल्मिन्युलुपं चन्द्रे नेति त्रिकाण्डशेषः पल्लवेत्यत्र पल्वलेति क्वचित् पाठः तत्र पल्वलस्थितशल्लकीत्यर्थः । वसन्ततिलकावृत्तम् ॥ ५६ ॥

शङ्क्विति । तेन राज्ञा दशरथेन पक्षे पाण्डुना च वनभुवि तस्यां वनस्थल्यां मृगयाकर्म प्रतेने कृतम् । तदेव विशिनष्टि किम्भूतं शङ्कुभिरस्त्रविशेषैर्व्याकीर्णाविच्छिन्नारङ्कवोमृगभेदा यत्र तत्, तथा द्रुतेन शीघ्रपातिना निशितशरेण शाणितवाणेन क्षुण्णा विदारिता दीव्यन्तः क्रीडनपरास्तरक्षवोमृगादनाख्यव्याघ्रविशेषायत्र अथवा आदौ द्रुताः पलायिताः पश्चान्निशितशरेण क्षुण्णादीव्यत्तरक्षवोयत्र तत् तथा, ज्याघोषेण मौर्वीशब्देन क्षुब्धाः सभया ये कण्ठीरवाः

एवं स तेनानुदिनं वनेषु
निषेव्यमाणो मृगयाविहारः।
समीरणोत्सेक इवाप्सु नावं
सप्ताङ्गचिन्तां नृपतेर्जहार॥ ५८॥

सिंहा रवेण चकितम् उद्विग्नं तथा ध्वस्तं विनष्टं मातङ्गयूथं हस्तिकुलं यत्र तत् तथा खड्गेन असिना व्यालूनाश्छिन्नाः खड्गा गण्डकायत्र तत् तथा, तुमुलेन सङ्कुलीभूतेन कलकलेन कोलाहलेन प्रान्ते एकदेशे कूजन्तः शब्दायमानाः शकुन्ताः पक्षिणोयत्र तत्, तथा भल्लेन शस्त्रविशेषेण ध्वस्ता अच्छभल्ला-भालूकायत्र तत्। शङ्कव्याकीर्णरङ्कित्यादि प्रतेने इतिक्रियाविशेषणं वा। दशरथपक्षेऽप्येतादृङ्मृगयावर्णनं नासङ्गतम्। "निपाने महिषं रात्रौ गजं वाभ्यागतं मृगम्। अन्यद्वा श्वापदं किञ्चिज्जिघांसुरजितेन्द्रिय" इति वाल्मीकीयोक्तेः। "शङ्कुः पत्ते शिराजाले संख्याकीलकशम्भुषु। यादोऽस्त्रभेदयोर्मेढ्रे" इति हेमचन्द्रः। 'सिंहः कण्ठीरवः' इति त्रिकाण्डशेषः। 'कृष्णसाररुरु-न्यङ्कुरङ्कुशम्बररौहिषा' इति 'तरक्षुस्तु मृगादन' इति 'गण्डके खड्गखड्गिनौ' इति 'ऋक्षाच्छभल्लभाल्लुकाः' इति चामरः। स्रग्धरावृत्तम्॥ ५७॥

एवमिति। एवमित्थम् अनुदिनं प्रतिदिनं वनेषु तेन दशरथेन पक्षे पाण्डुना च निषेव्यमाणः साभिनिवेशं क्रियमाणः स निरुक्तरूपो मृगया-विहारः नृपतेराज्ञोऽवश्यकर्त्तव्यां सप्ताङ्गचिन्तां स्वाम्यमात्यादि चिन्तनं जहार हृतवान् मृगयाव्यसनासक्ततया तेन राज्याङ्गनिरूपणं न कृतमित्यर्थः, उप-मिनोति, अप्सु जले समीरणस्य वायोरुत्सेक उद्रेकोनावमिव यथा प्रचण्ड-वायुर्जले नौकां हरति मज्जयति तथेत्यर्थः। नृपतेर्दशरथस्य पाण्डोर्वेति व्याख्यानं न सम्यक् अप्रधानभूत निषेवणक्रियाकर्तृतया, तृतीयान्ततच्छब्देलो-पस्य प्रधानक्रियासम्बन्धित्वेन विभक्त्यन्तरान्तपदोपस्थाप्यत्वानुचितत्वम्, नहि तेन भुज्यमानमन्नं देवदत्तस्य सुखं जनयतीत्यादि केनापि प्रयुज्यते, अतएवोक्तं प्रधानत्वात्तिङा बाध्यते इति। यद्वा तेनेति पूर्वोक्तप्रकारेणेत्यर्थः। उपमेयं श्रौती। "स्वाम्यमात्यसुहृत्कोषराष्ट्रदुर्गबलानि च, राज्याङ्गानि" इत्यमरः॥५८॥

स गाढ़बुद्धिस्तमसोपकण्ठे
विवर्तमानं गतभीरभीकम्।
मत्वा मृगं मार्गणलक्ष्यभूत
मनग्रजन्मानमृषिं चकार ॥ ५८ ॥

स इति। गाढ़बुद्धिः परिणतबुद्धिरपि गतभीर्वीरत्वान्निर्भयः स दशरथ-
स्तमसोपकण्ठे विवर्तमानं समीपे स्थित्वा कुम्भमापूरयन्तम् अभीकं निर्भयम्
ऋषित्वात् स्वविनाशशङ्कारहितम् अनग्रजन्मानम् अग्रजन्मा ब्राह्मणस्ततोऽन्यं
वैश्योऽहं तपसि स्थितइत्यध्यात्मोक्तेर्वैश्यमित्यर्थः ऋषिम् अन्धमुनितनयं तमसा
नैशान्धकारेण मृगं हस्तिनं मत्वा निश्चित्य मार्गणलक्ष्यभूतं शरव्यं चकार,
कुम्भपूरणशब्दं श्रुत्वा गजोऽयं सशब्दं जलं पिबतीति मत्वा शब्दभेदिना बाणेन
विव्याधेत्यर्थः। तथाचाध्यात्मरामायणम्। 'तत्रार्धरात्रसमये मुनिः कश्चि-
त्तृषार्दितः। पिपासार्दितयोः पित्रोर्जलमानेतुमुद्यतः। अपूरयज्जले कुम्भं
तदा शब्दोऽभवन्महान्। गजः पिबति पानीयमिति मत्वा महानिशि।
बाणं धनुषि सन्धाय शब्दवेदिनमाक्षिपम्' इति। 'मृगः पश्वादिभेदे तु हस्ते च
मतङ्गजे' इति विश्वः। अस्मिन् पक्षे तमसोपकण्ठे इत्यत्र तमसाख्या नदी-
विशेषस्य उपकण्ठे समीपे इति केषाञ्चिद्व्याख्यानं चिन्त्यं 'सरयूमभ्यगां नदीम्'
इति वाल्मीक्युक्तेः सरयूतीरएव तथावर्णनस्यौचित्यात् सरयूतमसयो-
र्वस्तुतोभेदात्।

पक्षे तमसा मोहेन गाढ़बुद्धिराक्रान्तमतिः अतएव गतभीर्निषिद्धेऽपि
कामासक्तपशुमारणे निर्भयः स पाण्डुः उपकण्ठे विवर्तमानं तिष्ठन्तम् अभीकं
मृगरूपिण्यां स्त्रियां मृगरूपं धृत्वा कामासक्तम् अनग्रजन्मानं नास्ति
अग्रजन्मा ब्राह्मणो यस्मात् तादृशं ब्राह्मणश्रेष्ठमित्यर्थः ऋषिं तपस्विनं
मृगं हरिणं मत्वा मार्गणलक्ष्यभूतं चकार, मृगरूपेण रममाणं किन्दमुनि-
तनयं बाणेन विव्याधेत्यर्थः। तथाच महाभारतम्, 'राजा पाण्डुर्महारण्ये
मृगव्यालनिषेविते। चरन् मैथुनधर्मस्थं ददर्श मृगयूथपम्। ततस्तां च मृगीं

तपस्विनश्छन्नतनोः शरेण
विभिन्नमूर्त्तेर्जनकान्महाधेः।
शापं सुतापायनिबद्धमृत्युं
प्रियानुवृत्तौ कुशलोऽप्यवाप ॥ ६० ॥

तच्च रुक्मपुङ्खैः सुपत्रिभिः। निर्बिभेद शरैस्तीक्ष्णैः पाण्डुः पञ्चभिराशुगैः। स च राजन् महातेजा ऋषिपुत्रस्तपोधनः। भार्यया सह तेजस्वी मृगरूपेण सङ्गतः। संसक्तस्तु तया मृग्या मानुषीमीरयन् गिरम्। क्षणेन पतितो-भूमौ विललापाकुलेन्द्रियः" इति ( आदिपर्वम्, १०८ अध्यायः )। "अभीकः कामुके क्रूरे निर्भये त्रिषु ना कवौ" इति मेदिनी ॥ ५९ ॥

तपस्विन इति। प्रिया स्त्री या अनुवृत्तिरनुनयस्तत्र कुशलोऽपि निपुणोऽपि अपराधमार्जनाय अतितरामनुमयं कुर्वन्नपीत्यर्थः दशरथः शरेण बाणेन विभिन्ना विदारिता मूर्तिस्तनुर्यस्य तादृशस्य तपस्विनस्तापसस्य तस्य जनकात् पितुरन्धमुनेः सकाशात् शापम् अवाप प्राप्तवान्, शापं कीदृशं सुतापायनिबद्धमृत्युं सुतस्य पुत्रस्य अपायेन विश्लेषेण निबद्धोनियतोमृत्युर्यत्र तादृशं त्वमपि सुतवियोगेन अहमिव नियतं मृत्युं प्राप्स्यसीत्येवंरूपमित्यर्थः, जनकात् किम्भूतात् छन्नतनोः रहःस्थितमूर्तेः तथा महाधेः पुत्रमरणश्रवणात् महान् आधिर्मानसव्यथा यस्य तादृशात् अयमर्थः शरविभिन्नमूर्तिं तपस्विनं परित्यज्य तदुक्त्या तत्पितर अन्धमुनिमुपगम्य पिपासु तं जलेन सन्तर्प्य तावत् स्वदुश्चरितमुक्तवान् तत अन्धातिदुःखान्मुमूर्षुरन्धमुनिस्त्वमपि सुतविश्लेषणा दुःखेन मरिष्यसीति शापं दशरथाय दत्तवान् इति।

पक्षे कुशलोऽपि कार्याकार्यविवेचकोऽपि पाण्डुरदृष्टवशात् सुतापाय शोभनतापाय अतिपीड़ार्थं तपस्विनः शापम् अवाप, शापं कीदृशं, प्रियानुवृत्तौ सम्भोगार्थं प्रियानुसरणे निबद्धमृत्युं नियतमरणरूपं, किम्भूतात् तपस्विनः छन्नतनोर्मृगरूपेणावच्छन्नदेहात्, तथा शरेण विभिन्नमूर्त्तेः, तथा महाधेर्म-हत्यामानसव्यथाया जनकात् सम्पादकात् ॥ ६० ॥

विषद्रुमस्य व्यसनाह्वयस्य
फलं स लब्ध्वा सहसा निवृत्तः ।
कान्तोपभोगेषु पराङ्मुखात्मा
निनाय कालं निरपत्यदुःखी ॥ ६१ ॥
असन्ततेः सन्ति कुतः सुखानी-
त्यस्यै विचिन्त्य प्रतिपन्नमन्युः ।
समं स्वदारैर्नियतः सुतार्थे
राजा सुरप्रार्थनतत्परोऽभूत् ॥ ६२ ॥

विषेति। निरपत्येन अपत्याभावेन दुःखी खिद्यमानः स दशरथः कान्तामनोज्ञाः उपभोगाविषयास्तेषु पराङ्मुखात्मा निवृत्तमनाः सन् कालं निनाय निरपत्यदुःखितया विषयरसमबहुमन्यमानो वृथा कालक्षेपञ्चकारेत्यर्थः। किम्भूतः सहसा हठात् व्यसनाह्वयस्य मृगयारूपव्यसननामकस्य विषद्रुमस्य विषवृक्षस्य फलम् अभिशापरूपं लब्ध्वा निवृत्तः, मृगयाव्यापारात् पराङ्मुखः।

पक्षे कान्तयोः पत्न्योः कुन्तीमाद्र्योरुपभोगेषु सम्भोगेषु शापवशात् पराङ्मुखात्मा, अतएव निरपत्येनापत्योत्पत्त्यभावेन दुःखी स पाण्डुः कालं निनाय। अन्यत् सर्वं पूर्ववत् ॥ ६१ ॥

असन्ततेरिति। असन्ततेरपुत्रस्य जनस्य इहामुत्र च कुतः सुखानि सन्ति भवन्ति। "नापुत्रकस्य लोकोऽस्ति श्रुतिरेषा सनातनी" इत्यादि स्मरणादिति, अस्यै सन्ततये विचिन्त्य प्रतिपन्नो विहितो मन्युर्येन्नो दैन्यं शोको वा येन तादृशोराजा दशरथः स्वदारैः स्वपत्नीभिः कौशल्यादिभिः समं सह नियतः कृतनियमः सन् सुतार्थे पुत्रलाभाय सुराणां देवानां प्रार्थने उपासने तत्परः आसक्तोऽभूत्। पुत्रार्थं देवानुपासितवानित्यर्थः।

पक्षे प्रतिपन्नमन्युर्गृहीतदैन्यो राजा पाण्डुर्नियतः सन् स्वदारैः कुन्ती-

एतस्मिन् सति समये विपक्षभीताः
क्षीराब्धेस्तटभुवमेत्य शक्रमुख्याः ।
गीर्वाणाः कृतनतिसूक्तयस्त्रिधाम्ने
लोकानामुदितमुपप्लवं शशंसुः ॥ ६३ ॥

सन्दिश्य त्रिदशगणं यथानुरूपं
तेजोंऽशैर्भुवि जननाय तत्र तत्र ।
दैत्यारिस्तदनु तमोनुदोऽन्ववाये
स्वैरंशैरवतरितुं चतुर्भिरैच्छत् ॥ ६४ ॥

माद्रीभ्यां समं सुराणां धर्मादीनां प्रार्थने आह्वाने तत्परोऽभूत् पूर्वं कुन्त्या शिक्षितेन दुर्वाससोपदिष्टेन मन्त्रेण धर्मादीनाकारितवानित्यर्थः। विचिन्त्यान्तं समानम्। "मन्युर्दैन्ये क्रतौ क्रुधि" इति हेमचन्द्रः ॥ ६२ ॥

एतस्मिन्निति। यदा दशरथेन यदा च पाण्डुना पुत्रार्थं सुराराधना कृता एतस्मिन् समये सति वर्तमाने सति शोभने वा विपक्षेभ्यो रावणादिभ्यः पक्षे कंसचैद्यादिभ्यो भीताः शक्रमुख्या इन्द्रप्रधाना गीर्वाणादेवाः क्षीराब्धेः क्षीरसमुद्रस्य तटभुवं तीरप्रदेशम् एत्य आगत्य कृता नतयः प्रणामाः सूक्तयः स्तुतयश्च यैस्तादृशाः सन्तः, त्रीणि स्वर्गमर्त्यपातालरूपाणि धामानि स्थानानि यस्य तस्मै त्रिधाम्ने सर्वव्यापकाय विष्णवे उदितं रावणादिद्वारा पक्षे कंसादिद्वारा उत्पन्नं लोकानां जनानाम् उपप्लवम् उपद्रवं शशंसुर्निवेदयामासुः। त्रिधाम्ने इति यदभिप्रेत्येत्यादिना चतुर्थी। "धाम रश्मौ गृहे देहे स्थाने जन्मप्रभावयोः" इति हेमचन्द्रः। प्रहर्षिणीवृत्तमिदं, "म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्" इति लक्षणात् ॥ ६३ ॥

सन्दिश्येति। तदनु तत्पश्चात् देवानां लोकोपप्लवशंसनानन्तरमित्यर्थः, दैत्यारिर्विष्णुः, तेजोंऽशैस्तेजोभागैः यथानुरूपं यथायोग्यं भुवि पृथिव्यां तत्र तत्र किष्किन्धादौ जननाय सुग्रीवादिरूपेण जन्मवदित्यस्य त्रिदशगणं देवगणं

ततो मुनिव्याहृतमन्त्रयुक्त्या
तदीयपत्नीपरिचर्यया च ।
भक्त्योपसत्त्या च नृपस्य जज्ञे
पिण्डोपलब्धिर्विबुधप्रसादात् ॥ ६५ ॥

सन्दिश्य, स्वयं तमोनुदः सूर्य्यस्य अन्ववाये वंशे दशरथगृहे चतुर्भिः स्वैः स्वकीयैरंशैर्भागैः रामलक्ष्मणभरतशत्रुघ्नरूपैरित्यर्थः, अवतरितुम् अवतीर्णो भवितुम् ऐच्छत्, यूयमपि मदीयसाहाय्यार्थम् ऋक्षवानरादिरूपेण पृथिव्यामवतरतेति देवानादिश्य स्वयं रामादिरूपेण सूर्यवंशेऽवतरितुमिच्छतिस्मेत्यर्थः ।

पक्षे तदनु दैत्यारिर्भुवि तत्र तत्र कुन्त्यादौ यथानुरूपं तेजोऽंशैः युधिष्ठिरादिरूपैर्जननाय त्रिदशगणं धर्मादिदेवानादिश्य स्वयं तमोनुदश्चन्द्रस्यान्ववाये यदुवंशे चतुर्भिः स्वैरंशैः प्रद्युम्नानिरुद्धसङ्कर्षणवासुदेवरूपैरवतरितुम् ऐच्छत्। प्रद्युम्नानिरुद्धसङ्कर्षणवासुदेवेति चतुर्व्यूहः श्रीकृष्णावतार इति पौराणिकाः । "चन्द्राग्न्यर्कास्तमोमोनुदे" इत्यमरः। पूर्वोक्तं वृत्तम् ॥ ६४ ॥

तत इति। ततस्तदनन्तरं मुनिना ऋष्यशृङ्गेण व्याहृता उक्ता ये मन्त्राः पुत्रेष्टिविषयिकाऋचः तेषां युक्त्या प्रयोगेण तथा तदीयपत्नीनां दशरथस्त्रीणां कौशल्यादीनां या परिचर्या देवानां मुनेर्वा सेवा तया च, तथा भक्त्योपसत्त्या भक्तिपूर्विकया तदेकनिष्ठतया च, विबुधानां देवानां प्रसादात् नृपस्य दशरथस्य पिण्डोपलब्धिः पुत्रोत्पत्त्या पिण्डर्नश्वयो यज्ञे जाता। तदीयपत्नी ऋष्यशृङ्गपत्नी दशरथसुता शान्त्या तस्याः परिचर्यया चेति केचित् ।

पक्षे ततोऽन्नृपस्य पाण्डोर्विबुधानां धर्मादीनां प्रसादात् क्षेत्रजपुत्रोत्पत्त्या पिण्डोपलब्धिर्जज्ञे, कयेत्याह मुनिना दुर्वाससा व्याहृतः कुन्त्यै दत्तोयोऽभीष्टदेवाह्वानकृन्मन्त्रस्तद्रूपा या युक्तिस्तया, तथा तदीयपत्न्योः कुन्तीमाद्र्योः परिपरिचर्यया धर्मादीनामुपासनया, तथा भक्त्या भक्तिद्वारा या उपसत्तिः कुन्तीमाद्र्योर्यथायथं धर्म्मादिषु सङ्गस्तया च। दुर्वासोदत्तमन्त्रेण कुन्त्या क्रमेण धर्मपवनेन्द्राणामाकारणा कृता तेन चास्यायुधिष्ठिरभीमसेनार्जुन-

स्फुरदृष्यशृङ्गविततान्यथान्वहं
सवनान्तराण्यधिगतो महीपतिः।
चतुरोऽपि पञ्चमुखभासुरश्रिय
स्तनयानवाप हरिदस्रतेजसः ॥ ६६ ॥

नामानस्त्रयः पुत्राजाताः, तदनु माद्र्या च तथैव अश्विनावाकारितौ। ततश्च तस्या अपि द्वौ पुत्रौ नकुलसहदेवनामानौ जाताविन्यर्थः ॥ ६५ ॥

उक्तमर्थं व्याकरोति स्फुरदिति। अथानन्तरं महीपतिर्दशरथः अन्वहं प्रतिदिनं स्फुरता तपःप्रभावाद्दीप्यमानेन ऋष्यशृङ्गेण मुनिना विततानि विहितानि सवनान्तराणि यज्ञभेदान् यज्ञविशेषजनितादृष्टानीत्यर्थः अधिगतः प्राप्तः सन् चतुरोऽपि न केवलमेकं चतुःसंख्यकानपि तनयान् रामलक्ष्मण-भरतशत्रुघ्नरूपान् पुत्रानवाप प्राप्तवान्, किम्भूतान् पञ्चमुखः शिवः सिंहो वा तद्वद्भासुरा दीप्तिशीला श्रीर्येषां तादृशान्, तथा हरिरिन्द्रः दस्रौ आश्विनेयौ स च तौ चेति द्वन्द्वः तेजोबलञ्च तेजः कान्तिश्चेत्येकशेषः हरिदस्राणामिव तेजसी येषां तादृशान् इन्द्रवद्बलवतः अश्विनीकुमारवत् कान्तिमतश्चेत्यर्थः। पञ्चा विस्तृता मुखेन भासुरा श्रीर्येषां तानित्यपरे।

पक्षे अथान्वहं वनान्तराणि वनमध्यानि अधिगतः स महीपतिः पाण्डुः चतुरोऽपि पुत्रोत्पत्त्यनुकूलसुरतव्यापारनिपुणः सन्नपि शापवशात् तदशक्ततया अगत्या हरिदस्राणां धर्मवाय्विन्द्राश्विनीकुमाराणां तेजसो वीर्य्यात् पञ्च तनयान् युधिष्ठिरादीन् अवाप, स्वस्यौरसोत्पादनसामर्थ्याभावात् धर्मादिषु नियोगेन क्षेत्रजान् पञ्चपुत्रान् प्राप्तवानित्यर्थः। किम्भूतानि वनान्तराणि, स्फुरन्त ऋष्या मृगविशेषा यत्र तादृशानि यानि शृङ्गाणि पर्वतशिखराणि तेषु विततानि विस्तृतानि, किम्भूतान् तनयान् मुखेन भासुरा श्रीर्येषां तान् प्रशस्तमुखशालिन इत्यर्थः। हरिदस्रेति हरिशब्देन एकशेषवशात् तात्पर्यविशेषग्रहाद्वा धर्म-वाय्विन्द्रास्त्रयोऽभिधीयन्ते, यद्यपि हरिशब्दस्य साक्षाद्धर्मवाचकत्वं न दृष्टं तथापि सर्वधर्मात्मकविष्णुवाचकत्वात् यमवाचकत्वाद्वा तथा कल्पयितुं शक्यते। अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये। छिद्रात्मीयविनावहिरवसर-

कृतार्थता कीदृगहो नृपस्य
यदेनमालम्बितपुत्रमूर्त्तिः ।
देवः स्वयं धर्म्ममयः सिषेवे
सहानुजन्मा गुरुभक्तिनम्रः ॥ ६७ ॥

स लक्ष्मणोन्नीतसमृद्धिरुद्य
च्छत्रुघ्नसम्पद्भरतैधितश्रीः ।
ज्यायान् विरेजे क्रमशोभि रामः
कौमारमासाद्य वयः कुमारः ॥ ६८ ॥

मध्यात्मसदृशेषु" इति "तेजो दीप्तौ प्रभावे च स्यात् पराक्रमरेतसोः" इति च मेदिनी। "हरिर्वातार्कचन्द्रेन्द्रयमोपेन्द्रमरीचिषु" इति विश्वः। मञ्जुभाषिणीवृत्तम्। "सजसाजगौ च यदि मञ्जुभाषिणी" इति लक्षणात् ॥ ६६ ॥

कृतार्थतेति। अहो विस्मये नृपस्य दशरथस्य पक्षे पाण्डोः कृतार्थता कृतकृत्यता कीदृक् अनिर्वचनीयेत्यर्थः, यत् यस्मात् एनं नृपम् आलम्बिता गृहीता पुत्रमूर्तिः पुत्ररूपं येन तादृशः सन् धर्मनयो धर्मरूपी देवो विष्णुः श्रीरामरूपेण पक्षे धर्ममयः साक्षात् धर्मोदेवो युधिष्ठिररूपेण स्वयं सिषेवे, किम्भूतः अनुजन्मभिः भरतादिभिः पक्षे भीमादिभिः सह वर्त्तमानः तथा गुरौ पित्रादौ या भक्तिस्तया नम्रः दर्शितविनयः ॥ ६७ ॥

स इति। स रामो रामनामा ज्यायान् ज्येष्ठः कुमारो राजपुत्रः कौमारं बाल्यं वय आसाद्य विरेजे शुशुभे, कौमारं यौवनमिति केचित्। किम्भूतं वयः क्रमेण शोभत इति क्रमशोभि, यद्वा नास्ति भीर्यत्र तदभिक्रमशः क्रमेण अभिभयशून्यं वयसोविशेषणम्। स किम्भूतः लक्ष्मणेन लक्ष्मणनामकभ्रात्रा उन्नीता उन्नतां प्रापिता समृद्धिः शोभासम्पत्तिर्यस्य सः, तथा उद्यती प्रकाशमाना शत्रुघ्नेन तन्नामकभ्रात्रा सम्पत् शोभाधिक्यं यस्य सः, उद्यतः शत्रुघ्नात् सम्पद्यस्येति

युधिष्ठिरं भीमधनञ्जयाभ्यां
समं दधानं नकुलेन लक्ष्मीम्।
समादवाप्तं सहदेवनिष्ठं
ज्येष्ठं सुतं वीक्ष्य तुतोष तातः॥ ६९॥

वा, तथा भरतनामक भ्राता एधिता वर्द्धिता श्रीः शोभा यस्य सः, एतेन रामलक्ष्मणभरतशत्रुघ्नाश्चत्वारो भ्रातर इति सूचितम्।

पक्षे, स ज्यायान् कुमारो युधिष्ठिरः कौमारं वय आसाद्य विरेजे, किम्भूतः लक्ष्मणेन साम्राज्यव्यञ्जकपद्मादिचिह्नेन उन्नीता अनुमिता समृद्धीराज्यसम्पत्तिर्यस्य सः, तथा उद्यतो स्पष्टं लक्ष्यमाणा शत्रुघ्नी रिपुनाशिका सम्पद्यस्य सः, तथा भरतस्य भरतवंशस्य एधिता शौर्येण सः भरतस्य नृपविशेषस्येव एधिता शौर्यस्येति वा, अथवा भरतो नटस्तद्वत् एधिता बान्धवैः कल्पिता शौर्यस्य सः बान्धवैर्नटवत् बालानां वेशः क्रियते इति व्यवहारः, तथा क्रमशः क्रमेण वयोवृद्ध्या अभिरामः मनोज्ञः। "लक्ष्मणं लाञ्छने नाम्नि रामभ्रातरि लक्ष्मणः" इति विश्वः। "रामानुजे नाट्यशास्त्रे दौष्मन्तौ भरतो नटे" इति पुरुषोत्तमः॥ ६८॥

युधिष्ठिरमिति। तातो दशरथः ज्येष्ठं सुतं रामं वीक्ष्य दृष्ट्वा तुतोष, किम्भूतं युधिष्ठिरं संग्रामस्थिरं संग्रामादपलायिनमित्यर्थः, तथा भीमोरुद्रः धनञ्जयोवह्निस्ताभ्यां समं सदृशं रुद्रवह्निवत्तेजस्विनमित्यर्थः, तथा कुले वंशे लक्ष्मीं शोभां न न दधानं धारयन्तं नञ्द्वयस्य प्रकृत्यर्थावगमकत्वात् कुलं शोभयन्तमित्यर्थः, तथा समात् साधोर्ऋष्यशृङ्गात् अवाप्तं प्राप्तम् ऋष्यशृङ्गकृतयज्ञफलात् प्राप्तमित्यर्थः, मा लक्ष्मीस्तया सह वर्त्तत इति समोविष्णुस्तस्मादवाप्तं नारायणांशसंभूतमिति वा, तथा देवनिष्ठया देवेषु भक्त्या सहवर्त्तत इति सहदेवनिष्ठस्तम्।

पक्षे तातः पाण्डुर्युधिष्ठिरं युधिष्ठिरनामकं ज्येष्ठं सुतं वीक्ष्य तुतोष, किम्भूतं भीमधनञ्जयाभ्यां भीमसेनार्ज्जुनाभ्यां समं सहितं तथा नकुलेन नकुलनामकेन भ्राता लक्ष्मीं दधानं तथा समात् पूर्वोक्तव्युत्पत्त्या नारायणात्

सन्तानलाभादनृणः पितॄणां
हर्षादसम्भावितपूर्वशापः ।
सार्द्धं स्वदारैरनुभूतकामः
स शक्रतोषैकरतिर्बभूव ॥ ७० ॥
विद्यागुरूणां निलयादवाप्य
काले कुमारा धृतराष्ट्रमेत्य ।

अवाप्तम् । समं साम्यम् अतति गच्छतीति समात् पक्षसु समानस्नेहवान् इति तातविशेषणम् अवाप्तं प्राक्तनपुण्यबलाल्लब्धमिति वा तथा सहदेवे सहदेवनामकभ्रातरि निष्ठा अनुरागी यस्य तम्। "भीमोऽम्लवेतसे घोरे शम्भौ मध्यमपाण्डवे" इति, "धनञ्जयोऽर्ज्जुने वह्निमागभिद्द्रुमारुते" इति "सर्वसाधुसमानेषु समं स्यादभिधेयवत्" इति च मेदिनी ॥ ६९ ॥

सन्तानेति । स्वदारैः कौशल्यादिभिः सार्द्धमनुभूताः कामा विषया येन तादृशः सः दशरथः यज्ञाद्यनुष्ठानेनासुरविनाशनेन वा शक्रस्य इन्द्रस्य तोषे एका केवला रतिरनुरागोयस्य तादृशोबभूव निश्चिन्ततया यज्ञादिना केवलमिन्द्रं तोषयामासेत्यर्थः, किम्भूतः सन्तानलाभात् पुत्रप्राप्त्या पितॄणामनृणः पितृणामुक्तः प्रजया पितृभ्य इति श्रुतिः, अतएव हर्षात् सन्तानलाभजनितानन्दात् असम्भावितोऽचिन्तितः अन्धमुनिदत्तः पूर्वशापोयेन सः ।

पक्षे हर्षात् असम्भावितोविस्मृतः पूर्वशापोमृगरूपिमुनिना दत्तः "सुरतासक्तोमरिष्यसि" इत्येवंरूपोयेन तादृशः स पाण्डुः स्वदारैर्माद्र्या सार्द्धम् अनुभूतकामः माद्र्यां कामासक्तः सन् शक्रतोषैकरतिर्बभूव माद्रीमुपगम्य पूर्वोक्तशापवशात् प्राणान् विहाय इन्द्रलोकं गत्वा तत्रावस्थानेन निरन्तरमिन्द्रं तोषयामासेत्यर्थः, अनुभूतकामः सन् स्वदारैः सार्द्धं शक्रतोषैकरतिर्बभूवेति वा, माद्र्याः सहमरणाश्रवणात् तया सार्द्धमिन्द्रलोकं जगामेत्यर्थः । अन्यत् समानम् ॥७०॥

विद्या इति । कुमारा रामादयः काले अध्ययनोपयुक्तसमये गुरूणां वशिष्ठादीनां निलयात् गृहात् विद्याः अवाप्य धृतं रक्षितं राष्ट्रं राज्यं येन तादृशं भूमिपतिं दशरथम् एत्य आगत्य ववन्दिरे प्रणेमुः, किम्भूताः जनानां

ववन्दिरे भूमिपतिं जनानां
विलोचनालीरनिमेषयन्तः ॥ ७१ ॥
गुणैरुपेतागुरुभीष्महृद्यैः
क्षत्तानुरूपैर्वचनैर्विनीताः ।
कृपाश्रयास्ते कुशलाः कलासु
प्रमाणकोटिप्रवणा विजह्रुः ॥ ७२ ॥

प्रेक्षकाणां विलोचनालीर्नयनपङ्क्तीरनिमेषयन्तः निमेषशून्याः कुर्वन्तः प्रेक्षकानतितरामानन्दयन्त इत्यर्थः ॥

पक्षे कुमारा युधिष्ठिरादयः काले पाण्डुमरणोत्तरं विद्यागुरूणां मुनीनां निलयात् तपोवनात् एत्य मुनिभिः सार्द्धमागम्य धृतराष्ट्रं धृतराष्ट्रनामानं भूमिपतिं पाण्डुज्येष्ठम् अवाप्य ववन्दिरे, अन्यत् समानम्। श्लिष्टकाव्ये व्यवहित-योजना न दोषायेति न कष्टत्वम्। "धृतराष्ट्रः सुराज्ञि स्यात् पक्षिचक्षिय-भेदयोः" इति विश्वः ॥ ७१ ॥

गुणैरिति। ते रामादयः विजह्रुः विहारं चक्रुः, किम्भूताः गुरुभिर्गभीरैः भीष्मैः शत्रूणां भयदैः, हृद्यैः साधूनां मनोज्ञैर्गुणैरुपेता युक्ताः, तथा क्षत्तानुरूपैः क्षत्रिययोग्यैर्वचनैर्विनीताः गुरुभिः शिक्षिताः, तथा कृपाया दयाया आश्रया आधाराः नीचेषु दयावन्त इत्यर्थः, तथा कलासु चतुःषष्टिप्रकारविद्यासु कुशलाः तथा प्रमाणानां हेतूनां कोटौ कोटिसंख्यकेष्वपि हेतुवादेष्वित्यर्थः प्रवणानि-पुणाः प्रमाणानां सत्यवादिनां कोटौ अग्रे प्रवणाः सत्यवादिमामग्रगण्या इत्यर्थः इतिवा, प्रमाणानां शास्त्राणां कोटावुत्कर्षे प्रवणा इति केचित्। "प्रमाणं नित्यमर्यादाशास्त्रेषु सत्यवादिनि। इयत्तायाञ्च हेतौ च क्लीवैकत्वे प्रमातरि" इति "कोटिः स्त्री धनुषोऽग्रेऽश्रौसंख्याभेदप्रकर्षयोः" इति च मेदिनी।

पक्षे ते युधिष्ठिरादयः विजह्रुः, किम्भूताः गुरुर्द्रोणाचार्य्यः भीष्मः शान्तनवः तयोर्हृद्यैर्हृदयङ्गमैर्गुणैरुपेताः, तथा क्षत्ता विदुरेण अनुरूपैर्योग्यैर्वचनैर्विनीताः, अस्मिन् पक्षे क्षत्रेति तृतीयान्तं भिन्नपदं, तथा कृपः कृपाचार्य्यः आश्रयो-गुरुर्येषां ते तथा, कलासु कुशलाः, तथा प्रमाणकोटिः कौरवाणां क्रीडाभूमि-

ते स्निग्धगम्भीरगिरः कुमारा
स्त्रैलोक्यतापप्रशमाय दक्षाः ।
नवाम्बुवाहा इव धार्तराष्ट्रा-
नुद्वेजयन्ति स्म चिरं विपक्षान् ॥ ७३ ॥
गुरुकृपोपनतायुधविद्यया
समधिकं परिबृंहिततेजसः ।

खल प्रवणाः । विदुरस्य विचित्रवीर्य्य-दास्यां जातत्वात् क्षत्तृशब्दवाच्यत्वम् । "क्षत्ता शूद्रात्क्षत्रियाजे प्रतीहारे च सारथौ । भुजिष्यातनयेऽपि स्याद्वियुक्त-वेधसोः पुमान्" इति मेदिनी ॥ ७२ ॥

ते इति । ते कुमारा रामादयः विपक्षान् शत्रून् चिरम् उद्वेजयन्तिस्म भीषितवन्तः, उपमिनोति—नवाम्बुवाहा इव धार्तराष्ट्रानिति यथा नवाम्बुवाहा नवीनमेघा विपक्षान् विकृतपक्षयुक्तान् धार्त्तराष्ट्रान् हंसविशेषान् उद्वेजयन्ति मानसगमनाय व्याकुलयन्ति तथेत्यर्थः, किम्भूताः कुमारा नवाम्बुवाहाश्च, स्निग्धाः स्नेहव्यञ्जिकाः अथ च अरूक्षाः गम्भीरा दुर्बोधाभिप्रायाः अथ च विशाला गिरोवचनानि अथ च निर्घोषा येषां ते तथा, त्रैलोक्यताप-प्रशमाय दक्षाः उपद्रवनिराकरणेन मेघपक्षे जलवर्षणेन त्रिलोकीतापशान्त्यै निपुणाः । वर्षाकाले मेघोदयादुद्विग्नचित्ता विकृतपक्षाश्च भूत्वा हंसा मानससरोवरं गच्छन्तीति कवीनां समयः ।

पक्षे ते कुमारा युधिष्ठिरादयः चिरं विपक्षान् बहुकालं जातवैरान् धार्त-राष्ट्रान् धृतराष्ट्रपुत्रान् दुर्योधनादीन् नवाम्बुवाहा इव उद्वेजयन्तिस्म, यथा नवाम्बुवाहा धार्तराष्ट्रान् हंसविशेषान् उद्वेजयन्ति तथेत्यर्थः, अन्यत् सर्वं पूर्ववत् । उपमेयं श्रौती । "धार्तराष्ट्रोऽसितास्याङ्घ्रिहंसे कौरव-सर्पयोः" इति मेदिनी ॥ ७३ ॥

उक्तमर्थं द्रढयति

गुर्विति । नृपसुता रामादयः परभीषणतां शत्रूणां भयङ्करत्वं दधुर्धृतवन्तः, किम्भूताः गुरूणामाचार्याणां कृपया अनुग्रहेण उपनता प्राप्ता या आयुध-

पवनसङ्गतपावकसन्निभा
नृपसुताः परभीषणतां दधुः ॥ ७४ ॥
रसप्रसङ्गैरपराजितानां
द्विजिह्वमार्गैर्न वशीकृतानाम् ।
तीव्रप्रतापज्वलनेन तेषां
भाव्यं भयं शत्रुगणोऽनुमेने ॥ ७५ ॥

विद्या धनुर्वेदस्तया समधिकं यथा स्यात्तथा परिबृंहितानि संवर्द्धितानि तेजांसि येषां ते अतएव पवनसङ्गतो वातोद्दीपितो यः पावको वह्निस्तस्य सन्निभा सादृश्यं येषां ते ।

पक्षे नृपसुता युधिष्ठिरादयः गुरुर्द्रोणः कृपः शारद्वतः ताभ्याम् उपनता या आयुधविद्या तया परिबृंहिततेजसः अन्यत् समानम् । द्रुतविलम्बितं वृत्तं "द्रुतविलम्बितमाह नभौ भरौ" इति लक्षणात् ॥ ७४ ॥

रसेति । शत्रुगणस्तेषां रामादीनां तीव्रो दुःसहो यः प्रतापज्वलनः प्रतापाग्निस्तेन भाव्यं भावि भयम् अनुमेने निश्चितवान् तेषां दुःसहप्रतापं दृष्ट्वा एतेभ्योऽस्माकं भयं भविष्यतीति निश्चितवानित्यर्थः तीव्रप्रतापज्वलनेन हेतुना तेषां भाव्यम् उत्पादनीयं भयमिति वा अस्मिन् व्याख्याने तेषामिति कर्तरि षष्ठी । नन्वास्तां नाम दुःसहप्रतापः युवानस्ते शृङ्गारादिपरतन्त्रा भविष्यन्ति ततश्च खलव्यवहारैः सुकरमेव तेषां वशीकरणं कथं भयसम्भावनेत्याशङ्कां विशेषणाभ्यां निराकरोति तेषां किम्भूतानां रसस्य शृङ्गारादेः प्रसङ्गैर्योगैरपराजितानाम् अनभिभूतानां जितेन्द्रियाणामित्यर्थः, तथा द्विजिह्वमार्गैः खलव्यवहारैर्न वशीकृतानाम् अनायत्तानाम् अतिबुद्धिमतामित्यर्थः, ये हि जितेन्द्रिया बुद्धिमन्तः प्रतापिनश्च तेभ्योभयसम्भावना युज्यत एवेति भावः ।

पक्षे शत्रुगणो दुर्योधनप्रभृतिः रसप्रसङ्गैर्विषप्रदानैरपराजितानां विनाशयितुमशक्तानां तथा द्विजिह्वानां सर्पाणां मार्गैरन्वेषणैर्दंशनादिभिर्न वशीकृतानां न विनाशितानां तेषां युधिष्ठिरादीनां तीव्रः प्रतापस्तापो यस्य

एवं काले याति भग्नारिरक्षो
दीव्यच्चेतोबाधितुं गाधिजन्मा ।
भीमद्वेषी भूमिपालं ययाचे
दायादस्य प्रेषणं धर्मयोनेः ॥ ७६ ॥

तादृशो ज्वलनः लाक्षागृहानलस्तेन भाव्यं सम्पादनीयं भयम् अनुमेने एते हि विषप्रदानादिभिर्न मृताः, इदानीं लाक्षामयं गृहं कृत्वा तत्र प्रवेश्य वह्निना विनाशयितव्या इति निश्चितवानित्यर्थः, रसप्रसङ्गैर्वासुकिसन्दिष्टामृतभोजनैरपराजितानां पराभवितुमशक्तानामिति वा । दुर्योधनः किल जलक्रीड़ावसरे सविषं भोज्यं भीमायादात् तद्भुक्त्वा विसंज्ञं तं नद्यां प्राक्षिपत् ततश्च तदवस्थो भीमो नागलोकं प्रविष्टः तत्र च सर्पैर्दंशनात् विषापायेन प्रत्युज्जीवितः सर्पाणां कदनं कृतवान् ततश्च तैर्विज्ञापितो वासुकिः सर्वं ज्ञात्वा परितुष्य भीमं रसं पाययामास येन सोऽतिबलवान् बभूवेति भारती वार्त्ता । "रसः स्वादे जले वीर्ये शृङ्गारादौ विषे द्रवे" इति, "द्विजिह्वः खलसर्पयोः" इति च हेमचन्द्रः ॥ ७५ ॥

एवमिति । एवमित्थं काले याति गच्छति सति गाधिजन्मा विश्वामित्रः भूमिपालं दशरथं धर्मयोनिर्धर्मोत्पादकस्य दायादस्य सुतस्य रामस्य प्रेषणं यज्ञरक्षार्थं तपोवने प्रेरणं ययाचे प्रार्थयामास, किं कर्तुमित्याह रक्षोयज्ञविघातकं राक्षसं ताड़कादिकं बाधितुं पीड़यितुं विनाशयितुमिति यावत्, किम्भूतं रक्षः भग्नारि भग्ना अरयो यतस्तत् अतिबलवदित्यर्थः तथा दीव्यत् निर्भयत्वात् क्रीड़त् सोत्साहमित्यर्थः, तादृशं चेतो यस्य तत्, गाधिजन्मा किम्भूतः भीमानां भयङ्कराणां राक्षसादीनां द्वेषी शत्रुः । रक्ष इति जात्याश्रयत्वादेकवचनम् ।

पक्षे भीमं वृकोदरं द्वेष्टीति भीमद्वेषी दुर्योधनः भूमिपालं धृतराष्ट्रं धर्माद्योनिरुत्पत्तिर्यस्य तादृशस्य धर्मसुतस्य दायादस्य ज्ञातेर्युधिष्ठिरस्य प्रेषणं वारणावते प्रेरणं ययाचे इतोयुधिष्ठिरादयोवारणावते यान्त्विति धृतराष्ट्रं प्रार्थयामासेत्यर्थः, अस्य धर्मयोनेर्युधिष्ठिरस्य दायात् स्वपितृांशात् प्रेषणं भ्रंशनं ययाचे इति वा, किम्भूतः भग्ना विघटिता अरीणां पाण्डवानां रक्षा

तद्वाक्यान्ते दत्तकर्णानुमोदः
पुत्रप्रीत्या जातकृच्छ्रः कुमारम् ।
धर्मात्मानं प्रेषयामास दूरं
विश्वामित्रप्रीतये भूमिपालः ॥ ७७ ॥
मात्रा समं सावरजः स राज्ञा
प्रस्थापितो धाम तपोधनानाम् ।

रक्षणं येन सः, तथा दीव्यच्चेतः सुनिर्वृतं मनस्तद्बाधते इति दीव्यच्चेतोबाधी तादृशोयस्तुङ्गः प्रबलतर आधिर्मानसव्यथा तस्य जन्म उत्पत्तिर्यत्र सः । उभयत्रापि भूमिपालमिति गौणं कर्म । "दायादौ सुतबान्धवौ"इत्यमरः । शालिनी वृत्तमिदम् । "शालिन्युक्ता मतौ तगौ गोऽब्धिलोकैः" इति लक्षणात् ॥७६॥

तदिति । भूमिपालोदशरथः विश्वामित्रस्य मुनेः प्रीतये धर्मात्मानं साक्षाद्धर्मस्वरूपं कुमारं रामं दूरं दूरदेशं तपोवनं प्रेषयामास, किम्भूतः तद्वाक्यान्ते तस्य मुनेर्वाक्यावसाने पुत्रप्रीत्या पुत्रस्नेहपरवशतया जातं कृच्छ्रं वियोगजदुःखं यस्य तादृशः सन्नपि शापभयात् दत्तः कर्णयोर्मुनेः श्रवणयोरनुमोदः पुत्रं प्रेषयिष्यामीतिवाक्यजनितहर्षो येन सः स्नेहाधिक्याद्व्याकुलोऽपि शापभयात् रामं प्रेषयामासेत्यर्थः ।

पक्षे भूमिपालोधृतराष्ट्रः विश्वेषामभित्राणां सर्वेषां शत्रूणाम् अथवा विश्वेषाम् अमित्रा दुर्योधनादयस्तेषां प्रीतये धर्मात्मानं धर्मजं कुमारं युधिष्ठिरं दूरम् अर्थात् रचितलाक्षागृहं वारणावते प्रेषयामास किम्भूतः तस्य दुर्योधनस्य वाक्यान्ते दत्तः कर्णेन राधेयेन अनुमोदो हर्षो यस्मै सः कर्णेन प्रोत्साहित इत्यर्थः, अतएव पुत्रप्रीत्या दुर्योधनादीनां स्नेहानुरोधेन अजातं कृच्छ्रं भ्रातुष्पुत्रवियोग-जनितदुःखं यस्य सः दत्तकर्णानुमोदइत्युभयत्रापि व्यधिकरणबहुव्रीहिः । "कर्णः पृथाज्येष्ठसुते सुवर्णालौ श्रुतावपि" इति मेदिनी । पूर्वोक्तं वृत्तम् ॥ ७७ ॥

मात्रेति । स रामः तपोधनानां मुनीनां धाम गृहरूपं स्थानान्तरम् अयोध्यातोभिन्नस्थानं प्रतस्थे प्रस्थितवान्, किम्भूतः माता समं कौशल्यया

स्थानान्तरं विद्विषतां रणेषु
समर्थकोदण्डधरः प्रतस्थे ॥ ७८ ॥
परिकल्पितकामदेहदाहं
विषयं प्राप्य सवा रणावतंसः ।
अविशङ्कमुवास तत्र भास्वद्
द्युतिलाक्षाभवने प्रदोषरुद्धः ॥ ७९ ॥

सहितेन राज्ञा दशरथेन प्रस्थापितः गन्तुं प्रेरितः, तथा सावरजः अवरजेन कनिष्ठेन लक्ष्मणेन सह वर्त्तमानः तथा विद्विषतां शत्रूणां रणेषु समर्थम् आमर्द्दसहं कोदण्डं धनुर्द्धरति धारयतीति तादृशः। धामेति प्रस्थापित इत्यस्य वा कर्म।

पक्षे राज्ञा धृतराष्ट्रेण प्रस्थापितः स युधिष्ठिरः हस्तिनातः स्थानान्तरं वारणावतं प्रतस्थे, न केवलमेक एव प्रतस्थे किन्तु मात्रादिभिरपीत्याह किम्भूतः माता समं कुन्त्या सहितः, तथा अवरजैर्भीमादिभिः सह वर्त्तमानः, तथा तपोधनानां स्नातकब्राह्मणानां धाम प्रतिपालकत्वादाश्रयः, प्रस्थापने हेतुगर्भविशेषणद्वयमाह पुनः किम्भूतः रणेषु समर्थकः शत्रून् पीड़यितुं शक्त इत्यर्थः तथा विद्विषतां दुर्य्योधनादीनां दण्डधरः बलवत्वात् दण्डकर्त्ता। समर्थक इति स्वार्थे कः॥ ७८॥

परीति। वा शब्दः पूर्व्वापेक्षया समुच्चये स वा स च रामः प्रदोषेण सायंकालोपस्थित्या रुद्धः रुद्धगमनः सन् परिकल्पितोमहादेवेन जनितः कामस्य कन्दर्पस्य देहस्य दाहोयत्र तादृशं विषयं गङ्गासरयूसङ्गमसन्निधौ कामतपोवनरूपम् अङ्गदेशं प्राप्य तत्र भास्वतः सायंकालीनसूर्य्यस्य द्युत्या लोहितकिरणेन लाक्षाभं लाक्षावल्लोहितायमानं यद्वनं तस्मिन् अविशङ्कं निर्भयं यथा तथा उवास, किम्भूतः रणावतंसः समरनिपुणः। कल्पविशेषे अङ्गदेशे भगवता शिवेन कामोदग्धः। तथा हि वाल्मीकीये बालकाण्डे। "कन्दर्पो- मूर्त्तिमानासीत् काम इत्युच्यते बुधैः। तपस्यन्तमिह स्थाणुं नियमेन समाहितम्। कृतोद्वाहन्तु देवेशं गच्छन्तं समरुद्गणम्। धर्षयामास दुर्म्मेधाहुङ्कृतश्च महात्मना

उपनतजनकृप्रश्लाघ्यमार्गे च तस्मिन्
विदुरवचनमाराद्दाप्तभावेन शृण्वन्।
अनयदपि कियन्तं कार्यमालोक्य कालं
प्रकटितगुरुभक्तिः सानुजो राजसूनुः ॥८०॥

अवध्यातश्च रुद्रेण चक्षुषा रघुनन्दन। व्यशीर्यन्त शरीरात् स्वात् सर्वगात्राणि दुर्मतेः। तत्र गात्रं हतं तस्य निर्दग्धस्य महात्मना। अशरीरः कृतः कामः क्रोधाद्देवेश्वरेण ह। अनङ्ग इति विख्यातस्तदा प्रभृति राघव। सचाङ्गविषयः श्रीमान् यत्राङ्गं स मुमोचह" इति विश्वामित्रवाक्यम्।

पक्षे स युधिष्ठिरः परिकल्पितोदुर्योधनादिभिराकाङ्क्षितः कामेनेच्छया पाण्डवानां देहदाहोयत्र तादृशं सवारणावतं वारणावतनामकनगरीसहितं विषयं देशं प्राप्य तत्र भास्वती देदीप्यमाना द्युतिः कान्तिर्यस्य तादृशं यत् लाक्षाभवनं जतुगृहं तस्मिन् विगता शङ्का यत्र क्रियायां तद्विशङ्कं न विशङ्कम् अविशङ्कं यथा तथा उवास विदुरवचनेन शत्रुचेष्टितज्ञानात् सशङ्कमुवासेत्यर्थः किम्भूतः प्रदोषैः प्रकृष्टदूषणशालिभिः दुर्योधनानुचरैः पुरोचनादिभीरुद्धः आवृतः। कामस्य राज्यप्राप्त्यभिलाषस्य देहस्य च दाहो यत्रेति वा, परिकल्पितेत्यत्र परकल्पितेति पाठे रामायणपक्षे परमतिशयेनेति भारतपक्षे परेण शत्रुणेत्यर्थः। "देशविषयौ तूपवर्त्तनम्" इत्यमरः। वैतालिकभेद औपच्छन्दसिकं वृत्तम्। "षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः। नसमात्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः। तत्रैवान्तेऽधिके गुरौ स्यादौपच्छन्दसिकं कवीन्द्रहृद्यम्" इति लक्षणात्॥ ७९ ॥

उपनतेति। चकारोऽपिश्च पूर्वापेक्षया समुच्चये सानुजः सलक्ष्मणो राजसूनू रामः आप्तभावेन प्रत्ययितत्वज्ञानेन विदुरस्य पण्डितस्य विश्वामित्रस्य वचनं इहैवाद्य स्थीयतामित्येवरूपं शृण्वन् सन् तस्मिन्ननङ्गतपोवने कार्यं सायंसन्ध्यादिरूपम् आलोक्य परामृश्य सायंसन्ध्याद्यर्थमित्यर्थः आरात् विश्वामित्रस्य समीपे कियन्तं कालम् अनयत् एकां रात्रिं गमयामासेत्यर्थः किम्भूतः प्रकटिता प्रकाशिता गुरौ विश्वामित्रे भक्तिर्येन सः तस्मिन्, किम्भूते उपनता-

स्वयमेधितचित्रभानुहेति-
स्फुरितां तां वसतिं विहाय भूयः।
सवनान्तरमुद्यतारिभीमः
स्वगुरूद्भूतधुरन्धरः प्रपेदे ॥ ८१ ॥

स्तत्रोपस्थिता ये जना मुनयस्तैः क्लृप्तः कृतः श्लाघ्यः प्रशंसनीयो मार्गो वर्त्म यत्र तत्तथा तस्मिन्।

पक्षे सानुजोभीमादिसहितोराजसूनुर्युधिष्ठिरः आरात् समीपे विदुरस्य कौरवमन्त्रिणोवचनं "राजानं बोधयामास विदुरो म्लेच्छभाषया" इत्याद्याचिप्तं लाक्षागृहे तस्मिन् सावधानतया वस्तव्यमित्यादिरूपम् आप्तभावेन शृण्वन् सन् भविष्यत् किमपि कार्य्यमालोक्य तस्मिन् लाक्षागृहे कियन्तं कालमनयत् किम्भूतः प्रकटिता वह्निः प्रकाशिता गुरौ धृतराष्ट्रे भक्तिर्येन सः, तस्मिन् किम्भूते उपनतः उपस्थितो यो जनः विदुरप्रेरितः खनकः तेन क्लृप्तोरचितः श्लाघ्यः प्रशस्तोमार्गोभूमध्यवर्त्म यत्र तस्मिन्। "विदुरोनागरे धीरे कौरवाणाञ्च मन्त्रिणि" इति विश्वः। मालिनीवृत्तम् ॥ ८० ॥

स्वयमिति। स रामः स्वयमेधित उदितोयश्चित्रभानुः सूर्य्यस्तस्य हेतिस्तेजस्तया स्फुरितां प्रकाशितां ताम् अनङ्गवनरूपां वसतिं स्थानं विहाय परित्यज्य भूयः पुनर्वनान्तरं ततोऽन्यद्वनं प्रपेदे प्राप्तवान् सूर्य्ये उदिते वनान्तरं जगामेत्यर्थः, यद्वा तां वसतिं रात्रिं विहाय गमयित्वा, किम्भूतां स्वयमित्यादि सूर्य्योदयात् किञ्चिज्जातप्रकाशामित्यर्थः। किम्भूतः उद्यता संग्रामे उद्युक्ता ये अरयस्तेषां भीमो भयङ्करः तथा स्वगुरुर्दशरथस्तस्मादुद्भूताम् उपस्थितां धुरं भारं धरति धारयतीति तादृशः।

पक्षे स बलवत्त्वेन प्रसिद्धोभीमः स्वगुरोर्युधिष्ठिरस्य उद्भूताम् उत्पन्नां धुरं गमनाशक्तान् कुन्त्यादीन् गृहीत्वा शीघ्रं गच्छेत्यादिरूपं युधिष्ठिरेणार्पितं भारमित्यर्थः धरति निर्वहतीति तादृशः सन् भूयोऽतिशयेन स्वयमेधितोवृद्धिं गतश्चित्रभानुः पुरोचनदत्तोऽग्निस्तस्य हेत्या शिखया स्फुरितां प्रज्वलितां वसतिं लाक्षागृहं विहाय शीघ्रं परित्यज्य खनकनिर्मितविवरवर्त्मना वनान्तरं वनमध्यं प्रपेदे जगाम, किम्भूतं वनान्तरम् उद्यतोऽरिर्हिडिम्बराक्षसोयत्र तादृशम्।

विलङ्घ्य गङ्गां व्रजतः सुदूर-
मम्लानदेहस्य बलानुभावात् ।
तस्याग्रतः सुन्दरतोज्ज्वलाङ्गी
निशाचरी प्रादुरभून्मदान्धा ॥ ८२ ॥

स्ववेगचकितोच्चलत्खगमृगाहिडिम्बावली
निरन्तरतरोदरी कृतककर्मदक्षा क्षणात् ।
निरीक्ष्य नृपनन्दनं मुखरकौशिके कानने
दशान्तरमुपागमत् किमपि कामचारोद्धुरम् ॥८३॥

"चित्रभानुः पुमान् वैश्वानरे चाहस्करेऽपि च" इति मेदिनी। "हेतिः स्यादायुधे ज्वाले हेतिस्तरणितेजसि" इति विश्वः। वसती रात्रिवेश्मनोरिति च। पूर्वोक्तं वृत्तम् ॥ ८१ ॥

विलङ्घ्येति। गङ्गां विलङ्घ्य उत्तीर्य सुदूरं व्रजतोगच्छतस्तस्य रामस्य अग्रतोनिशाचरी ताड़काभिधाना राक्षसी प्रादुरभूत् आत्मानं दर्शयामास, तस्य किम्भूतस्य बला विश्वामित्रेण दत्ता रक्षोघ्नी विद्या तस्या अनुभावात् सामर्थ्यात् अम्लानो देहोयस्य स तथा तस्य, निशाचरी किम्भूता सुन्दे सुन्दनामकेऽसुरे रता अनुरक्ता तथा उज्ज्वलम् उल्कया ऊर्द्धं ज्वलत् अङ्गं यस्याः सा मुखेनोल्कात्यागं कुर्वतीत्यर्थः तथा मदेन मत्ततया गर्वेण वा अन्धा विवेकशून्या।

पक्षे बलानुभावात् सामर्थ्यातिशयात् अम्लानदेहस्य तस्य भीमस्याग्रतः मदान्धा कामोन्मत्ता निशाचरी हिड़िम्बानाम्नी राक्षसी प्रादुरभूत् किम्भूता सुन्दरतया सौन्दर्य्येण उज्ज्वलमङ्गं यस्याः सा, अन्यत् समानम् ॥ ८२ ॥

स्ववेगेति। मुखरोविनाशयेनामिति वारंवारकथनात् वाचालः कौशिको विश्वामित्रो यत्र तादृशे कानने नृपनन्दनं रामं निरीक्ष्य ताड़का कामचारेण मुनिषु यथेष्टाचरणेन उद्धुरम् उत्कटं किमपि दशान्तरम् अवस्थान्तरम् अर्थान्मरणं क्षणान्निमेषार्द्धेन उपागमत् प्राप्तवती किम्भूता स्ववेगेन

विषमेषुप्रहारार्त्तां तां कृत्वा पततोद्रुतम् ।
स हिड़िम्बस्य शकलैरपुष्णात् पिशिताशिनः ॥८४॥

चकितास्त्रस्ताः अतएव उच्चलन्तः पलायमाना ये खगाः पक्षिणोमृगाश्चहरिणादय अहयः सर्पाश्च तेषां डिम्बावली भयध्वनयो यतः सा तथा निरन्तरतरम् अतिशयेनावधिशून्यम् अतिदीर्घमित्यर्थः परिधानशून्यं वा उदरं यस्याः सा तथा कृतककर्म्मणि कपटकार्य्ये दक्षा निपुणा। "डिम्बोभयध्वनावण्डे" इति "अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये" इति च मेदिनी।

पक्षे हिड़िम्बा नाम निशाचरी मुखराः कौशिकाः पेचका यत्र तादृशे कानने क्षणाद्धर्षात् नृपनन्दनं भीमं निरीक्ष्य कामचारेण मदनोद्रेकेण उद्धुरमुद्भूतं किमपि वक्तुमशक्यं दशान्तरं विकारम् उपागमत् किम्भूता स्ववेगेन चकिताः अतएव उच्चलन्तः खगामृगाश्च यतस्तादृशी तथा वलीभिस्त्रिवलीभिर्निरन्तरतरम् अतिशयेन व्याप्तम् उदरं यस्यास्तादृशी तथा कृतककर्मदक्षा कृत्रिमकर्मनिपुणा। "कौशिकोनकुले व्यालग्राहे गुग्गुलुशक्रयोः। कोषज्ञोलूकयोश्च स्याद्विश्वामित्रमुनावपि" इति मेदिनी। पृथ्वीवृत्तमिदम्। "जसौ जसयलावसुग्रहयतिश्च पृथ्वी गुरुः" इति लक्षणात् ॥ ८३ ॥

विषमेष्विति। स रामः द्रुतं शीघ्रं विश्वामित्रवचनानन्तरमेवेत्यर्थः तां ताड़कां विषमो दुःसहो य इषुर्बाणस्तस्य प्रहारेण पातनेन आर्त्तां पीड़ितां कृत्वा डिम्बस्य तस्या विपाटितादुदरान्निःसृतस्य कालखण्डस्य शकलैः खण्डैः कृत्वा पिशिताशिनामांसाशिनः पततः पक्षिणो गृध्रादीन् हि निश्चितम् अपुष्णात् पुपोष पततो निःसरतो डिम्बस्येति वा। "डिम्बः स्यात् कालखण्डके" इति कोषः।

पक्षे स भीमः तां हिड़िम्बां राक्षसीं विषमेषुः कामस्तस्य प्रहारेणार्त्तां कृत्वा स्वसौन्दर्य्यदर्शनया उद्दीपितमदनां कृत्वा द्रुतमापततस्तथाविधां भगिनीं दृष्ट्वा क्रोधवशाद्वेगादागच्छतोहिड़िम्बस्य हिड़िम्बाभ्रातृराक्षसविशेषस्य शकलैर्युद्धेन विनाशितस्य तस्य देहखण्डैः कृत्वा पिशिताशिनोगृध्रादीन् अपुष्णात् पिशिताशिनो राक्षसस्य हिड़िम्बस्य हि डिम्बस्यशकलैः कृत्वा पततः पक्षिणोऽपुष्णादिति वा भीमोहिड़िम्बं जघानेति भावः। "पततृपतरथाण्डजा" इति "भित्तं शकलखण्डे वा" इत्यामरः ॥ ८४ ॥

प्रतीपदर्शिनी सैषा विचचारास्य यत् पथि।
ततो गुरुगिरा तस्या जीवितेशो बभूव सः ॥८५॥

वचनमात्मगुरोरनुतिष्ठता
नृपसुतेन समेत्य निशाचरी।
अनुपतत्पिशिताशिघटोत्कचा
समययुक्तमपायमवाप सा ॥ ८६ ॥

प्रतीपेति। सैषा ताड़का अस्य रामस्य पथि वर्त्मनि यद्यस्मात् प्रतीपदर्शिनी प्रतिकूलमाचरन्ती सती विचचार बभ्राम ततोहेतोर्गुरोर्विश्वामित्रस्य गिरा वचसा स रामस्तस्यास्ताड़कायाः जीवितेशो यमो बभूव प्रतिकूलप्रवर्त्तिनीं तां विश्वामित्रस्यानुमत्या जघानेत्यर्थः एतेन "अवध्याञ्च स्त्रियं प्राहुस्तिर्यग्योनिगतामपि" इत्यादिस्मरणात् कथं रामः स्त्रियं ताड़कां हतवानिति तस्य जनापवादः परिहृतः तस्या आततायित्वेन वधार्हत्वात् गुरुवचनस्यावश्यानुष्ठेयत्वाच्च।

पक्षे सैषा प्रतीपदर्शिनी स्त्री हिड़िम्बेत्यर्थः यद्यस्मात् अस्य भीमस्य पथि पश्चाद्वर्त्मनि विचचार वारितापि भीममनुजगामेत्यर्थः ततो हेतोर्गुरोः कुन्त्या युधिष्ठिरस्य च गिरा स भीमस्तस्या नितान्तमनुरक्तात्वेन ज्ञातायाः हिड़िम्बायाः जीवितेशः स्वामी बभूव हिड़िम्बां परिणीतवानित्यर्थः। "प्रतीपदर्शिनीवामा" इत्यमरः। "जीवितेशो यमे पुंसि त्रिषु स्याज्जीवितेश्वरे" इति मेदिनी ॥८५॥

वचनमिति। सा निशाचरी राक्षसी ताड़का आत्मगुरोर्विश्वामित्रस्य वचनमनुतिष्ठता पालयता नृपसुतेन रामेण सह समेत्य मिलित्वा समययुक्तं कालप्रयुक्तम् अपायं मरणम् अवाप समययुक्तमिति रामरूपिणः कालादेव मरणं प्राप न तु सर्वभूतहितैषी रामस्तामवधीदित्यर्थः "कालः पचति भूतानि कालः संहरति प्रजाः" इत्यादिस्मरणात्। सा कीदृशी अनुपतन्ती अभ्यागच्छन्ती पिशिताशिनां मांसभोजनशीलानां गृध्रादीनां घटा समूहो यां सा तथा उद्गताः कचाः केशा यस्याः सा रक्षसां स्वभावादूर्द्ध्वकेशत्वात्।

पक्षे सा निशाचरी हिड़िम्बा आत्मगुरोः कुन्त्या युधिष्ठिरस्य च वचन-

महामुनेः प्राप्तवतस्तपोवनं
नरेन्द्रसूनोरथ धर्म्मजन्मनः ।
स्वभावनम्रस्य परा शरोद्भव-
प्रसादलाभेन बभूव निर्वृतिः ॥ ८७ ॥

तेनैवैकेन गुरुणा स निर्वृत्तप्रयोजनः ।
एकचक्राहितगतिर्भास्वानिव तदा बभौ ॥ ८८ ॥

मनुतिष्ठता नृपसुतेन भीमेन सह समेत्य दाम्पत्येन सङ्गम्य अनुपतन् उदरा न्निःसरन् पिशिताशी मांसभक्षणशीलो घटोत्कचस्तन्नामकः पुत्रो यस्यास्तादृशी सती प्रसूतघटोत्कचनामकपुत्रा सतीत्यर्थः समययुक्तं यदाहं स्मरिष्यामि तदागन्तव्यमित्येवं व्यवस्था समयस्तद्युक्तम् अपायं विश्लेषम् अवाप भीमं पतिं प्राप्य कियन्तं कालं तेन सह रम्यकाननपर्वतादौ विहृत्य घटोत्कचनामकं पुत्रञ्च प्रसूय निरुक्तव्यवस्थापूर्वकं वियोगं प्राप्तवतीत्यर्थः । द्रुतविलम्बितं वृत्तं "द्रुतविलम्बितमाह नभौ भरौ" इति लक्षणात् ॥ ८६ ॥

महामुनेरिति । अथ ताड़कावधानन्तरं महामुनेर्विश्वामित्रस्य तपोवनं प्राप्तवतो नरेन्द्रसूनो रामस्य शराणां वाणानाम् उद्भवः प्राप्तिर्यस्मात् तादृशो यः प्रसादस्तस्य लाभेन परा श्रेष्ठा निर्वृतिः सन्तोषो बभूव ताड़कावधसन्तोषिता- द्विश्वामित्रात् पुनरपि रक्षोघ्नान् शरान् लब्ध्वा रामोऽतितरां सुखी बभूवेत्यर्थः किम्भूतस्य धर्मजन्मनः धर्मोत्पादकस्य तथा स्वभावेन नम्रस्य विनीतस्य ।

पक्षे अथानन्तरं महामुनेः शालिहोत्रस्य तपोवनं प्राप्तवतो धर्मजन्मनोधर्म्मो- त्पन्नस्य स्वभावनम्रस्य नरेन्द्रसूनोर्युधिष्ठिरस्य पराशरोद्भवोव्यासस्तस्य प्रसाद- लाभेन निर्वृतिर्बभूव शालिहोत्राश्रमे व्याससन्दर्शनं जातमिति भावः । वंशस्थ- विलं वृत्तम् ॥ ८७ ॥

तेनेति । स रामस्तदा तस्मिन् समये एकेनाद्वितीयेन तेनैव विश्वामित्रेणैव गुरुणा निर्वृत्तं सम्पादितम् अस्त्रशिक्षारूपं प्रयोजनं कार्य्यं यस्य तादृशः सन् भास्वान् सूर्य्य इव बभौ शुशुभे सूर्य्यवदतितेजस्वी जात इत्यर्थः । किम्भूतः एकं मुख्यं यच्चक्रं राष्ट्रं मिथिलेत्यर्थः तत्र आहिता विश्वा-

तस्मिन् प्रदेशे नृपसूनुसङ्गात्
सनाथभावं सहसा प्रपन्ने ।
क्रतुक्रियासक्तधियां मुनीनां
रक्षोनिमित्तं भयमुद्दिदीपे ॥ ८९ ॥

रक्षोहितद्विजायस्तदृष्टिमात्राभिनोदितः ।
मरुदानन्दनो यत्नमातस्थौ नृपनन्दनः ॥ ९० ॥

भिन्नेषा निश्चिता गतिर्गमनं यस्य सः इतः परं रामं सीतास्वयम्बरे मिथिलां गमयिष्यामीति विश्वामित्रोनिश्चितवानिति भावः। भास्वानपि एकचक्राहितगतिः एकचक्रयुक्तरथेन गमनवान् भवति। "चक्रः कोके पुमान् क्लीवं व्रजे सैन्यरथाङ्गयोः। राष्ट्रे दम्भान्तरे कुम्भकारोपकरणास्त्रयोः" इति मेदिनी।

पक्षे स युधिष्ठिरस्तदा एकचक्रे एकचक्रनामकनगरे आहितगतिः कृतगमनः सन् भास्वानिव बभौ, किम्भूतः एकेन तेनैव गुरुणा व्यासेन निर्वृत्तं निर्दिष्टं कथितमित्यर्थः प्रयोजनं पाञ्चालदेशे द्रौपदीस्वयम्बरोभविष्यति भवद्भिस्तत्र गन्तव्यमित्यादिरूपं यस्य सः। उपमेयं श्रौती ॥ ८८ ॥

तस्मिन्निति। तस्मिन् प्रदेशे विश्वामित्रतपोवनभूमौ नृपसूनुसङ्गात् रामसम्बन्धात् सनाथभावं नाथसहितत्वं प्रपन्ने प्राप्ते सति क्रतुक्रियायां यज्ञकर्म्मणि आसक्ता धीर्मतिर्येषां तादृशानां मुनीनां रक्षोनिमित्तं राक्षसजन्यं भयं सहसा उद्दिदीपे जातं ताड़काविनाशात् जातामर्षा राक्षसाः पुनरपि मुनीनां यज्ञक्रियां विघातयितुमारब्धवन्त इत्यर्थः।

पक्षे तस्मिन् एकचक्राख्ये प्रदेशे नृपसूनुसङ्गात् युधिष्ठिरसम्बन्धात् सनाथभावं प्रपन्ने सति मुनीनां रक्षोनिमित्तं वकराक्षसजन्यं भयम् उद्दिदीपे, अन्यत् समानम् ॥ ८९ ॥

रक्ष इति। मरुतोदेवानानन्दयति यज्ञद्रोहीराक्षसान् विनाश्य सन्तोषयतीति मरुदानन्दनो नृपनन्दनो रामः राक्षसवधार्थं यत्नम् उद्यमम् आतस्थौ कृतवान्, किम्भूतः रक्षसाम् अहिता द्वेष्टारो ये द्विजा ऋत्विजस्तैरायस्ता रामं प्रति प्रक्षिप्ता या दृष्टयश्चक्षूंषि तन्मात्रेण भयाकुलत्वान्नतु वचसा अभिनोदितः प्रेरितः।

मारीचेष्टमनिष्टकारिणमसौ सिद्धाश्रमस्थायिनां
विप्राणामभयार्थमध्वरविधेर्गोप्ता गुरोराज्ञया ।
सद्यः सानुचरं निशाचरपतिं भीमः सुबाहुं रणे
दोर्वीर्य्येण जघान वीरपदवीमारुह्य घोराम्बकम् ॥ ८१

भूचरद्विजगणाशनं द्विषं
खेचरद्विजगणाशनं तदा ।

पक्षे मरुदानन्दनो नृपनन्दनाभीमः रक्षसो वकस्य हितस्तद्दिनभोज्यत्वात् पथ्यो यो द्विजोब्राह्मणस्तत्र आयस्ता कारुण्यात् प्रक्षिप्ता दृष्टिर्यत्र क्रियायां तद्यथा तथा मात्रा कुन्त्या अभिनोदितः प्रेरितः सन् वकस्य विनाशाय यत्नमातस्थौ राक्षसभक्षणभीतं ब्राह्मणं दृष्ट्वा सञ्जातदयया कुन्त्या नियुक्तो-भीमो वकराक्षसं विनाशयितुं भोज्यसहितस्तद्गृहमगादित्यर्थः । "मरुद्देवे समीरे ना ग्रन्थिपर्णे नपुंसकम्" इति मेदिनी ॥ ८० ॥

मारीचेष्टमिति । अध्वरविधेर्यज्ञक्रियाया गोप्ता रक्षिता असौ रामः विप्राणाम् अभयार्थमभयदानाय गुरोर्विश्वामित्रस्य आज्ञया रणे युद्धे दोर्व्वीर्य्येण स्ववाहुबलेनैव सद्यस्तत्क्षणात् सानुचरंससैन्यं सुबाहुं सुबा-हुनामानं निशाचरपतिं राक्षसश्रेष्ठं जघान, किम्भूतः स्वभावतः शान्तमूर्त्तिरपि वीरपदवीं वीरमार्गम् आरुह्य प्राप्य भीमः भयङ्करः, निशाचरपतिं किम्भूतं मारीचस्य मारीचनामकस्य राक्षसस्य इष्टं भ्रातृत्वात् प्रियं तथा सिद्धाश्रमस्था-यिनां तपोवनवासिनां मुनीनामनिष्टकारिणम् अपकारकं तथा घोरे भयङ्करे अम्बके चक्षुषी यस्य स तथा तम् । "देवदीपस्तु लोचनम् अम्बकम्" इति पुरुषोत्तमः ।

पक्षे असौ भीमो भीमसेनः गुरोः कुन्त्या आज्ञया रणे घोरां भयानकां वीरपदवीमारुह्य दोर्वीर्य्येण वाहूबलेनैव नतु वाणादिना वकं वकनामकं निशाचरपतिं सद्यो जघान, किम्भूतं मारी जनक्षयस्तत्र चेष्टा यस्य स तथा तं तथा सानुषु पर्वतगुहासु चरतीति सानुचरस्तं तथा सुबाहुं दीर्घभुजम्, अन्यत् समानम् । "मारी चण्ड्यां जनक्षये" इति मेदिनी । शार्दूलविक्रीड़ितं वृत्तम् ॥ ८१ ॥

तं विधाय कुलमग्रजन्मनां
राक्षसक्षयकरोररक्ष सः ॥ ६२ ॥

द्विजराजगवीभिः स वर्द्धितश्रीर्नृपात्मजः।
जगदानन्दयन् साक्षात् कामदेव इवाबभौ ॥६३॥

इति राघवपाण्डवीये महाकाव्ये प्रथमः सर्गः।

भूचरेति। स रामः भुवि पृथिव्यां चरन्तीति भूचरा ये द्विजगणा ब्राह्मणगणास्तानश्नातीति तादृशं द्विषं खलं तं सुबाहुं खेचरा अन्तरीक्षचारिणो ये द्विजगणाः पक्षिगणास्तेषामशनं भक्ष्यं विधाय कृत्वा अग्रजन्मनां ब्राह्मणानां कुलं समूहं ररक्ष रक्षितवान्, किम्भूतः राक्षसानां क्षयं नाशं करोतीति तादृशः।

पक्षे तं वकं, कुलं वंशं, स भीमः, अन्यत् समानम्। "दन्तविप्राण्डजा द्विजा" इत्यमरः। रथोद्धतावृत्तमिदम्। "रान्नराविह रथोद्धता लगौ" इति लक्षणात् ॥ ६२ ॥

द्विजेति। द्विजराजगवीभिर्ब्राह्मणश्रेष्ठानां वचनैर्वर्द्धिता श्रीर्यस्य तादृशः स नृपात्मजो रामः पक्षे भीमश्च जगत् भुवनम् आनन्दयन् राक्षसविनाशात् सन्तोषयन् सन् साक्षात् कामदेव इव कन्दर्प इव आबभौ शुशुभे, कामदेवोऽपि द्विजराजगवीभिश्चन्द्रकिरणैर्वर्द्धितश्रीर्भवति जगच्चानन्दयति अथ च कामदेव एतद्ग्रन्थकारयिता नृपतिविशेषः उपमानतया तस्याप्युल्लेखः कृतः सोऽपि ब्राह्मणवचनैर्वर्धितश्रीर्जगच्चानन्दयति, एवमुत्तरत्रापि सर्गाणां समाप्तौ श्लिष्टतया कामदेवशब्देन तस्यैवोट्टङ्कनं करिष्यति। द्विजराजगवीति "गौरतद्धितलुकि" इति राजादित्वाट्टः, क्वचित स इत्यत्र समिति पाठः सतु न सम्यक् यतिभङ्गदोषात्। उपमेयं श्रौती ॥ ६७ ॥

इति महामहोपाध्याय श्रीप्रेमचन्द्र-तर्कवागीश-भट्टाचार्यविरचितायां कपटविपाटिकाख्यायां राघवपाण्डवीयमहाकाव्यटीकायां प्रथमः सर्गः।

---

# द्वितीयः सर्गः ।

नृपेण कन्यां जनकेन दित्सिता-
मयोनिजां लम्भयितुं स्वयम्वरे ।
द्विजप्रकर्षेण स धर्मनन्दनः
सहानुजस्तां भुवमप्यनीयत ॥ १ ॥

अथ सीताद्रौपद्योर्विवाहं वर्णयितुं द्वितीयसर्गमारभते

नृपेणेति । जनकेन जनकनाम्ना नृपेण स्वयम्वरे दित्सितांदातुमिष्टाम् अयोनिजां भूमेरुद्भूतां कन्यां सीतानाम्नीं लम्भयितुं प्रापयितुं द्विजेषु प्रकर्षं उत्कृष्टता यस्य स तथा तेन विश्वामित्रेणेत्यर्थः सहानुजो लक्ष्मणेन सहितो धर्मनन्दनोरामः तां तदीयां जनकसम्बन्धिनीं भुवमपि मिथिलामपि अनीयत प्रापितः, न केवलं स्वकार्यसिद्ध्यर्थं स्वाश्रमं नीतः किन्तु सीतां ग्राहयितुं मिथिलामपि नीत इत्यपेरर्थः, सीतास्वयम्वरे जनकेन निमन्त्रितो विश्वामित्रस्तां रामाय दापयितुं रामलक्ष्मणाभ्यां सह मिथिलां गतवान् इत्यर्थः । धर्म्मनन्दन इति धर्मं नन्दयति धर्मद्रुहां रक्षसां विनाशाद्वर्धयतीति सः, यद्वा धर्मेण धर्मसंस्थापनेन मुनीन् नन्दयतीति तादृशः ।

पक्षे जनकेन कन्यायाः पित्रा द्रुपदेन स्वयम्वरे दित्सिताम् अयोनिजां यज्ञवेदिसम्भूतां कन्यां द्रौपदीं लम्भयितुं द्विजप्रकर्षेण व्यासेन सहानुजो भीमार्जुनादिसहितः स धर्मनन्दनो धर्मात्मजो युधिष्ठिरस्तां द्रुपदसम्बन्धिनीं भुवं पञ्चालदेशम् अपि निश्चितमनीयत व्यासवचनात् द्रौपदीस्वयम्वरे पञ्चाल-देशं गतवानित्यर्थः । स्वयम्वर इति स्वयमात्मना पतिर्व्रियतेऽस्मिन्निति अधिकरणे ङः । "जनकः पितृभूभुजोः" इति मेदिनी । वंशस्थविलं वृत्तम् ॥ १ ॥

मार्गेष्वथो दीर्घतमःसुतस्य
कलत्रकृच्छ्रप्रतिमोचनेन ।
अङ्गारवर्णस्य जितात्मनोऽसौ
चकार तोषं नरदेवजन्मा ॥ २ ॥
सार्धं द्विजैः संवृतधाम्नि जिष्णा-
वुपेयुषि ख्यातककुत्स्थवंश्ये ।

मार्गेष्विति। अथो अनन्तरम् असौ नरदेवजन्मा रामः मार्गेषु पथिषु दीर्घतमा मुनिविशेषस्तस्य सुतस्य गौतमस्य कलत्रकृच्छ्रप्रतिमोचनेन कलत्रं पत्नी अहल्येत्यर्थः तस्य यत् कृच्छ्रं पाषाणभावेनावस्थानरूपं कष्टं तस्य प्रतिमोचनेन मोचनेन तोषं हर्षं चकार, अहल्यां शापमुक्तां कृत्वा गौतमं सन्तोषयामासेत्यर्थः। किम्भूतस्य अङ्गारवर्णस्य तेजस्वित्वात् ज्वलदङ्गारप्रतिमरूपस्य, तथा जितात्मनः जितेन्द्रियस्य।

पक्षे असौ नरदेवजन्मा अर्जुनः दीर्घतमःसु दीर्घाणि निविड़ानि तमांसि अन्धकारा यत्र तादृशेषु मार्गेषु गङ्गासमीपवर्त्मसु जित आग्नेयास्त्रेणाधीनीकृत आत्मा शरीरं यस्य तादृशस्य तस्यातिप्रसिद्धस्य अङ्गारवर्णस्य अङ्गारवर्णनाम कस्य चित्ररथापरनामकगन्धर्वस्य कलत्रात् तत्पत्नीकृतविनयाद्धेतोः कृच्छ्रात् वधरूपात् कष्टात् यत् प्रतिमोचनं तेन तोषं चकार। अयमर्थः रात्रौ गङ्गासमीपे गच्छत्सु पाण्डवेषु स्त्रीभिः सार्द्धं क्रीड़ता अङ्गारवर्णगन्धर्वेण तिरस्कृत्यार्जुनं प्रति बाणः प्रक्षिप्तः, अर्जुनस्तु उल्मुकेन तं बाणं निवार्य आग्नेयास्त्रेण तद्रथं भस्मीकृत्य च गृहीत्वा यदा तं विनाशयितुमुद्यतस्तदानीं तत्पत्नी पत्युर्मोचनार्थमतिविनयं कृतवती, तच्छ्रुत्वा चार्जुनस्तं मुमोचेति भारतवार्ता। अङ्गारवर्णेत्यत्र अङ्गारपर्णेति बहुषु प्रामाणिकभारतपुस्तकेषु पाठोदृश्यते अत्रापि यदि सएव स्यात् तदा रामायणपक्षे अङ्गस्य देहस्य आरो धारणं येभ्यस्तादृशानि पर्णानि पत्राणि यस्य तथा तस्य, गलत्पर्णानि भुक्त्वा शरीरं धारयत इत्यर्थः इति व्याख्येयम्। इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिवृत्तम् ॥ २ ॥

नयज्ञसेनस्य नयोपपन्ना
राज्ञः पुरी भूपतिभिः पुपूरे ॥ ३ ॥
आलोलचामरमरालचितान्तरालै-
श्छत्रोत्करैः स्तवकिता पृथिवीश्वराणाम् ।
नानादिगन्तरजुषां कमलाकराणा-
मेकालयत्वमिव सा नगरी जगाम ॥ ४ ॥

सार्धमिति। जिष्णौ जयशीले ख्यातककुत्स्थवंश्ये ख्यातोऽतिप्रसिद्धो यः ककुत्स्थस्य नृपविशेषस्य वंशोऽन्ववायस्तत्र भवे रामे द्विजैर्विश्वामित्रादिभिः सार्धम् उपेयुषि मिथिलां प्राप्ते सति नयज्ञा नीतिकुशला सेना यस्य तादृशस्य राज्ञो जनकस्य नयोपपन्ना नीतिविलसिता पुरी नगरी भूपतिभिः सीता-विवाहार्थं निमन्त्रितैराजभिः पुपूरे व्याप्ता, किम्भूते संवृतं प्रतिच्छन्नं धाम प्रभावो यस्य तस्मिन्। यद्यपि रामायणे नृपाणामागमनं न वर्णितं तथापि नरसिंहपुराणादौ वर्णितमिति नानुपपत्तिः। यथा "नानादेशादथायाता जन-कस्य निवेशनम्। राजपुत्रा महावीर्याः पूर्वं सीताभिकाङ्क्षिणः" इत्यादि।

पक्षे संवृतधाम्नि ब्राह्मणवेशधारित्वात् अप्रकटितचात्रतेजसि जिष्णौ अर्ज्जुने द्विजैर्ब्राह्मणैः सार्धम् उपेयुषि सति यज्ञसेनस्य द्रुपदस्य राज्ञो नयोपपन्ना पुरी भूपतिभिर्न पुपूरे अपि तु-पुपूर एवेति काकुः, किम्भूते ख्यातककुत्स्थवंश्ये ककुदः कलङ्कस्य स्था स्थितिर्यत्र स तथा ककुत्स्थश्चन्द्रः ख्यातो यः ककुत्स्थस्य वंशस्तत्र भवे चन्द्रवंशजे इत्यर्थः, जिष्णावित्युपलक्षणं युधिष्ठिरादीनामपि द्रुपदपुरीगमनस्य भारते वर्णनात्। "अर्ज्जुनः फाल्गुनो जिष्णुः" इति पुरुषोत्तमः "ककुत्स्थान्म ख्यचिह्नयोः" इति कोषः॥ ३ ॥

आलोलेति। सा नगरी जनकपुरी पक्षे द्रुपदपुरी पृथिवीश्वराणां राज्ञां छत्रोत्करैरातपत्रसमूहैः स्तवकिता सती श्वेतत्वात् पुण्डरीकवृन्दस्वरूपैश्छत्रै-र्व्याप्ता सतीत्यर्थः, नानादिगन्तरजुषां नानादेशस्थितानां कमलाकराणां पद्माकराणाम् एकालयत्वम् एकाधारत्वमिव जगाम प्राप्तवती, नैषा श्वेतच्छत्र-समूहव्याप्ता नगरी किन्तु सव पद्माकराः किमेकत्रास्यां नगर्यां पुञ्जीभूता

सद्यो मृष्टाभरणकिरणैः पूरयन्तो दिगन्तान्
वीर्योत्कर्षादहमहमिकां भूभृतो दर्शयन्तः।
वैन्ध्यं वैन्ध्यास्तरव इव ते पुष्पिताः सानुभागं
चत्रायत्ते विहितरतयः शोभयन्ति स्म रङ्गम् ॥५॥

अथानुरूपेण जनेन गुप्ता
मनोज्ञवेशा मनुजेन्द्रकन्या।

इति तात्कालिकाः सम्भावयामासुरित्यर्थः। किम्भूतैश्चलोत्करैः आलोलानि चञ्चलीक्रियमाणानि यानि चामराणि बालव्यजनानि तान्येव मराला राजहंसास्तैश्रितानि व्याप्तानि अन्तरालानि मध्यानि येषां तैः, राजहंसा अपि पद्मानां मध्येऽवतिष्ठन्ते, नानादिगन्तरजुषामिति काकाक्षिगोलकन्यायात् पृथिवीश्वराणामपि विशेषणं, पृथिवीश्वरा अपि कमलाकराः कमलाया लक्ष्म्या आकरा आश्रया भवन्ति। अत्र छत्रोत्कराणां पुण्डरीकोत्करत्वारोपस्यार्थत्वादेकदेशविवर्त्तिरूपकं तदनुप्राणिता च एकालयत्वमिवेत्यत्रोत्प्रेक्षा तेन चात्र रूपकोत्प्रेक्षकयोरङ्गाङ्गिभावः सङ्करः। वसन्ततिलकं वृत्तम् ॥४॥

सद्य इति। ते भूभृतो राजानो रङ्गं स्वयम्बरसमाजं शोभयन्तिस्म किम्भूताः सद्यस्तत्कालं मृष्टानि संस्कृतानि यानि आभरणानि अलङ्कारास्तेषां किरणैर्दीप्तिभिर्दिगन्तान् दिग्भागान् पूरयन्तः प्रकाशयन्तः तथा वीर्यस्य बलस्य उत्कर्षादाधिक्यात् अहमहमिकां परस्परमहङ्कारं दर्शयन्तः प्रकटयन्तः, तथा चत्रायत्ते क्षत्रियसाध्ये कर्मणि एकत्र हरधनुर्भङ्गे अन्यत्र लक्ष्यवेधे विहिता रतिरनुरागो यैस्तादृशाः। उपमिनोति पुष्पिताः सञ्जातकुसुमा वैन्ध्या विन्ध्यपर्वतोत्पन्नास्तरवो वृक्षा वैन्ध्यं विन्ध्यसम्बन्धिनं सानुभागं प्रस्थप्रदेशमिव, यथा पुष्पिता वैन्ध्यास्तरवो वैन्ध्यं सानुभागं शोभयन्ति तथेत्यर्थः। उपमेयं श्रौती। "अहमहमिका तु सा स्यात् परस्परं यो भवत्यहङ्कारः" इत्यमरः। मन्दाक्रान्तावृत्तमिदम् ॥ ५ ॥

अथेति। अथ राज्ञां सभाप्रवेशानन्तरं मनुजेन्द्रकन्या सीता पक्षे द्रौपदी

उपाययौ लोचनवर्त्म राज्ञा-

माज्ञेव मूर्ता मकरध्वजस्य ॥ ६ ॥

सा तत्र यानादवतीर्य तन्वी

सौदामिनीवाम्बुदराजिमध्यात्।

समीपमाप स्वपणीकृतस्य

चापस्य पुष्पायुधचापयष्टिः ॥ ७ ॥

शक्तिर्मूर्तिमयी स्मरस्य जगतीनारीमयं मण्डनं

कान्तानामुपमानकल्पनकला कान्तेः समुत्तेजनम्।

च राज्ञां लोचनवर्त्म नयनपथम् उपाययौ गतवती सा तैर्दृष्टेत्यर्थः, किम्भूता अनुरूपेण योग्येन जनेन कञ्चुकिप्रभृतिना गुप्ता रक्षिता, तथा मनोज्ञो रमणीयो वेशो यस्याः सा, तथा मकरध्वजस्य कामस्य मूर्ता मूर्तिमती आज्ञेव यूनां वशीकरणे अनुमतिरिव सौन्दर्येण वशीकृतराजसमूहेत्यर्थः। उत्प्रेक्षेयम् ॥६॥

सेति। सा तन्वी क्षीणाङ्गी सीता द्रौपदी च तत्र रङ्गे यानात् शिविकाया अवतीर्य अवरुह्य स्वपणीकृतस्य स्वस्या विवाहाय शुल्कीकृतस्य चापस्य हरधनुषः पक्षे लक्ष्यवेधार्थं स्थापितस्य धनुषः समीपम् आप प्राप्तवती, किम्भूता पुष्पायुधस्य कामस्य चापयष्टिर्धनुर्दण्डरूपा अतितरां कामोद्दीपिकेत्यर्थः, केव अम्बुदराजिमध्यात् मेघपङ्क्तिमध्यात् सौदामिनीव विद्युदिव, यथा अम्बुदराजिमध्यादवतीर्य वहिर्निर्गत्य सौदामिनी शोभते तथेत्यर्थः। अत्र सौदामिनीवेत्युपमायाः पुष्पायुधचापयष्टिरिति रूपकस्य च परस्परमनपेक्ष्य स्थितत्वादुपमारूपकयोः संसृष्टिरलङ्कारः "मिथोऽनपेक्षयैतेषां स्थितिः संसृष्टिरुच्यते" इति लक्षणात् ॥ ७ ॥

शक्तिरिति। सा सीता पक्षे द्रौपदी च राजव्रजस्य राजसमूहस्य चक्षुषाम् आनन्दस्य आह्लादस्य पण्यस्थली क्रयस्थानमभूत्, आनन्द एव पण्यं क्रेयवस्तु तस्य स्थलीति वा, तां दृष्ट्वा राजान आनन्दमग्ना बभूवुरित्यर्थः, किम्भूता स्मरस्य

लक्ष्मीः संसृतिसागरस्य सरसी लावण्यपुण्याम्भसां
सा राजव्रजचक्षुषां क्षणमभूदानन्दपण्यस्थली ॥८॥
सौन्दर्यश्रीपताका निखिलयुवमनःशृङ्खला लोकचक्षुः-
पक्ष्मस्पन्दव्युदासः सुरमुनिहृदयाकर्षणे कामपाशः।
तारुण्योद्यानवल्ली पतिसुकृतकला कामकोदण्डमौर्वी
रेजे तद्दोर्लताग्रे वरवरणविधौ कल्पिता पुष्पमाला ॥९॥

कामस्य मूर्त्तिमयी गृहीतविग्रहा शक्तिरस्त्रविशेषरूपा सामर्थ्यस्वरूपा वा अतितरां कामोद्दीपिकेत्यर्थः, तथा जगतोलोकस्य नारीमयं स्त्रीरूपं मण्डनमलङ्कारः यया नार्य्या जगदलङ्कृतमित्यर्थः, तथा कान्तानां स्त्रीणाम् उपमानकल्पनस्य साम्यप्रतिपादनस्य कला शिल्पम् अतिसौन्दर्यात् स्त्रीणामुपमानभूतेत्यर्थः, तथा कान्तेः शोभायाः समुत्तेजनं प्रकाशिका, तथा संसृतिः संसार एव सागरः समुद्रस्तस्य लक्ष्मीः श्रीरिव, अन्यापि लक्ष्मीः समुद्रोत्पन्ना, तथा लावण्यपुण्याम्भसां लावण्यरूपपवित्रजलानां सरसी सरोवरमिव अतिलावण्यवतीत्यर्थः। अत्र बहूनां रूपकाणां सद्भावात् निरङ्गमालारूपकम्। "कला स्यान्मूलरैवृद्धौ शिल्पादावंशमात्रके" इति मेदिनी। शार्दूलविक्रीड़ितं वृत्तम् ॥ ८ ॥

सौन्दर्येति। वरस्य जामातुर्वरणविधौ वरणविधानाय कल्पिता रचिता तस्याः सीतायाः पक्षे द्रौपद्याश्च दोर्लताया भुजवल्ल्या अग्रे स्थिता पुष्पमाला रेजे शुशुभे, किम्भूता सौन्दर्यश्रियः सौन्दर्यलक्ष्म्याः पताका वैजयन्तीव तस्याः सौन्दर्यातिशयं व्यञ्जयन्तीत्यर्थः, तथा निखिलानां सर्वेषां यूनां मनसः शृङ्खला बन्धनरज्जुरिव, तथा लोकचक्षुषां पक्ष्मणां स्पन्दस्य निमेषस्य व्युदासो निराकरणं तद्धेतुरित्यर्थः, तथा सुराणां मुनीनाञ्च हृदयाकर्षणे कामपाशः कामस्यास्त्रविशेष इव, तथा तारुण्यं यौवनमेव उद्यानमुपवनं तस्य वल्ली लतेव, तथा पत्युर्भविष्यतः स्वामिनः सुकृतस्य पुण्यस्य कला मूलधनरूपस्य सुकृतस्य वृद्धिरूपेत्यर्थः, तथा कामकोदण्डस्य कन्दर्पधनुषो मौर्वी ज्येव। अत्र लोकचक्षुः-

सा दुग्धसिन्धोरुदितेव लक्ष्मी-
र्लावण्यमस्या नियतं सुधैव ।
यदेतदापीय दृशा प्रपेदे
मनुष्यलोकोऽप्यनिमेषभावम् ॥ १० ॥

राज्ञां मनोदर्पणमण्डलेषु
प्रत्येकमेका युगपत् स्फुरन्ती ।
रराज बाला कुमुदाकरेषु
रेखा हिमांशोः प्रतिविम्बितेव ॥ ११ ॥

पक्षमसन्दव्यूदास इत्यत्र हेत्वलङ्कारः, अन्यत्र तु निरङ्गमालारूपकमित्यनयोः संसृष्टिः। स्रग्धरावृत्तम्। 'वरवर्णविधौ' इत्यत्र 'वरवर्णाकृते' इति शशधर-धृतः पाठः ॥ ९ ॥

सेति। सा सीता पक्षे द्रौपदी च दुग्धसिन्धोः क्षीरसमुद्रादुदिता उत्थिता लक्ष्मीरिव, तथास्या लावण्यं शरीरसौन्दर्यं नियतं निश्चितं सुधैव अमृतमेव, कथमेतज्ज्ञातमित्याह यद्यस्मात् एतल्लावण्यं दृशा चक्षुषा आपीय साभिलाषं दृष्ट्वा अथच पीत्वा देववत् मनुष्यलोकोऽपि अनिमेषभावं निमेषशून्यत्वं प्रपेदे प्राप्तवान्, देवानां हि सुधापानादेवानिमेषत्वं नतु स्वभावात् अतः सुधारूपं लावण्यं पिबतो मनुष्यलोकस्यापि तद्युज्यत इत्यर्थः। अत्रोत्प्रेक्षापरिपुष्टेन अनुमानालङ्कारेणातिसुन्दरीयमिति वस्तु ध्वन्यते ॥ १० ॥

राज्ञामिति। एका बाला सीता पक्षे द्रौपदी च प्रत्येकं राज्ञां मनोदर्पण-मण्डलेषु स्वच्छत्वात् मनांसि दर्पणमण्डलानीव आदर्शतलानीवेति तेषु युग-पदेकदैव स्फुरन्ती विलसन्ती सैती रराज, उपमिनोति कुमुदाकरेषु प्रति-विम्बिता प्रतिविम्बत्वेन स्फुरन्ती हिमांशोश्चन्द्रस्य रेखेव चन्द्ररेखा यथा एकापि सर्वत्र कुमुदाकरेषु युगपत् प्रतिविम्बिता राजते तद्वेत्यर्थः, अतिसौन्दर्याद्राज्ञां मनोजहारेत्यर्थः। मनोदर्पणमण्डलेष्विति व्याघ्रादिभिस्तद्गुणास्तुत्यस्येत्यनेन उपमासमासः। उपमालङ्कारः ॥ ११ ॥

पुष्पैर्विचित्रैर्ग्रथितो विरेजे
तस्या घनः कुञ्चितकेशपाशः।
तद्वक्त्रपद्मोत्तमगन्धलोभात्
सान्द्रीभवद्भृङ्गपरम्परेव ॥ १२ ॥

वक्त्रस्य तस्याः प्रसमीक्ष्य शोभां
तारापतिर्मण्डलमाप भानोः।
तथापि नो साम्यमुपैति तस्मात्
तप्तुं तपः प्राप पुरारिमौलिम् ॥ १३ ॥

पुष्पैरिति। तस्याः सीतायाः पक्षे द्रौपद्याश्च घनोनिबिड़ः कुञ्चितः स्वभावाद्भङ्गुरो जुटिकारूपोवा केषपाशः केशकलापः तद्वक्त्रपद्मोत्तमगन्धलोभात् तस्याः सीताया द्रौपद्याश्च वक्त्रपद्मस्य मुखकमलस्य य उत्तमगन्धोऽतिसौरभ्यं तस्य लोभाद्धेतोः सान्द्रीभवन्ती निविड़तया मिलन्ती भृङ्गपरम्परेव भ्रमरपङ्क्तिरिव विरेजे, नायं केशपाशः किन्तु मुखसौरभ्यलोभात् पश्चात् मिलिता भ्रमरावलिरिवेत्युत्प्रेक्षा। किम्भूतः विचित्रैर्नानाविधैः पुष्पैर्ग्रथितः सम्बद्धः, इदं स्वरूपवर्णनमात्रं नतूत्प्रेक्षायाः प्रयोजकम्। "पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे" इत्यमरः। तस्मादित्यत्र 'दीनः' इति शशधरधृतः पाठः, दीनः क्षीणः सन् इति व्याख्यातः ॥ १२ ॥

वक्त्रस्येति। तारापतिश्चन्द्रस्तस्याः सीतायाः पक्षे द्रौपद्याश्च वक्त्रस्य मुखस्य शोभां स्वस्मादुत्कृष्टं सौन्दर्यं प्रसमीक्ष्य दृष्ट्वेति प्रतीयमानोत्प्रेक्षा भानोः सूर्य्यस्य मण्डलं प्राप तादृशशोभाप्राप्त्यर्थं तपस्तप्तुमिति शेषः, अमावस्यायां सूर्य्याचन्द्रमसोरेकराशाववस्थानादियमुत्प्रेक्षा, तथापि भानुमण्डलप्रवेशेऽपि साम्यम् एतन्मुखसादृश्यं नो उपैति न प्राप्तवान् तस्मात् साम्यालाभादिव तपस्तप्तुं तपसा अधिकतरं पुण्यमुपार्जयितुं पुरारेः शिवस्य मौलिं मूर्द्धानं प्राप, अन्योऽपि एकत्र तीर्थादौ तपसा स्वाभीष्टमप्राप्य ततोऽप्युत्कृष्टं तीर्थान्तरमाश्रयति एतेनास्या मुखमतितरां मनोज्ञमिति भावः। अत्राभिधेयस्य सम्भाव्यमानत्वादिवादिपदाप्रयोगाच्च प्रतीयमानोत्प्रेक्षेयम्। एष्विन्द्रवज्रा वृत्तम् ॥१३॥

एतस्या नेत्रशोभां तुलयति न यदा खञ्जनः प्राप्तकीर्त्ति-
र्नूनं वातापिहन्तुर्व्रजति पदमितो योगयुक्तस्तपस्वी ।
तद्वन्नीलोत्पलेन प्रतिदिवसमतोमग्नमप्सु प्रविष्टाः
कान्तारं तद्वदेण्यः प्रथितमिह यतो नास्त्यलभ्यं तपोभिः
॥ १४ ॥

तद्दन्तशोभामनुकर्त्तुमेषा
नाभूद्यतो दाड़िमवीजपङ्क्तिः ।

एतस्या इति । प्राप्तकीर्त्तिः सौन्दर्येण लब्धप्रतिष्ठोऽपि खञ्जनः पक्षिविशेषः एतस्याः सीतायाः पक्षे द्रौपद्याश्च नेत्रशोभां चक्षुःसौन्दर्यं यदा न तुलयति सदृशीकरोति नूनमुत्प्रेक्षे तदा योगयुक्तो योगी तपस्वी च भूत्वा इतोऽस्माद्देशात् वातापिहन्तुरगस्त्यस्य पदमाश्रमं दक्षिणादिशमित्यर्थः व्रजति एतन्नेत्रशोभा-प्राप्त्यर्थं तपः कर्त्तुमिव दक्षिणदिशं गच्छतीत्यर्थः । वर्षासु खञ्जनानां दक्षिण-दिग्गमनप्रसिद्धेरियमुत्प्रेक्षा । तथा तद्वत् खञ्जनेनेव नीलोत्पलेन अतोऽहेतो-रेतस्या नेत्रशोभाप्राप्त्यर्थं तपः कर्त्तुमिवेत्यर्थः । प्रतिदिवसं नतु कदाचित् अप्सु जलेषु मग्नं, तथा तद्वत् खञ्जननीलोत्पलवत् एण्योहरिण्यः तपः कर्त्तुं कान्तारं महारण्यं प्रविष्टाः । कथमेवमेतैरनुष्ठितमित्यत्र हेतुमाह यतोहेतोस्तपोभि-रलभ्यम् अप्राप्यं नास्ति सर्वमेव तपसा प्राप्यत इति इह लोके प्रथितं प्रसिद्धम् । एतस्या नयनं खञ्जनवत् सदा चञ्चलं नीलोत्पलवत् सुन्दरं हरिणीनयनवत् विस्तृतञ्चेत्युपमालयमुत्प्रेक्षया व्यज्यते । अन्येऽपि तपस्विनस्तपः कर्त्तुं केचित् प्रसिद्धमुनेराश्रमं गच्छन्ति केचिज्जले निमज्ज्य आप्लुतव्रतं कुर्वन्ति केचिच्च महारण्यं प्रविशन्ति । अत्रोत्प्रेक्षावाचकस्य नूनमित्यस्य सर्वत्रानुषङ्गः । मग्नमिति भावे क्तः । "कान्तारोऽस्त्री महारण्यम्" इति विश्वः । शार्दूल-विक्रीड़ितमिदं वृत्तम् ॥ १४ ॥

तद्दन्तेति । एषा दाड़िमवीजानां पङ्क्तिः श्रेणी यतो हेतो रस्याः सीतायाः पक्षे द्रौपद्याश्च दन्तशोभां दन्तसौन्दर्यम् अनुकर्त्तुं सदृशीकर्त्तुं शक्ता

शक्ता ततोऽस्या हृदयं विदद्रे
तत्तापतप्तं ध्रुवमीर्ष्ययेव ॥ १५ ॥
तदीयसौन्दर्यसरोमृणालं
भुजद्वयं रक्तकराम्बुजाढ्यम्।
विकाशनार्थं रविरश्मितुल्या
नखांशवोऽग्रे प्रसरन्ति शोणाः ॥ १६ ॥

समर्था नाभूत् ततोऽस्तीतोर्ध्रुवमुत्प्रेक्षायां निश्चये वा ईर्ष्ययेव तत्तापतप्तं सदृशो-करणासामर्थ्यजन्यसन्तापकदर्थितम् अस्या दाडिमवीजपङ्क्तेर्हृदयं मध्यम् शस्य च वक्षः विदद्रे स्वयं विदीर्णम्, अन्यस्यापि हृदयम् ईर्ष्यया सन्तापात् विदीर्णप्रायं भवति। एतेनास्या दन्ताः सूक्ष्मतया शुक्लतया चातिमनोज्ञा इति भावः। यद्यपि दाडिमफलस्यैव विदारणं नतु वीजपङ्क्तेस्तथापि अवयविनो-गुणक्रिये अवयवेऽप्यारोप्येते इति तथोक्तम्। अत्रोपमानादुपमेयस्याधिक्यरूप-व्यतिरेकेणाङ्गाङ्गितयोत्प्रेक्षा सङ्कीर्यते ॥ १५ ॥

तदीयेति। रक्ते लोहिते च ते करावेव अम्बुजे पद्मे चेति ताभ्यामाढ्यं युक्तं भुजद्वयं तस्या बाहुयुगलं तदीयसौन्दर्यमेव सरः पद्माकरस्तस्य मृणालं बिसस्वरूपं तथा विकाशनार्थं कराम्बुजयोः प्रकाशनाय रविरश्मितुल्याः प्रातःकालीनसूर्यकिरणसदृशाः शोणाः कराम्बुजयोराभया अरुणा नखांशवो नखदीप्तयोऽग्रे प्रसरन्ति विलसन्ति, अन्यदपि मृणालं सरसि जायते तत्र च पद्मं विकसति तदपि सूर्यकिरणाः प्रकाशयन्ति, एतेनास्या भुजद्वयमतिसरलं करावप्यतिरक्तौ कोमलाश्च नखाश्चातिकान्तिमन्त इति भावः। अत्र पूर्वार्द्धे साङ्गरूपकम् उत्तरार्द्धे तुल्यशब्दप्रयोगादार्थी उपमा एवञ्चानयोरङ्गाङ्गि-भावः। "रक्तकराम्बुजाभ्यां इति पाठे रक्ताभ्यां कराम्बुजाभ्यां उपलक्षितम् इति व्याख्या ॥ १६ ॥

नन्विति। एतस्याः सीतायाः पक्षे द्रौपद्याश्च ललिते सविलासगमने चतुरं निपुणं, चलितचतुरमिति पाठे स एवार्थः, पादद्वन्द्वं चरणयुगलं नूपुरा-भ्याम् उपात्तं शब्दोत्तं युक्तमित्यर्थः किम्भूताभ्यां प्रतिपदं प्रतिपदक्षेपं पदान्ते

नन्वेतेभ्यः स्फुटमनुनिशं बद्धकोषाञ्जलिभ्यः
सानुक्रोशं निजरुचिलवो दीयतामम्बुजेभ्यः।
इत्येतस्याः प्रतिपदमिह व्याहरन्त्यां पदान्ते
पादद्वन्द्वं ललितचतुरं नूपुराभ्यामुपात्तम् ॥ १७ ॥

गमनमलसयातैः कुम्भलक्ष्मीं कुचाभ्या-
मविकलकरशोभामूरुकाण्डद्वयेन।
यदियमहरदेका हेतुना तेन नूनं
निजवपुषि करीन्द्राः पांशुपूरं क्षिपन्ति ॥१८॥

चरणोपान्ते ननु भोः सीते पक्षे द्रौपदि च एतेभ्योऽम्बुजेभ्यः सानुक्रोशं सदयं यथा स्यात्तथा किञ्चिद्दयां प्रकाश्येत्यर्थः निजरुचेः स्वीयपादादिकान्तेर्लवो लेशोऽपि तावतैव चरितार्थानि भविष्यन्ति नत्वधिकदानार्थमनुरुध्यसे तस्मात् किञ्चिदपि दीयतां वितीर्यतामिति व्याहरन्त्यामिव कथयन्त्यामिव, अम्बुजेभ्यः किम्भूतेभ्यः स्फुटं सुव्यक्तं यथा तथा अनुनिशं प्रतिरात्रि बद्धः कोषरूपोऽञ्जलिर्यैस्तानि तथा तेभ्यः कोषरूपमञ्जलिं बद्ध्वा याचमानेभ्यः इत्यर्थः योहि अञ्जलिं बद्ध्वा याचते तस्मै दानमुचितमेव तस्माद्दीयतामिति दाने हेतुगर्भविशेषणमिदम् अत्रानुक्ते नूपुरशिञ्जितरूपे प्रस्तुते व्याहरणसम्भावनादिवशब्दप्रयोगाच्च अनुक्तप्रस्तुतैयस्तुत्प्रेक्षा। पदान्त इति गौरवाय राज्ञः पदान्ते कथयतीत्यादिवत् अन्यथा अन्ते इत्यनेनैवोपपत्तौ पदपदप्रयोगेऽधिकपदत्वदोषः प्रसज्येतेति ध्येयम्। कृपा दयानुकम्पा स्यादनुक्रोशोऽपीत्यमरः। मन्दाक्रान्तावृत्तम्। पदान्त इत्यत्र उपान्त इति क्वचित् पाठः॥ १७॥

गमनमिति। यद्यस्मादियमेका सीता पक्षे द्रौपदी च अलसयातैर्मन्दगमनैः करीन्द्राणां गमनं तथा कुचाभ्यां कुम्भलक्ष्मीं कुम्भयोः शोभां तथा ऊरुकाण्डद्वयेन ऊरुदण्डयुगलेन अविकलां सम्पूर्णां करशोभां शुण्डशोभाञ्च अहरत् हृतवती नूनमुत्प्रेक्षे करीन्द्रा हस्तिश्रेष्ठास्तेन तज्जन्यदुःखेनेव हेतुना निजवपुषि स्वशरीरे पांशुपूरं धूलिसमूहं क्षिपन्ति, अन्येऽपि सर्वस्वे हृते दुःखेन

एवं नरेन्द्रेषु वितर्कयत्सु
ततो विलोक्यावयवं तदीयम्।
उत्क्षिप्य पाणी निपुणेन वाणी
मध्येसभं केनचिदित्यवाचि ॥ १९ ॥

दुरानमं धनुरिदमीश्वरादृते
निजौजसा कलितगुणं विधाय यः।
प्रदर्शयेत् परिषदि लब्धलक्ष्यतां
जयश्रिया सह स लभेत कन्यकाम् ॥ २० ॥

धूलिधूसरिता भवन्ति एतेनासां गमनादिकमतिमनोज्ञमिति भावः। अत्र करीन्द्राणां स्वाभाविकधूलिविक्षेपक्रीडायां एतस्या गमनादिहरणं हेतुत्वेनोत्प्रेक्षितं तच्च स्वसदृशं गमनादिकं बोधयद्विम्बप्रतिविम्बभावे पर्यवस्यति तेन निदर्शनोत्प्रेक्षयोरङ्गाङ्गिभावः सङ्करः। मिलित्वा बहूनामेकैकवस्तुहरणे न तादृग् दुःखं यादृक् एकस्य हरणे इत्यत एकेत्युक्तम्। मालिनीवृत्तम् ॥ १८ ॥

एवमिति। नरेन्द्रेषु राजसु तदीयं सीतासम्बन्धिनं पक्षे द्रौपदीसम्बन्धिनम् अवयवम् अङ्गं विलोक्य एवं पूर्वोक्तरीत्या वितर्कयत्सु सत्सु ततोऽनन्तरं केनचिन्निपुणेन कथनदक्षेण अर्थात् रामायणपक्षे शतानन्देन भारतपक्षे धृष्टद्युम्नेन च मध्येसमं सभाया मध्ये पाणी हस्तौ उत्क्षिप्य उत्तोल्य इति वक्ष्यमाणप्रकारा वाणी वचनम् अवाचि उक्ता। उत्क्षिप्य पाणी इति कथनस्वभावः। मध्येसभमिति पारे मध्ये षष्ठ्यावेत्यव्ययीभावसमासः ॥ १९ ॥

यदवाचि तदाह—

दुरेति। यो जन ईश्वरादृते महादेवं विना अन्यैर्दुरानमम् आनमयितुमशक्यम् इदं धनुः निजौजसा स्वीयसामर्थ्येन कलितगुणम् आरोपितज्यं विधाय कृत्वा परिषदि सभायां लब्धलक्ष्यतां स्वस्य विशिष्टधनुर्द्धरत्वं प्रदर्शयेत् प्रकाशयेत् स जयश्रिया सह कन्यकां सीतां लभेत प्राप्नोति, न केवलं कन्यका-

इति वचसि तदानीमुक्तमात्रे नरेन्द्राः
पृथुतरभुजदर्पास्तूर्णमुत्थाय पीठात् ।
द्रुतपदमभिपेतुस्तद्धनुर्भीमरूपं
फणिपतिमिव भोगिग्राहिणोऽग्र्यं ग्रहीतुम् ॥२१॥
कन्यां निधानकलसीमिव कार्मुकञ्च
भीमं भुजङ्गमिव तत्प्रतिबन्धरूपम् ।

प्राप्तिः किन्तु जयश्रीरपि तस्य भविष्यतीत्यर्थः। ईश्वरादृते इति ईश्वर-सम्बन्धिनः सुनमं भ त्ये । अन्येषां दुरा नममिति भावः।

भारतपक्षे लब्धलक्ष्यतां लब्धं विद्धं लक्ष्यं राधाचक्ररूपं येन स तथा तस्य भावस्तत्ता तां राधाचक्रभेदं कुर्यादित्यर्थः कन्यकां द्रौपदीम्, अस्मिन् पक्षे ईश्वरादृते इति ईश्वरस्य किमसाध्यम् अन्येषां दुरानममित्यर्थः। सहोक्ति-रलङ्कारः। रुचिरावृत्तम्। "चतुर्ग्रहैरिह रुचिरा जभस्जगा" इति लक्षणात् ॥ २० ॥

इतीति। इति पूर्वोक्तप्रकारे वचसि उक्तमात्रे सति तदानीं वचनस्या-व्यवहितक्षण एव नरेन्द्राः स्वयंवरस्था राजानस्तूर्णं शीघ्रं पीठात् मञ्चात् उत्थाय द्रुतं त्वरितं पदं पदविक्षेपो यत्र क्रियायां तद्यथा स्यात्तथा भीमं दुरानमत्वात् भयजनकं रूपं यस्य तादृशं अग्र्यम् अतिवृहत् तत् पणीभूतं धनुर्ग्रहीतुम् अभि अभिमुखीकृत्य पेतुर्जग्मुः, किम्भूताः पृथुतरोऽत्यन्तो भुजयो-र्दर्पौ येषां ते, उपमिनोति अग्र्यं विषोल्वणम् अतएव भीमरूपं फणिपतिं सर्प-श्रेष्ठं ग्रहीतुं भोगिग्राहिणा आहितुण्डिका इव। भोगिग्राहिणोऽपि नरेन्द्र शब्दवाच्यास्तथा च "नरेन्द्रोवार्त्तिके राज्ञि विषवैद्ये" इति हेमचन्द्रः। उप-मेयं समासगा श्रौती। मालिनीवृत्तम् ॥ २१ ॥

कन्यामिति। कतिचित् केचन क्षितीशा राजानः कन्यां सीतां पक्षे द्रौपदीञ्च निधानम् अस्वामिकसुवर्णादिधनं तस्य कलसीमिव निधानकलसी-वदतिलोभनीयामित्यर्थः दृष्ट्वा तथा कार्मुकञ्च पणीभूतं धनुश्च तत्प्रतिबन्धरूपं

दृष्ट्वा विलोलमतयः कतिचित् क्षितीशा
नादातुमुज्झितुमपि क्षमतामवापुः ॥ २२ ॥
साभिमानमनसो नराधिपाः
केचिदाचरितबाहुसाहसाः ।
चापमाननतिबाहुविक्लवाः
कुर्वते स्म निजमानमानतम् ॥ २३ ॥

निधानकलशीसदृशकन्यालाभप्रतिबन्धकं भीमं भयानकं भुजङ्गमिव दृष्ट्वा विलोला चञ्चला इतिकर्त्तव्यताविमूढेत्यर्थः मतिर्येषां तादृशाः सन्तः आदातुं ज्यारोपणार्थं तदनुग्रहीतुं तथा उज्झितुं परित्यक्तुमपि क्षमतां योग्यतां न अवापुः प्राप्तवन्तः कन्येयमतिसुन्दरी कथमुपेक्षणीया धनुस्तु दुरानममिति परामृश्य धनुर्ग्रहण-परित्यागयोरेकतरं कर्त्तुं न शेकुरित्यर्थः कन्यां दृष्ट्वा उज्झितुं कार्मुकं दृष्ट्वा आदातुमिति व्युत्क्रमेण सम्बन्धः इति वा, निधानकलशीसन्निधानेऽपि प्रायः सर्पस्तिष्ठति स च तद्ग्रहणे प्रतिबध्नाति। तत्र पूर्वार्द्धे उपमालङ्कारः। वसन्ततिलकं वृत्तम् ॥ २२ ॥

साभीति। साभिमानं ममापीदं धनुर्दुरानममिति मत्वा सगर्वं मनो येषां तादृशाः केचिन्नराधिपाः चापमानस्य धनुःपरिमाणस्य नतौ ज्यारोपेण नम्रीकरणे बाह्वोर्विक्लवोऽसामर्थ्यं येषां तादृशाः सन्तः निजमानं स्वस्यैव सम्मानम् आनतं विनाशितमित्यर्थः कुर्वते स्म, किम्भूताः आचरितं प्रथमं प्रकाशितं बाह्वोः साहसं बलं येषां ते अतिबलवन्तो मे बाहू कथं न पारयाभीति गर्वेण साटोपं धनुःसमीपं गत्वा तदानमयितुमशक्ताः सन्तः स्वस्याकीर्त्तिं चक्रुरित्यर्थः। अत्र माननतौ अशक्ता मानमानतं कुर्वतेस्मेति विरोधालङ्कारः तेन च चापमानं विनाशयितुमशक्नुवन्त इव निजमानं विनाशयामासुरित्युत्प्रेक्षा व्यज्यते। "मानं प्रमाणे प्रस्थादौ मानश्चित्तोन्नतौ ग्रहे" इति हेमचन्द्रः। रथोद्धतावृत्तं "रान्नराविह रथोद्धता लगौ" इति लक्षणात् ॥ २३ ॥

दूरात् केचन केचिदीक्षणपथादन्ये करास्पन्दना-
देके धारणतः सगर्वमितरे मुष्टौ तलास्फालनात् ।
आनम्रीकरणात्परे कतिपये जीवाटनीघट्टनात्
कोदण्डे नयशालिनीव नृपतौ वन्ध्यश्रमास्तेऽभवन् ॥२४

मद्राङ्गचेदिमगधेशपुरःसरेषु
क्षत्राय राजसु जलं मनसा ददत्सु ।
जिष्णुर्द्विजेन्द्रनिकटाद्वरिवंशकेतु-
र्गर्भादिवाग्निररणेरुदगात् कुमारः ॥ २५ ॥

विशेषतः पूर्वोक्तमेवाह

दूरादिति। ते राजानः नयशालिनि नीतिज्ञे नृपताविव कोदण्डे पणीभूते तस्मिन् धनुषि वन्ध्यो निष्फलः श्रमः प्रयासो येषां तादृशा अभवन् यथा नयशालिनि नृपतौ अन्ये नृपतयो विफलश्रमा भवन्ति तथेत्यर्थः कथ-मित्याह केचन राजानो दूरात् धनुरदृष्ट्वैवेत्यर्थः निवृत्ता इति शेषः एवं सर्वत्र। तथा केचित् ईक्षणपथात् दर्शनमार्गात् धनुर्दृष्ट्वेत्यर्थः तथा अन्ये करास्पन्दनात् कराभ्यां स्पर्शनात् दृष्ट्वा गत्वा कराभ्यां स्पृष्ट्वा च अशक्यत्वनिश्चयाविवृत्ता इत्यर्थः एके सगर्वं साहङ्कारं यथा तथा धारणतः धनुर्धृत्वा अतिगौरवनिश्च-याविवृत्ता इत्यर्थः तथा इतरे मुष्टौ तलास्फालनात् धनुर्धारणार्थं मुष्टौ क्रियमाणायां तलेन करतलेन यत् आस्फालनम् आपीडनं तस्मात् तथा परे आनम्रीकरणात् धनुरीषन्नमयित्वेत्यर्थः तथा कतिपये जीवा मौर्वी अटनी च धनुष्कोटिस्तयोर्घट्टनात् योजनात् धनुष्कोटौ मौर्वीं योजयित्वेत्यर्थः, उभयत्र समानम्, उपमेयं श्रौती। शार्दूलविक्रीडितं ॥ २४ ॥

मद्राङ्गेति। मद्राङ्गचेदिमगधानां देशविशेषाणाम् ईशाः स्वामिनो मद्राङ्गचेदिमगधेशास्ते पुरःसरा अग्रगण्या येषां ते तथा तेषु तत्प्रभृतिषु राजसु पणस्यानिर्वाहात् मृतकल्पाय क्षत्राय क्षत्रियजातये क्षत्रियधर्माय वा मनसा जलं ददत्सु तर्पणं कुर्वत्सु सत्सु धिगस्मान् क्षत्रियाः ये एतद्धनुर्नमयितुमपि न

वीरश्रीमानतुङ्गाचलतुलनतुलादण्डमुर्वीपतीनां
गीर्वाणद्वेषिगर्वाम्बुधिमथनमहारम्भमन्थाचलेन्द्रम् ।
श्लाघानिःशाणकोणं जगदुदयमहावृष्टिमाहेन्द्रचापं
चापं दोर्विक्रमाग्नेः समिधमिव निजस्यादद‍े राजसूनुः
॥ २६ ॥

आश्रम इत्यात्मानं निम्दत्स्विवत्यर्थः कुमारो रामः द्विजेन्द्रस्य विश्वामित्रस्य निकटात् उदगात् उत्तस्थौ धनुर्ग्रहीतुमिति शेषः, किम्भूतः जिष्णुर्जयशीलः तथा हरिवंशस्य सूर्य्यवंशस्य केतुर्ध्वजवच्छोभमानः, उपमिनोति अरणेर्मन्थनकाष्ठस्य गर्भादग्निरिव ।

पक्षे जिष्णुः कुमारोऽर्जुनः द्विजेन्द्राणां ब्राह्मणानां निकटात् उदगात्, किम्भूतः हरिवंशकेतुः हरेरिन्द्रस्य वंशे केतुरिव तस्येन्द्रपुत्रत्वात् अथवा हरिर्वानरस्तस्य वंशोवर्गः समूहो यस्य स तथा सेनापतित्वात् हरिवंशो हनूमान् सकेतूरथध्वजो यस्य तादृशः किम्वा हरिणा श्रीकृष्णेन हेतुना वंशकेतुर्वंशश्रेष्ठः । अन्यत् सर्वं समानम् "अथ हरिर्दिवाकरसमीरयोः । यमवासवसिंहांशुशशाङ्ककपिवाजिषु । पिङ्गवर्णे हरिद्वर्णे भेकोपेन्द्रशुकाहिषु" इति हेमचन्द्रः । "वंशोवर्गे च वेणौ च पृष्ठस्यावयवेऽपि च" इति विश्वः । उपमालङ्कारः । वसन्ततिलकं वृत्तम् ॥ २४ ॥

वीरेति । राजसूनूरामः पक्षेऽर्जुनश्च निजस्य दोर्विक्रमाग्नेः वाहुप्रतापानलस्य समिधमिव काष्ठमिव चापं धनुराददे गृहीतवान् । किम्भूतं उर्वीपतीनां राज्ञां वीरश्रियः शौर्यलक्ष्म्याः यत् मानम् एतावत्यस्य वीरश्रीरिति परिमाणं तत्र तुङ्गाचलतुलनतुलादण्डं तुङ्ग उच्चो योऽचलः पर्वतस्तस्य तुलनं सादृश्यं यस्य तादृशो यस्तुलायाः परिमाणयन्त्रस्य दण्डस्तद्रूपं वीर्यज्ञापकमित्यर्थः तथा गीर्वाणा देवास्तेषां द्वेषिणोदैत्यराक्षसादयस्तेषां योगर्वाम्बुधिर्गर्वसमुद्रस्तस्य मथने विलोडने महारम्भमन्थाचलेन्द्रं महान् आरम्भः क्रियाडम्बरं यस्य तादृशो मन्थाचलेन्द्रो मन्दरगिरिस्तद्रूपं दैत्यादीनामप्यशक्यग्रहणमित्यर्थः, तथा श्लाघा प्रशंसैव निःशाणो वाद्यविशेषस्तस्य कोणो वादनदण्डस्तद्रूपं ग्रहीतुः प्रशंसाजनकमित्यर्थः तथा जगतामुदय एव महावृष्टिस्तत्र माहेन्द्र

दृष्टः सोऽभिसरन् धनुः परिषदा बाल्यादवज्ञोत्तरं
गृह्णन्नध्यवसायनिश्चलतया सश्लाघदत्तोत्तरम्।
उत्क्षिप्यानमयन् भुजाग्रतरसा सान्द्रीभवद्विस्मयं
ज्यालेखामटनीमुखेन घटयन् केनापि नालोकितः॥२७

तस्मिन् गुणाकर्षणकर्मकारे
राजात्मजे शङ्करकार्मुकस्य।

चापम् इन्द्रधनुःस्वरूपं जगतां मङ्गलजनकमित्यर्थः सीताद्रौपदीविवाह-जननात् तेन च रावणादिदुर्योधनादिविनाशात्। मालारूपकोपमयोः संसृष्टिरियम्॥ २६॥

दृष्ट इति। धनुरभिसरन् धनुर्ग्रहीतुं तदाभिमुख्येन गच्छन् स रामः पक्षे अर्ज्जुनश्च परिषदा सभया तत्स्थजनेनेत्यर्थः बाल्यात् अवज्ञोत्तरम् अवज्ञाप्रधानं यथातथा दृष्टः ब्राह्मणबालोऽयं नास्यैतत्कर्म्मेति सावज्ञं दृष्ट इत्यर्थः ततो धनुर्गृह्णन् सः अध्यवसायोऽशक्यकर्म्मण्युत्साहस्तस्मान्निश्चलतया सश्लाघं सप्रशंसं दत्तं विरोधिवादिनः प्रति उत्तरं प्रतिवाक्यं यत्र तद्यथा तथा दृष्टः माभूदस्य कृत्यनिर्वृत्तिः किन्तु बालस्याप्यस्याध्यवसायो दृश्यतामिति सगौरवं दृष्ट इत्यर्थः। ततश्च भुजाग्रयोर्हस्तयोस्तरसा बलेन। "तरोबले च रोगे च" इति मेदिनी। धनुरुत्क्षिप्य उत्तोल्य एकत्र भङ्गार्थमपरत्र ज्यारोपणार्थम् आनमयन् स सान्द्रीभवन् प्रबलीभवन् विस्मयो यत्र तद्यथा स्यात्तथा दृष्टः बालस्याप्यस्य किमिदमलौकिकं बाहुबलमिति साश्चर्य्यं दृष्ट इत्यर्थः। अनन्तरञ्च अटनीमुखेन धनुष्कोट्यग्रेण। "कोटिरस्याटनी" इत्यमरः। ज्यालेखां मौर्व्वीराजीं घटयन् संयोजयन् सः केनापि सभास्थेन नालोकितः लज्जयेति भावः केनापि नालोकितः अपि तु सर्व्वैरेव दृष्टः सर्वजनसमक्षमेव धनुषि ज्यारोपणं कृतवानिति कश्चित्। शार्द्दूलविक्रीडितं वृत्तम्॥ २७॥

तस्मिन्निति। तस्मिन् राजात्मजे रामे गुणस्य ज्याया आकर्षणरूपं कर्म्म करोतीति तथाविधे सति। भृतावेव कर्म्मोपपदस्य कृञष्टङ्विधानादिह कर्मणो णड़िति णट्। शङ्करकार्मुकस्य हरधनुषो भङ्गो भेदो बभूव। किम्भूतस्य

बभूव भङ्गः पृथिवीश्वराणां
कर्णव्यथादायिकटुस्वनस्य ॥ २८ ॥
साकं भूपैर्मानभङ्गं प्रपन्ने
चापे तस्मिन् निर्वृता लक्ष्यसिद्ध्या।
व्रीडानम्रा सादरं राजपुत्री
कीर्त्या रामं प्राप हृद्या कुमारम् ॥ २९ ॥

पृथिवीश्वराणां राज्ञां कर्णव्यथादायी लज्जया सोढुमशक्यत्वात् प्रचण्डत्वाच्च श्रवणदुःखदः कटुस्वनो विकटध्वनिर्यस्य स तथा तस्य।

पक्षे तस्मिन् राजात्मजेऽर्ज्जुने शमिति षष्ठान्तमव्ययं शं द्रौपदीलाभहेतुत्वात् मङ्गलकारकस्य करकार्मुकस्य हस्तस्थधनुषो .लक्ष्यभेदाय गुणाकर्षणकर्मकारे सति पृथिवीश्वराणां भङ्गः पराजयो बभूव गुणाकर्षणेनैव लक्ष्यभेदं निश्चित्य राजानो भग्ना बभूवुरित्यर्थः। किम्भूतस्य कर्णस्य राधेयस्य व्यथादायी कटुस्वनो मौर्वीटङ्कारध्वनिर्यस्य स तथा तस्य। शं सुखम् अनायास यथातथा गुणाकर्षणकर्मकारे सतीति वा। अशम् असुखोभङ्गो बभूवेति केचित्। शं कल्याणे सुखे इति "भङ्गोजयविपर्य्यये" इति च मेदिनी। कर्णश्चम्पेशः सूतपुत्रक इति त्रिकाण्डशेषः। गुणाकर्षणकर्मधोरे इति क्वचित् पाठः ॥ २८ ॥

साकमिति। तस्मिन् चापे हरधनुषि भूपैः साकं सह मानभङ्गं परिमाणभङ्गम् अन्यत्र चित्तोन्नतिभङ्गम् अहङ्कारक्षयमित्यर्थः प्रपन्ने प्राप्ते सति लक्ष्यसिद्ध्या विशिष्टवरप्राप्तिरूपोद्देश्यनिष्पत्त्या निर्वृता हृष्टा व्रीडानम्रा नववधूस्वाभाव्यात् सलज्जा हृद्या अति सुन्दरी राजपुत्री सीता कीर्त्या यशसा सह। गम्यमानैश्च सहार्थैरिति तृतीया। सादरं साभिलाषं यथा तथा कुमारं रामं प्राप। कीर्त्या कीर्त्तनीयेति राजपुत्रीविशेषणं वा। अत्र परस्परं निरपेक्षतयावस्थानात् सहोक्त्यनुप्राणितातिशयोक्तिद्वयस्य संसृष्टिः। "मानं प्रमाणे प्रस्थादौ मानश्चित्तोन्नतौ ग्रहे" इति विश्वः।

भृङ्गव्रातैरङ्गसौगन्धलुब्धैः
कृष्णा तन्वी दृश्यमाना लतेव।
सा तं भेजे राजवंशप्रदीपं
पूर्वाम्भोधिं स्वःस्रवन्तीव सीता ॥ ३० ॥

पक्षे तस्मिन् चापे भूपैः साकं मानभङ्गम् अत्याकर्षणेन न्युब्जीभावात् परिमाणाल्पतां प्रपन्ने सति लक्ष्यस्य राधाचक्रस्थमत्स्यरूपस्य सिद्ध्या वेधोत्पत्त्या निर्वृता राजपुत्री द्रौपदी कीर्त्तेरारामम् उपवनम् आश्रयमित्यर्थः कुमारमर्ज्जुनं प्राप अन्यत् समानम्। कीर्त्या आरमयतीति तथा तमिति वा, कीर्त्या रामं दाशरथिमिवेति वा। शालिनीवृत्तम् ॥ २९ ॥

भृङ्गेति। अङ्गसौगन्धलुब्धैः शरीरसौरभलोलुपैर्भृङ्गव्रातैर्भ्रमरवृन्दैः कृष्णा लतेव श्यामा लतेव दृश्यमाना तन्वी क्षीणाङ्गी सा सीता स्वःस्रवन्ती स्वर्नदी गङ्गा पूर्वाम्भोधिं महासमुद्रमिव राजवंशप्रदीपं रघुकुलप्रकाशकं तं रामं भेजे। श्यामा लतापि सौरभलुब्धैर्भृङ्गव्रातैर्दृश्यमाना तन्वी च भवति। अत्र उपमाद्वयस्य मिथोऽनपेक्षयावस्थानात् संसृष्टिः। "पूर्वः प्रागाद्ययोस्त्रिषु" इति मेदिनी।

पक्षे अङ्गसौगन्धलुब्धैर्भृङ्गव्रातैर्लतेव दृश्यमाना तन्वी सा कृष्णा द्रौपदी पूर्वाम्भोधिं सीता सीतानाम्नी स्वःस्रवन्ती गङ्गेव राजवंश प्रदीपं कौरवकुलोद्दीपकं तम् अर्जुनं भेजे। गङ्गा किल दिवः सुमेरुमूर्द्धनि पतन्ती चतुर्धा भूत्वा सीतालकनन्दावङ्क्षुभद्रेति नामचतुष्टयेन चतसृषु दिक्षु क्षीरोदमभिप्रविशतीति पौराणिकी कथा। तथा च विष्णुपुराणम्। "विष्णुपादसमुद्भूता प्लावयन्तीन्दुमण्डलम्। समन्ताद्ब्रह्मणः पुर्यां गङ्गा पतति वै दिवः। सा तत्र पतिता दिक्षु चतुर्द्धा प्रतिपद्यते। सीता चालकनन्दा च वङ्क्षुर्भद्रेति वै क्रमात्" इति। सीता तु ब्रह्मसदनात् केशराचलादिशिखरेभ्योऽधोऽधः प्रसरन्ती गन्धमादनमूर्द्धसु पतित्वाऽन्तरेण भद्राश्व वर्षं प्राच्यां दिशि क्षीरसमुद्रमभिप्रविशतीति भागवतञ्च। "कृष्णा स्याद्द्रौपदी नीली कणा द्राक्षासु योषिति" इति मेदिनी। पूर्वोक्तं वृत्तम् ॥ ३० ॥

राज्ञां लज्जाकलङ्कः खलु मुखशशिनि स्थापितः कार्मुकेण
क्षेपिष्ठं तस्य कोटौ निपुणमुपहिता राजपुत्रेण मौर्वी।
न्यस्ता तद्वाहुमूले निजवरणसखी मङ्क्षु माला कुमार्या
मालायां साधुवादैः सह सकलजनैरर्पिता नेत्रमाला
॥ ३१ ॥

भग्नोत्साहे गतवति ततः सर्वतो राजलोके
राज्ञा तेन स्वमथ भवनं प्रापितानां सहर्षम्।
निर्दिष्टानां मुनिगुरुगिरा सा नरेन्द्रात्मजानां
सर्वेषामप्यजनि युगपत्तत्र वैवाहिकश्रीः ॥ ३२ ॥

राज्ञामिति। कार्मुकेण तेन धनुषा राज्ञां मुखशशिनि खलु लज्जाकलङ्कः व्रीड़ाकालुष्यम् अथ च लाञ्छनं स्थापितः शशिनि कलङ्कस्थापनं युज्यते खल्विति वाक्यालङ्कारे, तस्य कार्मुकस्य कोटौ अग्रे राजपुत्रेण रामेण पक्षे अर्जुनेन क्षेपिष्ठं शीघ्रं निपुणञ्च यथास्यात्तथा मौर्वी ज्या उपहिता स्थापिता तस्य रामस्य पक्षे अर्जुनस्य बाहुमूले स्कन्धे कुमार्या सीतया पक्षे द्रौपद्या च निजवरणस्य सखी सुहृत् वरणसम्पादिकेत्यर्थः माला मङ्क्षु शीघ्रं न्यस्ता स्थापिता मालायाञ्च सकलजनैः साधुवादैः सह-नेत्रमाला दृष्टिश्रेणी अर्पिता साधुवादैः पुरस्कृत्य माला सादरं दृष्टेत्यर्थः। अत्र रूपकसमसहोक्त्यलङ्कारैरेकावली सङ्कीर्णा। मालादीपकमिति कश्चित्। स्रग्धरावृत्तम् ॥ ३१ ॥

भग्नोत्साह इति। ततो हरधनुर्भङ्गानन्तरं भग्नोत्साहे भग्नोद्यमे विफलमनोरथ इत्यर्थः राजलोके सर्वतः समन्तात् स्वस्वभवनानीत्यर्थः गतवति सति मुनिरथच गुरुर्विश्वामित्रस्तस्य गिरा निर्दिष्टानाम् एतौ रामलक्ष्मणौ दशरथस्य राज्ञः पुत्रौ अन्यावपि भरतशत्रुघ्नौ अयोध्यायां विद्येते तावप्यानीय एतेभ्यश्चतुर्भ्यः सीताद्याश्चतस्रः कन्या देया इति विश्वामित्रगिरा सम्यगवधारितानामित्यर्थः। अथानन्तरं तेन राज्ञा जनकेन सहर्षम् अभिमतजामातृलाभात् साह्लादं यथातथा स्वं भवनं प्रापितानां सर्वेषां चतुर्णामपि नरेन्द्रस्य दशरथस्य

ते तत्र सर्वे समकालमेव
संप्राप्य दारान् सहसा विरेजुः ।
त्रैलोक्यसंशोधनजागरूकान्
गङ्गाविभङ्गानिव सिन्धुनाथाः ॥ ३३ ॥

आत्मजानां रामादीनां तत्र मिथिलायां युगपदेकदैव सा प्रसिद्धा वैवाहिकश्रीः औद्वाहिकाभ्युदयः समजनि विवाहो जात इत्यर्थः ।

पक्षे ततोलक्ष्यवेधानन्तरं भग्नोत्साहे राजलोके सर्वतोगतवति सति निर्दिष्टानां कुम्भकारावासात् प्रतिनिवृत्तस्य धृष्टद्युम्नस्य वचसा ज्ञातानाम् अथानन्तरं तेन राज्ञा द्रुपदेन सहर्षं यथातथा स्वं भवनं प्रापितानां सर्वेषां पञ्चानामपि नरेन्द्रात्मजानां युधिष्ठिरादीनां मुनिर्व्यासः गुरुर्माता कुन्ती तयोर्गिरा तत्र एकस्यामपि द्रौपद्यां युगपदेकदैव सा वैवाहिकश्रीः समजनि व्यासकुन्तीवचनादेव एका द्रौपदी तैः पञ्चभिः परिणीतेत्यर्थः । मन्दाक्रान्तावृत्तम् ॥ ३२ ॥

ते इति । ते सर्वे रामादयस्तत्र मिथिलायां समकालमेव एकदैव सिन्धूनां नदीनां नाथाः समुद्राः दिक्चतुष्टयवर्त्तित्वाद्बहुवचनं त्रैलोक्यस्य संशोधने पावने जागरूकान् तत्परान् गङ्गाया विभङ्गान् तरङ्गानिव दारान् पत्नीः सीतादीन् सहसा झटिति संप्राप्य विरेजुः शुशुभिरे दारा अपि त्रैलोक्यस्य संशोधने दुर्वृत्तरावणादिविनाशहेतुतया निरुपद्रवीकरणे जागरूकाः तदर्थमेवावतीर्णा इत्यर्थः ।

पक्षे ते सर्वे युधिष्ठिरादयस्तत्र पाञ्चालनगरे त्रैलोक्यसंशोधनजागरूकान् दुर्वृत्तदुर्योधनादिविनाशमूलतया जगच्छान्तिविधातॄन् दारान् द्रौपदीं पत्नीं संप्राप्य विरेजुः । अन्यत् समानम् । अत्र दारानिति आपोदारावर्षा इत्यादिना एकत्वे बहुवचनम् । उपमेयं श्रौती । "सिन्धुर्नद्यां गजमदेऽब्धौ देशे नदभेदयोः" इति हेमचन्द्रः । इन्द्रवज्रावृत्तम् 'सहसा' इत्यत्र 'सदृशान्' इति शशधरधृतः पाठः ॥ ३३ ॥

सम्बन्धान्मुदितात्मनां निजपदं प्राप्तुं मनः कुर्वतां
दिक्कुञ्जेषु निरन्तरं प्रकिरतां चारु प्रदीप्तं महः।
तेषां विक्रमवातवेल्लितनिजक्रोधानलप्रेङ्खितः
साक्षात्काल इवोद्यतो भृगुपतिर्दुर्योधनोऽभ्यागतः ॥३४

सम्बन्धादिति। सम्बन्धादुद्वाहसम्पर्कात् मुदितात्मनां हृष्टचित्तानां तथा निजपदं स्वस्थानमयोध्यां प्राप्तुं मनः कुर्वताम् अयोध्यां प्रति प्रस्थितानामित्यर्थः तथा दिश एव कुञ्जास्तेषु दिगन्तेष्वित्यर्थः निरन्तरं प्रदीप्तमुज्ज्वलं चारु महस्तेजः प्रकिरतां विक्षिपतां धनुर्भङ्गादिना अतितेजस्वित्वेन दिगन्तेषूद्घोषितानामित्यर्थः, तेषां रामादीनां विक्रमः पराक्रम एव वातस्तेन वेल्लितश्चालित उद्दीपित इत्यर्थः निजक्रोध एवानलस्तेन प्रेङ्खितः प्रेरितः सन् साक्षात् मूर्त्तिमान् उद्यतः कालोयम इव दुर्य्योधनः दुःखेन योधनीयः। "सुदुरोषद्भ्रः कर्म्मभावयोर्ह्रशादेः इति कर्म्मणि ङनः। भृगुपतिर्जामदग्न्यः अभ्यागतः तेषामभिमुखमागच्छत्।

पक्षे तेषाम् अर्जुनादीनां भृगुः शिवः पतिः प्रभुरुपास्योयस्य स दुर्य्योधनो राजा अभ्यागतः भृगूणां पर्वतप्रपातानां पतिः शल्यः तस्य पर्वतोयम्रूपत्वात् तथा दुर्य्योधनश्चेति वा। "ततः कर्णो महातेजा जिष्णुं प्रति ययौ रणे। भीमसेनं ययौ शल्योमद्राणामीश्वरो बली। दुर्य्योधनादयश्चान्ये भ्रातृणैः सह सङ्गताः" इति भारतोक्तेः। अन्यत् समानम्। भृगुपतिः शुक्र इव प्रयाणे पुरःशुक्रस्यामङ्गलपिशुनतया वर्जनीयत्वात्तदंशे साम्यम्। "पुरःशुक्रं प्रतिबुधं प्रत्यङ्गारकमेव च। अपि शक्रसमोराजा हतसैन्योनिवर्त्तते" इति शास्त्रादिति केचित्। "अथ भृगुः सानौ जमदग्निप्रपातयोः। शुक्रे रुद्रे च" इति हेमचन्द्रः। यद्यपि पाणिग्रहणात् प्रागेव दुर्योधनाद्याक्रमणं भारते वर्णितं तथापि रामायणानुरोधात् किञ्चिदन्यथावर्णनं न दूषणावहमिति ध्येयम्। अत्र रूपक काव्यलिङ्गोत्प्रेक्षाणां सङ्कीर्णता। "वल्लित" इत्यत्र "वल्गित" इति तथा "प्रोङ्खितः" इत्यत्र प्रेरितः इति शशधरधृतः। पाठः शार्दूल विक्रीडितं वृत्तम् ॥ ३४ ॥

स दुराग्रममानमय्य चापं
रणकण्डूतिमखण्डयत्ततोऽस्य ।
परलोकजिगीषयैव साकं
नृपतेः कौशिकनन्दनः कुमारः ॥ ३५ ॥

अथ पुनरुपयाते तेन सम्बध्य सन्धिं
प्रकृतिगुरुसुहृद्भिः प्रोषितैः काङ्क्षमाणाः ।
वधिरितभुवनान्तर्भूरिभेरीविरावै
रुदधिमिव पयोदाः स्वां पुरीं तेऽभिजग्मुः ॥ ३६ ॥

स इति। ततोऽनन्तरं कौशिकनन्दनो विश्वामित्रसन्तोषणः शिष्यत्वादिति भावः, नृपतेर्दशरथस्य कुमारः स रामः अस्य परशुरामस्य दुराग्रमन्यैरानमयितुमशक्यं चापमानमय्य तत्र वाणं सन्धायेत्यपि पूरणीयं परलोकजिगीषयैव साकं परलोकगमनव्यवसायेन सहैव अस्य रणकण्डूतिं युद्धोत्सुक्यम् अखण्डयत् निवारितवान् रणौत्सुक्यम् अखण्डयत् स्वर्गमार्गञ्चारुणदित्यर्थः काकाक्षिन्यायात् अस्येति चाप रणकण्डूत्योः सम्बध्यते।

पक्षे कौशिकनन्दन इन्द्रतनयः स कुमारोऽर्जुनः दुराग्रमं चापमानमय्य अस्य नृपतेर्दुर्योधनस्य परलोकजिगीषयैव साकम् अपरजनजयेच्छया सहैव रणकण्डूतिमखण्डयत् कर्णस्य जयेनेति भावः अर्जुनेन कर्णपराजयं दृष्ट्वा दुर्योधनो रणौत्सुक्यं परजिगीषाञ्च तत्याजेत्यर्थः। "जिगीषा जेतुमिच्छायां व्यवसायप्रकर्षयोः" इति मेदिनी। "कौशिको विश्वामित्रे" इति त्रिकाण्डशेषः। "महेन्द्रगुग्गुलूलूकव्यालग्राहिषु कौशिक इत्यमरः। वैतालीयभेद औपच्छन्दसिकं वृत्तम्। 'तेन इत्यत्र 'तत्र' 'प्रेषितैः' इत्यत्र 'प्रोज्झितैः' इति शशधरधृतः पाठः ॥ ३५ ॥

अथेति। अथानन्तरम् अर्थात् परशुरामे तेन रामेण सह सन्धिं सम्बध्य विधाय पुनरुपयाते स्वाश्रमं प्रयाते सति प्रोषितैः रामेण विश्लेषितैः प्रकृतिभिः प्रजाभिः गुरुभिः कौशल्यादिभिः सुहृद्भिश्च अयोध्यास्थैरिति शेषः काङ्क्ष्यमाणा

सुहृद्भिराप्तैरभिनन्दितानां
गुणोदयप्रीणितसज्जनानाम्।
प्रतापवित्रासितशात्रवाणां
तेषामभूत्तत्र सुखं निवासः॥ ३७॥

अभिलष्यमाणास्ते रामादयः भूरिभिर्भेरीणां विरावैर्ध्वनिभिर्बधिरितं बधिरीकृतं भुवनान्तर्जगदन्तरालं यैस्ते तथा ताद्दशाः सन्तः पयोदा मेघा उदधिं समुद्रमिव स्वां पुरीम् अयोध्याम् अभिजग्मुः। अन्तरित्यव्ययं, पयोदा अपि भूरिभेरीणामिव विरावैर्भुवनान्तरालं बधिरीकुर्वन्ति।

पक्षे तस्मिन् दुर्योधने तेनार्जुनेन सह सन्धिं सम्बद्य नास्माभि र्ब्राह्मणैः सह योद्धव्यमिति साम प्रयुज्य पुनरुपयाते हस्तिनां गते सति प्रोषितैश्चिरवियुक्तैः प्रकृतिभिः गुरुभिर्भीष्म-द्रोण-कृप-धृतराष्ट्रादिभिः सुहृद्भिश्च चरमुखाद्विदितवृत्तान्तैरित्यर्थः। "ततो राज्ञां चरैराप्तैः प्रवृत्तिरुदनीयत। पाण्डवैरुपसम्पन्ना द्रौपदी पतिभिः शुभा" इति भारतीयात्। काङ्क्ष्यमाणाः विदुरं प्राप्य तन्मुखेन हस्तिना-गमनं याच्यमाना इत्यर्थः ते युधिष्ठिरादयः स्वां पुरीं हस्तिनाम् अभिजग्मुः। शेषं समानम्। उपमालङ्कारः। मालिनीवृत्तम्। "ननमयययुतेयं मालिनी भोगिलोकैः" इति लक्षणात्॥ ३६॥

सुहृद्भिरिति। सुहृद्भिर्मित्रैराप्तैः प्रत्ययितैरभिनन्दितानां प्रशंसितानां तथा गुणानां शौर्यविनयादीनामुदयेन प्रीणितास्तोषिताः सज्जनाः साधवो यैस्ते तथा तेषां तथा प्रतापेन वित्रासिता विभीषिताः शात्रवायैस्ते तथा ताद्दशानां तेषां रामादीनां तत्रायोध्यायां सुखं यथा तथा निवासोवसतिरभूत्। "आप्तः प्रत्ययितस्त्रिषु" इत्यमरः।

पक्षे तेषां युधिष्ठिरादीनां तत्र इन्द्रप्रस्थे सुखं निवासोऽभूत्। पञ्चालादागत्य कञ्चित् कालं हस्तिनायां स्थित्वा धृतराष्ट्रवचनाद्राज्यार्द्धं प्राप्य खाण्डवप्रस्थं गत्वा नगरं निर्म्माय तत्र ते सुखमूषुरित्यर्थः शेषं समानम्। इन्द्रवज्रोपेन्द्रवंशयोरुपजातिर्वृत्तम्॥ ३७॥

गुणैर्गुरौ ज्यायसि भक्तिनम्राः
पृथग्धुरीणा अपि दर्शितैक्याः ।
दिशां विभागानुप्रपद्यमाना
भान्तिस्म चत्वार इवाब्धयस्ते ॥ ३८ ॥
तैश्चतुर्भिर्बभौ राजा कुमारैः पार्श्ववर्त्तिभिः ।
सुमेरुरिव विष्कम्भैः स हरिप्रस्थभूषितैः ॥ ३९ ॥

गुणैरिति। गुरौ वशिष्ठदशरथादौ तथा गुणैर्ज्यायसि ज्येष्ठेऽन्यस्मिंश्च भक्तिनम्रा विनयव्यवहारेणेत्यर्थः तथा दिशां विभागान् युवराजत्वेन पित्रा निर्दिष्टान् दिगंशान् प्रतिपद्यमानाः प्राप्नुवन्तः अत एव पृथग्धुरीणा अपि भिन्नराजकार्य्यधुरन्धरा अपि दर्शितैक्या एकीभूयराजकार्य्यं निष्पादयन्त इत्यर्थः ते चत्वारोरामादयः चत्वारोऽब्धयः समुद्रा इव भान्ति स्म समुद्रवदक्षोभ्या इत्यर्थः समुद्रा अपि नम्राः दिग्विभागज्ञापकाः अतएव पृथग्भूता अपि दर्शितैक्याः। गुणैर्भान्तिस्मेति वा योजना।

पक्षे ज्यायसि ज्येष्ठे गुरौ युधिष्ठिरे भक्तिनम्रास्ते चत्वारो भीमादयः दिशां विभागान् प्रतिपद्यमाना अब्धय इव गुणैः शोभाविलासादिपौरुषगुणैर्भान्ति स्म। शेषं समानम्। उपमेयं श्रौती। "शोभा विलासोमाधुर्यं गाम्भीर्यं धैर्यतेजसी। ललितौदार्यमित्यष्टौ सत्त्वजाः पौरुषागुणाः" इति दर्पणः ॥ ३८ ॥

तैरिति। पार्श्ववर्त्तिभिः समीपस्थैस्तैश्चतुर्भिः कुमारैरामादिभिः स राजा दशरथः चतुर्भिर्विष्कम्भपर्वतैर्मन्दरादिभिः सुमेरुरिव बभौ किम्भूतैः हरेः सूर्य्यात् प्रस्था प्रस्थानम् आविर्भाव इति यावत् यस्य स तथा हरिप्रस्थः सूर्य्यवंशः स भूषितोयैः सूर्य्यवंशालङ्करणभूतैरित्यर्थः विष्कम्भपर्वता अपि हरिप्रस्थैः सिंहयुक्तसानुभिर्भूषिताभवन्ति। 'यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु। शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु' इति, 'स्नुः प्रस्थः सानुरस्त्रियाम्' इति चामरः। विष्कम्भैरिति वेः स्कभ्नातेर्नित्यमिति षत्वम्।

पक्षे स राजा युधिष्ठिरः हरिप्रस्थभुवि इन्द्रप्रस्थभूम्याम् उषितैः स्थितवद्भिः

मुनीन्द्रदिष्टे समये निविष्टै-
राराधितानां भृशमात्मदारैः ।
दिने दिने पार्थिवनन्दनानां
परस्परं प्रेमभरो मुमूर्च्छ ॥ ४० ॥
दृष्टावलोकं जननीगुरूणां
तेजोऽतिभास्वन्नरतं दधानम् ।

चतिप्रसीभूषितो यैस्ते तथा तैरिति वा तैश्चतुर्भि कुमारैर्भीमादिभिर्वर्भो धृतराष्ट्रवचनात् राज्यार्द्धसहितम् इन्द्रप्रस्थं प्राप्य तत्र नगरे निर्म्माय भ्रातृभिः शुशुभे इत्यर्थः । शेषं समानम् । उपमालङ्कारः ॥ ३९ ॥

मुनीन्द्रेति । मुनीन्द्रैर्वशिष्ठवाल्मीकिप्रभृतिभिर्धर्मवक्तृभिर्दिष्टे उपदिष्टे समये पर्वादिभिन्नकाले निविष्टैः सनीपमुपस्थितैरात्मदारैः सीतादिभिर्भृशमाराधितानां पार्थिवनन्दनानां रामादीनां परस्परमन्योन्यप्रेमभरः प्रीत्यतिशयः दिने दिने मुमूर्च्छ ववृध । मुनीन्द्रेत्यादिविशेषणेन रामादीनामस्त्रीनियतत्वं सूचितम् ।

अथ मुनीन्द्रेण नारदेन दिष्टे निर्द्दिष्टे समये नियमे द्रौपद्या सहासीन-मेकमन्यो यः पश्येत् स द्वादश वर्षाणि ब्रह्मचारी वने वसेदित्येवंरूप इत्यर्थः निविष्टैरात्मदारैर्द्रौपद्या भृशमाराधितानां पार्थिवनन्दनानां युधिष्ठिरादीनां परस्परं दिने दिने प्रेमभरोमुमूर्च्छ नत्वेकपत्नीकतया भेदोबभूवेत्यर्थः अत एव मुनीन्द्रेत्यादिपदानां विशेषणगत्या हेतुत्वात् पदार्थहेतुककाव्यलिङ्गालङ्कारः । नारद उवाच । "पाञ्चाली भवतामेका धर्मपत्नी यशस्विनी । यथा वोनात्रभेदः स्यात्तथा नीतिर्विधीयतामित्युपक्रम्य । एवमुक्ता महात्मानो नारदेन महर्षिणा । समयं चक्रिरे राजंस्तेऽन्योऽन्यं वशमागता" इति महाभारतम् । समयः शपथे भाषासम्पदोः कालसंविदोः । सिद्धान्ताचारसङ्केतनियमावसरेषु चेति हेमचन्द्रः ॥ ४० ॥

दृष्टेति । राजा दशरथः जनन्याः कैकेय्या गुरूणां पित्रादीनाम् दृष्टो-

राजा सशत्रुघ्नमनीलसप्तिं
प्रास्थापयत्तीर्थनिषेवणाय ॥ ४१ ॥
सरांसि शैलान् सरितश्च तीर्त्वा
गच्छन्नहीनात्मजयैधितश्रीः ।

ऽभिलषितोऽवलोको दर्शनं येन स तथा तं मातामहादीन् द्रष्टुमिच्छन्तमित्यर्थः अथवा जननीगुरूणामिति कर्तृत्वसम्बन्धे षष्ठी मातामहादिभिर्दिदृक्षित-मित्यर्थः तथा भास्वन्तं सूर्यमतिक्रान्तम् अतिभास्वत् तेजो दधानं सूर्यवदति-तेजस्विनमित्यर्थः तथा सशत्रुघ्नं शत्रुघ्ननाम्ना लक्ष्मणानुजेन सहितं तस्य शत्रुघ्ने-नैव द्वन्द्वपरत्वादिति भावः तथा अनीलाः श्वेताः सप्तयोऽश्वा यस्य स तथा तं भरतनामकं पुत्रं तीर्थानां शास्त्राणां निषेवणाय सम्यगधिगमाय प्रास्था-पयत् शास्त्राणि सम्यगध्येतु तन्मातामहावासं नन्दिग्रामं प्रेरयामासेत्यर्थः । तीर्थं शास्त्राध्वरक्षेत्रोपायनारीरजःसु च । अवतारर्षिजुष्टाम्बुपात्रोपाध्याय-मन्त्रिष्विति मेदिनी ।

पक्षे स राजा युधिष्ठिरः शत्रूघ्नं शत्रून् निर्जित्य ब्राह्मणगवानयनात् शत्रु हन्तारम् अनीलसप्तिं श्वेताश्वम् अर्जुनं तीर्थनिषेवणाय द्वादशवर्षाणि तीर्थानि निषेवितुं प्रास्थापयत् पूर्वोक्तसमयभङ्गादिति भावः । किम्भूतं यतः जननीगुरूणाम् दृष्टावलोकं जनधातोर्भावे औणादिकोऽनिप्रत्ययः ङीष्वा-दीप् जननी जन्म तया गुरवस्तेषां वयोज्येष्ठानामित्यर्थः गौरवे बहुवचनं युधिष्ठिरस्येति यावत् दृष्टां प्रियां द्रौपदीम् अवलोकयतीति तं कर्मण्यणिति वाट् । ब्राह्मणगोधनापहर्तृन् चौरान् वारयितुमायुधग्रहणार्थमायुधागारं प्रविश्य तत्र तदानीं युधिष्ठिरस्यैव पत्नीत्वेनाभिमतां द्रौपदीं दृष्टवन्तमित्यर्थः तथा भास्वान् सूर्यः भरतो दीप्तमिन्तः तयोर्द्वन्द्वः तावप्यतिक्रान्तम् अतिभास्व-द्भरतं तेजोदधानम् अतितेजस्वित्वात् बन्धुभिर्वारितमपि तीर्थनिषेवणायैव प्रतिष्ठमानमित्यर्थः ॥ ४१ ॥

सरांसीति । सरांसि सरसीः शैलान् पर्वतान् सरितीर्नदीश्च तीर्त्वा उल्लङ्घ्य

वीरः किरीटी स्वभुजोपगूढ़
चित्राङ्गदः सातिशयं विरेजे ॥ ४२ ॥
प्राप्य प्रभासम्पदमिष्टयोगि
मातामहस्थानमुपेत्य राष्ट्रम्।

गच्छन् मातामहावासमिति शेषः तथा अहीनोऽन्यूनो य आत्मजयः मनसोव-शीकरणं तेन एधिता वर्द्धिता श्रीर्यस्य स तथा अतिजितेन्द्रिय इत्यर्थः अहीनो महान् आत्मा येषां ते अहीनात्मानो महाकायास्तेषां जयेनैधितश्रीरिति वा। 'आत्मा पुंसि स्वभावेऽपि प्रयत्नमनसोरपि। धृतावपि मनीषायां शरीरब्रह्मणो-रपि' इति मेदिनी। तथा किरीटी धृतमुकुटः तथा स्वभुजाभ्यां उपगूढ़े चित्रा-ङ्गदे विचित्रकेयूरे येन स तथा तादृशो वीरो भरतः, धीर इत्यपि क्वचित् पाठः, सातिशयं विरेजे अधिकं शुशुभे।

पक्षे वीरः किरीटी अर्जुनः तीर्थभृतान् सरःप्रभृतीन् तीर्त्वा गच्छन् गङ्गा-द्वारमिति शेषः तत्र अहीनां नागानाम्, इनस्य ईश्वरस्य कौरव्यनामकस्येत्यर्थः आत्मजया कन्यया उलूपीनाम्ना इत्यर्थः एधितश्रीः उलूपीपरिग्रहेणातिशो-भमान इत्यर्थः तथा स्वेन स्वयत्नेन अतिरूपवतीं दृष्ट्वा स्वाभिलाषं प्रकाश्येत्यर्थः भुजे पाणौ उपगूढ़ा गृहीता चित्राङ्गदा तन्नाम्नी मणिपुरनृपकन्या येन सः कृतचित्राङ्गदापाणिग्रहण इत्यर्थः तादृशः सन् सातिशयं विरेजे। "रमणी-यानि चित्राणि वनानि च सरांसि च। सरितः सागरांश्चैव देशानपि च भारत। पुण्यान्यपि च तीर्थानि" इत्यादि महाभारतम् ॥ ४२ ॥

प्राप्येति। स भरतः प्रभासम्पदं पूर्वोक्तकिरीटाङ्गदादिभूषणेन शोभा-समृद्धिं प्राप्य इष्टयोगि अभीष्टयुक्तं मातामहस्थानरूपं राष्ट्रं केकयराज्यम् उपेत्य अच्युतेन स्थिरस्वभावेन क्षौणिभृता केकयनृपेण सन्तोषितः शिरश्चुम्बन-प्रेमालिङ्गनादिभिराह्लादितः सन् सुभद्राणां सुष्टुकल्याणानाम् अधिगमः प्राप्तिर्यत्र तम् उत्सवं लेभे अतिमाङ्गलिकमहोत्सवं प्रापेत्यर्थः।

पक्षे सोऽर्जुनः प्रभासं नाम पदं प्रदेशं तीर्थमित्यर्थः प्राप्य। "पदं शब्दे च

सन्तोषितः क्षोणिभृताच्युतेन
लेभे सुभद्राधिगमोत्सवः सः ॥ ४३ ॥

प्रसूत्या पारिजातस्य पूरः क्षीराम्बुधेरिव ।
रेजे सौभद्रसन्तानलब्ध्या शीतरुचोऽन्वयः ॥ ४४ ॥

कमनीयतया पुष्यन्नन्दथुं सर्वदेहिनाम् ।

वाक्ये च व्यवसायप्रदेशयोः" इति मेदिनी। ततश्च इष्टयोगि रामकृष्णाद्यभीष्टजनयुक्तं मातामहस्य कुन्तीजनकस्य शूरस्य तद्वंशस्येत्यर्थः स्थानरूपं राष्ट्रं द्वारकाराज्यम् उपेत्य श्रीकृष्णानुरोधेर्नेति शेषः क्षोणिभृता कूर्म्ममूर्त्या धरणीधरेण क्षोणिस्थजनपालयित्रा वा अच्युतेन हरिणा। "अच्युतस्तु हरौ पुंसि स्थिरे त्रिष्वि"त्युभयत्रापि मेदिनी। सन्तोषितः रैवतकगिरौ गीतवादित्रादिभिः सम्मानितः सन् सुभद्रा नाम वसुदेवसुता तस्या अधिगमेन उत्सवं लेभे सुभद्रां परिणीतवानित्यर्थः ॥ ४३ ॥

प्रसूत्येति। पारिजातस्य देवतरुविशेषस्य प्रसूत्या प्रसवेन पुष्पादिनेत्यर्थः क्षीराम्बुधेर्दुग्धसमुद्रस्य पूर ओघ इव तस्य पारिजातप्रथमोत्पत्तिस्थानत्वादिति भावः असौ अशीतरुच उष्णरश्मेरन्वयो वंशः सूर्य्यवंशप्रसूतो भरतः भद्रसन्तानस्य कल्याणपरम्परायालब्ध्या लाभेन रेजे शुशुभे।

पक्षे शीतरुचश्चन्द्रस्यान्वयोऽर्ज्जुनः सुभद्राया अयं सौभद्रः तादृशो यः सन्तानोऽपत्यम्। "सन्तानः सन्ततौ गोत्रे स्यादपत्ये सुरद्रुमे" इत्युभयत्र मेदिनी। तस्य लब्ध्या अभिमन्युनामकपुत्रप्राप्त्येत्यर्थः रेजे सुमुदे द्वारकायां सुभद्रां परिणीय तत्र संवत्सरमुषित्वा पुष्करतीर्थेऽवशिष्टसमयं गमयित्वा सुभद्रासहित एव इन्द्रप्रस्थं गत्वा तत्राभिमन्युं लब्ध्वा मुमुदे इति भारतैकवाक्यतया प्रतिफलितोऽर्थः। अन्यत् समानम्। उपमालङ्कारः ॥ ४४ ॥

स राजनन्दनो रेजे कामदेव इवापरः ॥ ४५ ॥

इति राघवपाण्डवीये महाकाव्ये

द्वितीयः सर्गः।

कमनीयेति। स राजनन्दनो भरतः अपरो द्वितीयः कामदेव इव कमनीयतया सौन्दर्य्येण सर्व्वदेहिनां नन्दथुमानन्दं पुष्यन् जनयन् सन् रेजे शुशुभे।

पक्षे स राजनन्दनोऽर्ज्जुनः यद्वा राज्ञो युधिष्ठिरस्य नन्दयतीति नन्दनः। ण्वो नन्द्यादेरिति कर्त्तरि ल्युः। युधिष्ठिरस्यातिप्रिय इत्यर्थः सोऽभिमन्युः रेजे शेषं समानम्। उपमा ॥ ४५ ॥

इति श्रीप्रेमचन्द्रतर्कवागीशभट्टाचार्य्यविरचितायां राघवपाण्डवीय-महाकाव्यटीकायां कपाटविपाटिकाख्यायां द्वितीयः सर्गः।

—००—

## तृतीयः सर्गः ।

**स राजाभिमतो लोके विजयोर्जितविक्रमः ।**
**हरिसारथिनाभ्येत्य याचितोऽभूद्दिवोऽवनम् ॥१॥**

इदानीं रामवनप्रयाणे वर्णयितव्ये तत्प्रयोजकं कैकय्यै दशरथस्य वरद्वयदानं प्रकटयितुं रामादिजन्मनः पूर्वं कृतमपि देवासुरयुद्धे दशरथस्य देवपक्षसाहाय्यं सम्प्रत्युत्थापयति

स इति। राजा दशरथः हरेरिन्द्रस्य सारथिना मातलिना इन्द्रादिप्रेरितेनेत्यर्थः अभ्येत्यागत्य अयोध्यायामिति शेषः दिवः स्वर्गस्य तिमिध्वजादिभिरुपद्रुतस्येत्यर्थः अवनं रक्षणं याचितः प्रार्थितोऽभूत्। तदानीमन्येऽपि राजानः स्थितास्तान् विहाय दशरथस्याभ्यर्थने हेतुभूतं विशेषणमाह विजयेन समस्तनृपगणपराजयेन ऊर्जितोविक्रमः पराक्रमो यस्य सः अत एव लोके भुवने अभिमतः अतिशूरत्वेन सम्मतः। अत्र दशरथस्याभ्यर्थनं प्रति विशेषणद्वयस्य हेतुत्वात् काव्यलिङ्गालङ्कारः।

पक्षे लोके अर्जित उपार्जितो विक्रमो यस्य सः तथा राज्ञो युधिष्ठिरस्याभिमतः सम्मतः यमुनाविहारायेति शेषः। "आमन्त्र्य तौ धर्मराजमनुज्ञाप्य च भारत" इति भारतीयात्। स विजयोऽर्जुनः। "विजयः स्याज्जये पार्थे" इति विश्वः। हरिर्वायुः सारथिः सखा यस्य स तथा तेन। 'यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु'। 'शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु'इत्युभयत्राप्यमरः। हरिसारथिना वह्निना ब्राह्मणरूपिणेत्यर्थः अभ्येत्य दिवः स्वर्गस्य स्वर्गाधिपतेरिन्द्रस्येत्यर्थः वनम् इन्द्रसुहृत्तक्षकादिनिवासस्थानत्वादिन्द्ररक्षणीयं खाण्डवनामकमरण्यं दग्धुमिति शेषः। याचितोऽभूत्। पुरा किल श्वेतकिनृपयज्ञे दुर्वाससानवरतप्रक्षिप्यमाणसन्तताज्यधारासमुपयोगेन सम्पन्नमन्दाग्निर्भगवानग्निः खाण्डववनदहनं तत्प्रतिकारं मन्यमानः यमुनाविहारं समाप्य एकान्ते कृष्णेन सह निषण्णमर्जुनमभ्येत्य तत् याचितवानिति भारतकथा आदिपर्वणि २२३—२२७ अध्याये ॥ १ ॥

क्रामन् दिवं कीर्त्तिभिरर्जुनोऽथ
तन्नीतवलाद्धरिणा रथेन।
नरः स साक्षादिव गाण्डिवेन
चकार भीतिं धनुषा परेषाम् ॥२॥
स देवदत्तोद्धतवीर्य्यसम्प-
दक्षीणवाणोज्ज्वलतूणधारी।

क्रामन्निति। अथ मातलियाचनानन्तरं कीर्तिभिरर्जुनः "अर्जुनः ककुभे पार्थे कार्तवीर्य्यमयूरयोः। मातुरेकसुतेऽपि स्यात् पुंलिङ्गे धवलेऽपिच" इति मेदिनी शुभ्रः अतियशस्वीत्यर्थः। 'धवलोऽर्जुनः' इत्यमरः। स दशरथः तेन मातलिना नीता नुन्नाः अत एव वलान्तः समवं गच्छन्तो हरयोऽश्वा यत्र स तथा तेन रथेन इन्द्रप्रेरितेनेत्यर्थः दिवं स्वर्गमाकाशं वा क्रामन् गच्छन् सन् कैकयीसहित इति शेषः रामायणे (व) तथैवोक्तत्वात् धनुषा परेषां शत्रूणां तिमिध्वजादीनां भीतिं चकार अस्य प्रतापातिशयमुपमया व्यनक्ति नर इति गाण्डिवेन धनुषा शार्ङ्गेणेत्यर्थः साक्षान्नरो विष्णुरिव यथा शार्ङ्गधनुषा विष्णुर्दैत्यानां भयं चकार तथेत्यर्थः प्रतापातिशयं प्रकटयामासेति भावः। "नरो-मर्त्त्येऽर्जुनेऽच्युते" इति "गाण्डीवगाण्डिवौ चापमात्रे पार्थधनुष्यपि" इतिच हेमचन्द्रः।

पक्षे अथ वह्निप्रार्थनानन्तरं कीर्तिभिर्दिवं स्वर्गं क्रामन् पूरयन् कीर्त्या स्वर्गेऽपि गीयमान इत्यर्थः साक्षादिव नरो नरनामकस्य भगवन्नारायणांशस्यावतारः सोऽर्जुनः कृष्णेन सहेति शेषः तेन वह्निना नीतः वरुणादानीय दत्तः तथा वलात् विक्रामन् हरिर्वानरोयत्र स तथा वानरकेतन इत्यर्थः सच सचेति विशेषणसमासः तेन रथेन तथा गाण्डिवेन गाण्डिवनामकेन धनुषा वह्निदत्तेनेति शेषः उपलक्षितः सन् परेषाम् अन्येषां खाण्डववनवासिनां भीतिं चकार वह्निदत्तरथगाण्डिवादिसंम्पन्नः सन् तद्दह्यमानखाण्डववनवासिनां परितः पलायननिरोधेन भयं चकारेत्यर्थः ॥ २ ॥

स इति। देवैरिन्द्रादिभिर्दत्ता उद्धता उद्रिक्ता वीर्य्यसम्पत् सामर्थ्याति-

द्विषद्द्विजिह्वोग्रवनं स्वबाहु
प्रतापरूपे ज्वलने जुहाव ॥३॥
निजविक्रमनिर्धूतपर्जन्यशरसन्ततिः।
स पन्नगांस्तार्क्ष्य इव द्रावयामास दानवान् ॥४॥

शयो यस्मै सः देवैर्वर्द्धितशौर्य्यातिशय इत्यर्थः तथा अक्षीणाः महान्तो ये बाणा स्तैरुज्ज्वल उद्दीप्तो यस्तून इषुधिस्तं धारयतीति अक्षीणबाणोज्ज्वलतूण-धारी स दशरथः द्विषन्तः शत्रव एव द्विजिह्वाः हिंसत्वात् सर्पास्तेषामुग्रं भयङ्करं वनमिव वनं समूहं स्वस्य बाह्वोः प्रतापरूपे पराक्रमाभिन्ने ज्वलने वह्नौ जुहाव हुतवान् निजभुजप्रतापेन शत्रुकुलं जघानेत्यर्थः। अत्र द्विषत्सु द्विजिह्वत्वारोपात् बाहुप्रतापे च वह्नित्वारोपाद्रूपकालङ्कारः।

पक्षे सोऽर्जुनः द्विषन्तो विषोद्गमनादिना हिंसन्तो ये द्विजिह्वाः सर्पाः। "तथैवोरगसङ्घाताः पाण्डवस्य समीपतः। उत्सृजन्तोविषं घोरं निष्पेतु-र्ज्वलिताननाः" इति भारतीयात्। तैरुग्रं भयदं यद्वनं खाण्डवं तत् स्वस्य बाह्वोः प्रतापं रूपयति प्रकाशयतीति। कर्म्मणो णिङिति कर्त्तरि णट्। तस्मिन् ज्वलने वह्नौ जुहाव वह्निना खाण्डवं दाहयामासेत्यर्थः, वह्नेः पूर्व्व-श्लोकोक्तप्रतापवर्द्धकत्वं तद्विशेषणेन ख्यापयति किम्भूतः देवेत्यादिः देवेन वह्निना दत्तौ उद्धतवीर्य्यसम्पन्नौ अक्षीणैर्निरन्तरक्षेपेऽपि क्षयमगच्छद्भिर्बाणै-रुज्ज्वलः पूर्णस्तूणश्च तौ धारयतीति देवदत्तोद्धतवीर्यसम्पदक्षीणबाणोज्ज्वल-तूणधारी वह्निनास्य वीर्य्यं वर्द्धितम् अक्षयबाणपूर्णस्तूणश्च दत्त इत्यर्थः। देव-दत्तेन तन्नामकशङ्खेन तन्नादेनेत्यर्थः उद्धता प्रकटिता वीर्य्यसम्पत् यस्य स इति बहुव्रीहिः मनोरमं खाण्डवदाहसमयेऽर्जुनस्य देवदत्तशङ्खाभावात् तत्परमेव मयदानवेन विन्दुसरसः सकाशादानीयार्जुनाय देवदत्तशङ्खस्य दत्तत्वात् ॥ ३ ॥

निजेति। निजविक्रमेण स्वपराक्रमेण निर्धूता विफलीकृता पर्जन्यस्य इन्द्रस्य शरसन्ततिर्येन सः इन्द्रशरकार्यं दानवविद्रावणं स्वयमेव कुर्वन्नित्यर्थः स दशरथःपन्नगान् नागान् तार्क्ष्यो गरुड़ इव दानवान् असुरान् द्रावयामास ताड़ितवान्। 'पर्जन्यौ रसदब्देन्द्रौ' इत्यमरः। निजविक्रमेण निर्धूता

दिवः स कृत्वामयशान्तिमेवं
प्रणीतगुप्तिर्हरिणा कृतश्रीः ।
पुनः प्रपेदे निजमेव राष्ट्रं
रामाननालोकनलम्पटात्मा ॥५॥

पर्जन्य इव ध्वनदम्बुदवृष्टिरिव शरसन्ततिरसुरमुक्तबाणपरम्परा येन स इति केचित् ।

पक्षे निजविक्रमेण निर्धूताः पर्जन्या इन्द्रप्रेरितध्वनन्मेघा यया तादृशी शरसन्ततिर्यस्य सोऽर्जुनः तार्क्ष्यो गरुड इव तार्क्ष्यवदतिप्रतापीत्यर्थः सपन्नगान् दानवान् पन्नगान् दानवांश्चेत्यर्थः द्रावयामास वह्निं गालयामास इन्द्रप्रेरितान् मेघान् बाणवर्षैर्निराकृत्य पलायमानान् पन्नगादीन् बाणेनावरुध्य वह्निं दाहयामासेत्यर्थः । उभयत्राप्युपमालङ्कारः ॥ ४ ॥

दिव इति । एवं पूर्वोक्तप्रकारेण दिवः स्वर्गस्य आमयशान्तिम् उपद्रवनिवारणं कृत्वा प्रणीता विहिता गुप्तो रक्षा येन सः तथा हरिणा इन्द्रेण परितुष्टेन सतेति शेषः कृता पुरस्कारदानेन श्रीः शोभा यस्य सः तथा रामायाः सङ्गतायाः कैकय्या आननालोकने लम्पटः साभिलाषः आत्मा यस्य स युद्धश्रमापनयनाय शुश्रूषमाणां कैकयीं सानुरागं पश्यन्नित्यर्थः स दशरथः पुनर्निजमेवराष्ट्रम् अयोध्याराज्यं प्रपेदे प्राप । केचित्तु रामस्याननालोकनलम्पटात्मेत्याहु स्तन्न मनोरमम् असुरसंग्रामात् परमेव रामाद्युत्पत्तेः ।

पक्षे एवं पूर्वोक्तरीत्या प्रणीता कृता गुप्तिः खाण्डवं दहतो वह्नेः रक्षा येन सः, तथा हरिणा कृष्णेन कृता श्रीर्यस्य सः कृष्णसहित इत्यर्थः, हरिणा इन्द्रेण वह्निना वा कृतश्रीरिति वा तादृशः सोऽर्जुनः मयस्य मयनामकदानवस्य शान्तिं कृत्वा शरणागतं मयदानवं वह्निदाहादुद्धृत्येत्यर्थः रामायाः द्रौपद्याः सुभद्रायाश्च आननालोकने लम्पट आत्मा यस्य सः वनितामुखं द्रष्टुमुत्कण्ठमानः सन् इत्यर्थः दिवः स्वर्गात् स्वर्गीयवनात् खाण्डवादित्यर्थः पुनर्निजमेव राष्ट्रं इन्द्रप्रस्थं प्रपेदे ॥ ५ ॥

स्वर्गमार्गस्य मित्रं या साभर्तृवरयोगतः ।
तुतोष वनिता भक्तिविनमत्तनुमध्यमा ॥६॥

महार्घमुक्तामयसंविधान-
प्रकामरम्या मणिदारुचित्रा ।
सभा कुमाराधिगता नृपेण
भेजे सुधर्मेव सुराधिपेन ॥७॥

स्वर्गेति। या स्वर्गमार्गस्य स्वर्गमार्गगमनस्य मरणस्येत्यर्थः मित्रं हेतुः रामवनवासद्वारा तात्कालिकमरणजनिकेत्यर्थः सा मध्यमा वनिता पत्नी कैकेयी भर्त्तुः स्वामिनः सकाशात् वरयोरभीप्सितयोर्योगतो लाभात्। "वरो जामातरि पत्यौ देवतादेरभीप्सिते" इति मेदिनी। सेवासन्तोषिताद्राज्ञो वरद्वयं प्राप्येत्यर्थः भक्त्या अनुरागेण विनमन्ती प्रह्वीभवन्ती तनुर्यत्न क्रियायां तद्यथा तथा, तुतोष मुमुदे वरयोरेकेन रामवनवासं द्वितीयेन भरतस्य राज्यं याचिष्यते।

पक्षे। या स्वर्गमार्गस्य स्वर्गवर्त्मविहारस्य मित्रं सहायः। दिवि ज्योतिरजरमारभेतामित्यादिश्रुतेः। ससा वनिता द्रौपदी भर्तृवरस्य स्वामिश्रेष्ठस्यार्जुनस्य योगतः सम्बन्धात् तुतोष चिरादर्जुनं प्राप्य मुमुदे इत्यर्थः किम्भूता भक्त्या विनमन्ती चासौ तनुमध्यमा क्षीणमध्या चेति सा, विशेषणयोः कर्मधारयः॥ ६ ॥

महार्घेति। नृपेण दशरथेन महार्घमुक्तामयं महामूल्यमुक्ताबहुलं यत् संविधानं तोरणादिरचना तेन प्रकामरम्या अतिरमणीया तथा मणिभिर्दारुभिश्च चित्रा विचित्रिता आश्चर्य्यरूपा वा तथा कोः पृथिव्याः माराः कन्दर्पा इव कुमाराः सुन्दरपुरुषास्तैरधिगता व्याप्ता। कुमारैः रामादिभिरधिगतेति व्याख्यानं न रुचिवहं देवासुरसंग्रामात् प्रतिनिवृत्तेः प्रागामादनुत्पत्तेः। तादृशी सभा सुराधिपेनेन्द्रेण सुधर्मा देवसभा इव भेजे प्रविष्टा संग्रामात्प्रतिनिवृत्य सभां प्रविवेशेत्यर्थः। "स्यात् सुधर्मा देवसभे"त्यमरः। सापि महार्घादिविशेषणवती कुमारेण कार्त्तिकेयेनाधिगता च भवति।

इष्टावाप्तिकृतोपायः स देवर्षिकृतादरः।
भीमोद्यमपरः काले जरासन्धारितामगात् ॥८॥
वृद्धभावं गतस्यापि तस्य पृथ्वीपतेः परैः।
दुष्प्रधर्ष्यमभूत्तेजो नैदाघस्येव भास्वतः ॥९॥

पक्षे। महार्घा मुक्ता यस्यां सा तथा मयस्य खाण्डवदाहाद्रक्षितस्य मयदानवस्य यत् संविधानं शिल्पकौशलं तेन प्रकामरम्या कुमारादर्जुनादधिगता अर्जुनरक्षितमयदानवनिर्मितत्वादर्जुनप्रभावादेव लब्धेत्यर्थः तादृशी सभा नृपेण युधिष्ठिरेण भेजे प्राप्ता। शेषं समानम्। उपमालङ्कारः ॥ ७ ॥

इष्टेति। इष्टस्य सत्वाद्यभिलषितस्य अवाप्तौ प्राप्तौ कृत उपायः यज्ञादिसाधनं येन स तथा देवैः ऋषिभिश्च कृतादरः कृतसम्मानः, तथा भीमो भयङ्करो य उद्यम आरम्भः युद्धाद्यनुष्ठानं तत्परः स दशरथः काले समये जराया वार्द्धक्यस्य सन्धारितां सम्यग्धारित्वं अगात् काले वृद्धो बभूवेत्यर्थः।

पक्षे। देवर्षिणा नारदेन कृतादरः आदरेण कथितपाण्डुसन्देश इत्यर्थः, अतएव इष्टस्य राजसूयाख्ययागस्यावाप्तौ कृतोपायः कृततदुपायचिन्तनः तथा भीमस्य भीमसेनस्य भ्रातुर्य उद्यमः पराक्रमाडम्बरः तत्परः सन् स युधिष्ठिरः काले जरासन्धस्य मगधराजस्य अरितां शत्रुताम् अगात् भीमद्वारा जरासन्धं हतवानित्यर्थः। मदर्थं राजसूययज्ञमाहरस्वेति पाण्डुसन्देशं नारदाच्छ्रुत्वा कथं स यज्ञोभवेदिति तदुपायं चिन्तयन् कृष्णमानाय्य ततश्च जरासन्धविनाशमन्तरेण स न भवेदिति निशम्य सकृष्णौ भीमार्जुनौ तत्र प्रेषयित्वा भीमेन तं घातयामासेति भारती मारती। अत्र स इति बुद्धिस्थपरामर्शिना तच्छब्देन युधिष्ठिरः सङ्गतत्वादुच्यते ॥ ८ ॥

वृद्धेति। वृद्धभावं वृद्धत्वं गतस्य प्राप्तस्यापि तस्य पृथ्वीपतेः राज्ञो दशरथस्य तेजः नैदाघस्य ग्रीष्मकालीनस्य भास्वतः सूर्य्यस्येव परैः शत्रुभिर्दुष्प्रधर्ष्यम् अनतिक्रमणीयम् अभूत्। उपमालङ्कारः।

पक्षे वृद्धस्य यो भावः स्वभाव इत्यर्थः तं गतस्यापि तस्य पृथ्वीपतेर्युधिष्ठिरस्य राजसूयार्थं दिशां जयाय प्रवर्त्तमानस्येत्यर्थः तेजः परैरन्यैर्दुष्प्रधर्ष्यमभूत्। अन्यत् समानम् ॥ ९ ॥

यथाश्वमेधेन पुरा मरुत्त-
स्तथा परं यष्टुमियेष भूपः ।
स राजसूयेन यथा च पूर्वं
राजा हरिश्चन्द्र उदारकीर्त्तिः ॥१०॥
स चतुरङ्गयुतं व्यसृजद्द्विषा-
मनुजवर्गमधृष्यमुदायुधम् ।

इत्थं रामवनप्रयाणप्रयोजकं देवासुरसंग्रामादिकं वर्णयित्वा सम्प्रति रामादिरूपेण भगवन्नारायणस्य पुत्रीभावे मूलभूतं यज्ञादिकृतं दशरथस्य पुण्यातिशयं वर्णयितुमारभते यथेति। उदारा महती कीर्त्तिर्यस्य स तथा । 'उदारो दातृमहतोः' इत्यमरः। स भूपो राजा दशरथः अश्वमेधेन यज्ञविशेषेण परं परमेश्वरं विष्णुं यष्टुं पूजयितुम् इयेष अभिललाष। अत्रोपमिनोति यथा पुरा पूर्वं मरुत्तो नृपविशेषोऽश्वमेधेन परं यष्टुमियेष यथाच पूर्वं राजा हरिश्चन्द्रो राजसूयेन यज्ञविशेषेण यष्टुमियेष तथेत्यर्थः मरुत्तहरिश्चन्द्रयोरिव तस्य यज्ञोऽतिसमृद्धिमानासीदित्यर्थः। अत्रोपमानयोरनेकत्वात् मालोपमेयम्। 'मालोपमा यदेकस्योपमानं बहु दृश्यते' इति लक्षणात्।

पक्षे स भूपो युधिष्ठिरः अश्वमेधेन मरुत्तो यथा राजसूयेन हरिश्चन्द्रो यथाच तथा राजसूयेन परमुत्कृष्टं यथा स्यात्तथा यष्टुमियेष स्वपितुः पाण्डोः सुचिरमिन्द्रलोकवासाय राजसूयं यज्ञं कर्त्तुमारेभे इत्यर्थः। शेषं समानम् ॥१०॥

सचेति। चकारः पूर्वापेक्षया समुच्चये। स दशरथः तुरङ्गयुतम् अश्वमेधालम्भनीयाश्वसहितं द्विषा शत्रुणा जात्याश्रयणादेकवचनम् अधृष्यम् अनतिक्रमणीयम् उदायुधम् उत्थापितास्त्रं मनुजवर्गं अश्वरक्षकमनुष्यसमूहं क्षितिपरिक्रमणाय पृथिवीभ्रमणाय व्यसृजत् प्राहिणोच्च क्षितिं परिभ्रमन्त-मश्वं रक्षितुं मनुजवर्गं नियुक्तवानित्यर्थः ततो मनुजवर्गात् तद्द्वारेत्यर्थः अमुना दशरथेन क इव नाम परः कोवाश्वापहारी शत्रुर्न पराजितः न विजितः अश्वमपहर्त्तुमागतः सर्व एव पराजित इत्यर्थः।

क्षितिपरिक्रमणाय ततोऽमुना
क इव नाम परो न पराजितः ॥११॥

आप्राच्याज्जह्नुकन्याजलभरजनिताडम्बरादम्बुराशे
राच प्रत्यग्रचैत्रानिलललितलतास्पन्दिनश्चन्दनाद्रेः।
आपाश्चात्याच्च लक्ष्मीपतिरचितनिजावासमुद्रात्समुद्रा-
दाच स्वःसोदरेभ्यस्समुदजुषत भूरुत्तरेभ्यः कुरुभ्यः ॥१२॥

पक्षे स युधिष्ठिरः चतुर्भिरङ्गैः सेनाङ्गैर्हस्त्यादिभिर्युतं युक्तम्। 'हस्त्यश्व-रथपादातं सेनाङ्गं स्याच्चतुष्टयम्' इत्यमरः। द्विषां शत्रूणाम् अध्यम् उदा-युधम् अनुजवर्गं स्वकनिष्ठभीमार्जुनादिकं क्षितिपरिक्रमणाय राजसूयाङ्ग-करग्रहणार्थं समग्रां पृथ्वीं परिक्रमितुं व्यसृजत् ततस्तैरनुजवर्गैरमुना युधि-ष्ठिरेण क इव नाम परो न पराजितः सर्वानपि राज्ञः पराजित्य तेभ्यः करो गृहीत इत्यर्थः। तत इति तृतीयायास्तसिः। द्रुतविलम्बितं वृत्तम्, 'द्रुत-विलम्बितमाह नभौ भरौ' इति लक्षणात् (छन्दोमञ्जरी द्वितीयस्तवकः) ॥११॥

आप्राच्यादिति। जह्नुकन्यायाः गङ्गायाः जलभरेण प्रवाहेण जनित आडम्बरः संरम्भः तरङ्गचापल्यमिति यावत् यस्य तस्मात्। "आडम्बरन्तु संरम्भे बृंहिते तूर्य्यनिस्वने" इति हेमचन्द्रः। प्राच्यात् पूर्वदिग्वर्त्तिनोऽम्बुराशेः समुद्रात् आ प्राच्यसमुद्रपर्यन्ता भूःपृथिवी तं दशरथम् उदजुषत सिषेवे। तौदादिकस्य जुषधातोर्लङ्रूपम्। यद्यपि दक्षिणसमुद्र एव जाह्नवी सङ्गता न पूर्वसमुद्रे तथापि तत्सङ्गमस्य पूर्वसमुद्रनैकट्यादेवमुक्तं, तथा प्रत्यग्रोऽभि-नवो यश्चैत्रानिलः चैत्रमासीयानिलः दाक्षिणात्यानिल इत्यर्थः तेन ललिता-श्चलिता या लतास्तासां स्पन्दश्चलनं विद्यते यत्र तस्माच्चन्दनाद्रेर्मलयाचला-दाच भूस्तम् उदजुषत। तथा लक्ष्मीपतिना कृष्णेन रचितस्य रचयिष्यमाण-स्येत्यर्थः निजावासस्य मुद्रा परिस्थितिर्यत्र तस्मात् भविष्यद्द्वारवतीपुरो-पलक्षितादित्यर्थः तथा पश्चिमदिग्वर्त्तिनः समुद्राच्च आ तत्पर्यन्ता च

कुमारशक्त्या करदीकृतायां
क्षितावपश्यन् स्वभुजेन साध्यम्।
अजातशत्रुर्नियमेन राजा
यज्ञैर्दिवं जेतुमुवाह दीक्षाम् ॥१३॥

भूस्तम् उदजुषत। दशरथराज्यसमये द्वारकाया अजननात् रचितेति आशंसायां भूतसामान्यविहिताश्चेति भविष्यति क्तप्रत्ययः। तथा स्वः स्वर्गस्य सोदरेभ्यः सदृशेभ्यः उत्तरेभ्यः कुरुभ्यः सुमेरोरुत्तरदिग्वर्त्तिकुरुवर्षेभ्यश्च आ तत्पर्यन्ता भूस्तम् उदजुषत अत्र पक्षे भूपदं भूस्थितराजसमूहपरम् इत्थं चतुःसीमावच्छिन्नभूमिस्थिता राजानः सर्वेऽपि तच्छासनमनुमान्य तदीयाशां न जगृहुरित्यर्थः। अत्राभिविधावाङ् सीमाभिव्याप्त्योराङिति आरादादित्वात् आरादार्थैरिति तद्योगे सर्वत्र पञ्चमी।

पक्षे तं युधिष्ठिरमित्येव विशेषः युधिष्ठिरः सर्वां पृथिवीं वशीकृत्य करं जग्राहेति भावः। स्रग्धरावृत्तमिदम्। "म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धराकीर्तितेयम्" इति लक्षणात्, छन्दोमञ्जरी २य स्तवकः ॥ १२ ॥

कुमारेति। अजातः शत्रुर्यस्य स राजा दशरथ कुमाराणाम् अश्ववारसैन्यानां शक्त्या बलेन करदीकृतायां करं राजग्राह्यभागं ददातीति करदा अकरदा करदाकृता इति करदीकृता अभूततद्भावे च्विः तथाविधायां क्षितौ "कुमारः स्यात्शुके स्कन्दे युवराजेऽश्ववारके" इति मेदिनी। स्वभुजेन निजबाहुबलेन साध्यं कर्तव्यम् अपश्यन् निजभुजसाध्यस्य ससैन्यसाधनान्निश्चिन्तः सन्नित्यर्थः यज्ञैरश्वमेधादिभिर्दिवं स्वर्गं जेतुं नियमेनयज्ञविध्युक्तनियमेन दीक्षाम् उवाह भेजे अश्वमेधयज्ञे दीक्षितो बभूवेत्यर्थः। कुमारस्य रामस्य शक्त्येति व्याख्यानमसङ्गतं तदानीं रामाद्यनुत्पत्तेः॥

पक्षे अजातशत्रुर्युधिष्ठिरोराजा कुमाराणां युवराजानां भीमादीनां शक्त्या करदीकृतायां सर्वतोगृहीतकरायां क्षितौ स्वभुजेन साध्यम् अपश्यन् राजसूयाङ्गं सर्वतः करग्रहणं भ्रातृभिः प्रतिनिधिभिर्निष्पादयन्नित्यर्थः यज्ञै राजसूयाख्यैर्दिवं जेतुं पितुः सुचिरमिन्द्रलोकवासं सम्पादयितुम्। राजसूयस्य

विधिमनुचरन् प्राग्वंशस्थस्तथा स महीपति-
र्व्यतनुत हविर्धाराव‍ृष्टिं त्रिपिष्टपतुष्टये।
सलिलममलं काले काले यथा विसृजन्नपि
ध्रुवमनृणतां प्राप्तो नाद्याप्यमुष्य पुरन्दरः॥१४॥

स तर्पयामास दिवं हविर्भि-
र्द्विजेन्द्रमुख्यानपि दक्षिणाभिः।
वसुप्रदानैर्वसुधामशेषां
यशोभिरुच्चैर्भुवनानि सप्त॥१५॥

सर्वजनेभ्यः प्राधान्यात् यज्ञैरिति गौरवे बहुवचनम्। दीक्षाम् उवाह राजसूये दीक्षितो बभूव॥ १३॥

विधिमिति। विधिं यथोक्तविधानम् अनुचरन्ननुगच्छन् यथाविधानानुसारीत्यर्थः स महीपतिर्दशरथः पक्षे युधिष्ठिरश्च प्राग्वंशोनामहवनीयवत्त्वधिकरणगृहात् पूर्वभागवर्त्तिसदस्ययजमानादिस्थित्यर्थं गृहम्। "प्राग्वंशः प्राग्हविर्गेहात्" इत्यमरः। तत्र तिष्ठतीति प्राग्वंशस्थः सन् त्रिपिष्टपानां देवानां सन्तोषाय स्वर्गवाचकस्य त्रिपिष्टपशब्दस्य देवेषु लक्षणा हविर्धाराया वृष्टिं त्यागम् अथच वर्षणं तथा व्यतनुत विस्तारयामास यथा पुरन्दर इन्द्रः काले काले यथासमयम् अमलं स्वच्छं सलिलं विसृजन्नपि वर्षन्नपि मर्त्यलोके इति शेषः ध्रुवम् अद्यापि अमुष्य दशरथस्य पक्षे युधिष्ठिरस्य अनृणतां निष्कृयं न प्राप्तः ध्रुवमुत्प्रेक्षायाम् एकदा तस्य महीपतेर्हविर्धारावृष्टिमुपयुज्य तन्निष्क्रयार्थमिवाद्यापि पुरन्दरो जलं वर्षतीत्युत्प्रेक्षा तयाच हविर्धारावृष्टेरभिप्रभूतत्वं ध्वन्यते। अथच हविर्वृष्टिं सकृदनुभूय प्रतिदानतया तन्निकृष्टस्य जलस्य असकृद्वर्षणं युज्यते। हरिणीवृत्तमिदं "नसमरसलागः षड्वेदैर्हयैर्हरिणीमता" इतिलक्षणात्॥ १४॥

स इति। स दशरथः पक्षे युधिष्ठिरश्च हविर्भिर्हव्यैर्दिवं स्वर्गं लक्षणया स्वर्गीयान् देवानित्यर्थः तर्पयामास अप्रीणयत् तथा द्विजेन्द्रमुख्यानपि

निष्पृहः स्वशरीरेऽपि तथानर्च्च स ऋत्विजः।
यथा ते धनसम्पत्त्या कुबेरमवमेनिरे ॥१६॥

आराधितस्तेन मखे पुरस्ता-
न्मनुष्यमूर्त्त्या विहितावतारः।
जगत्त्रयस्याशिशुपालकत्वं
समादधे स्वेन बलेन विष्णुः ॥१७॥

ब्राह्मणोत्तमानपि ऋत्विगादीनित्यर्थः दक्षिणाभिस्तर्पयामास तथा अशेषां सर्वां वसुधां वसुप्रदानैर्धनदानैस्तर्पयामास तथा सप्त भुवनानि भूरादीनि उच्चैरुन्नतैर्यशोभिस्तर्पयामास सर्वसन्तोषजनकस्तस्य यज्ञ आसीदित्यर्थः ॥ १५ ॥

निष्पृह इति। स्वस्य शरीरेऽपि निष्पृहः निरभिलाषः याचकोपस्थितौ अतिप्रेमास्पदं निजशरीरमपि त्यक्तुं समर्थ इत्यर्थः स दशरथः पक्षे युधिष्ठिरश्च ऋत्विजो याज्ञिकान् तथा आनर्च्च दक्षिणादिभिः पूजयामास यथा ते ऋत्विजः धनसम्पत्त्या धनसमृद्ध्या ततोलब्धयेतिशेषः कुबेरं धनदमपि अवमेनिरे धनिनामस्माकं कतमः कुबेर इति अवजानन्तिस्म अतिमानिनस्ते जाता इत्यर्थः। अत्र कुबेरावज्ञाया असम्बन्धेऽपि तत् सम्बन्धकल्पनात् असम्बन्धे सम्बन्धरूपातिशयोक्तिरलङ्कारः ॥ १६ ॥

आराधित इति। पुरस्तात् पूर्वं मखे यज्ञे तेन दशरथेन आराधितः पूजितोविष्णुरश्वमेधस्य विष्णुदेवतत्वादिति भावः मनुष्यमूर्त्त्या रामादिमूर्त्त्या विहितावतारः सन् स्वेन बलेन निजया अलौकिकशक्तया आशिशु बालकपर्यन्तस्यापि जगत्त्रयस्य पालकत्वं रक्षितृत्वं समादधे जग्राह एतदश्वमेधजन्यपुण्येनैव भगवान् विष्णुः ऋष्यशृङ्गकृतयज्ञचरावनुप्रविश्य रामादिरूपेणावतीर्य जगत्त्रयं पालयामासेत्यर्थः आशिश्विति अव्ययीभावनिष्पन्नं जगत्त्रयविशेषणं शम्बूकशिरश्छेदेन ब्राह्मणबालकस्य प्रत्युज्जीवनात्तथोक्तम्।

पक्षे मनुष्यमूर्त्त्या वासुदेवरूपेण विहितावतारः यदुवंशेऽवतीर्णोविष्णुः कृष्णः तेन युधिष्ठिरेण भीष्माद्यनुमतेनेति शेषः मखे राजसूययज्ञे पुरस्तात् इतरनृपतिपूजनात् प्राक् आराधितः अर्घादिना पूजितः सन् स्वेन बलेन

मखावसाने मघवत्समानो
यथोचितं योजितमानपूजान्।
विशांपतिर्भूमिपतीन् विसृज्य
शान्तोपसर्गामवनिं शशास ॥१८॥

तथा भूलोकचन्द्रस्य समृद्धिरतिवासवा।
ज्योत्स्नेव चक्रवाकाणामासीद्दुःखाय दुर्हृदाम् ॥१९॥

जगत्त्रयस्य अशिशुपालकत्वं नास्ति शिशुपालः शिशुपालनामा राजा यत्र तदशिशुपालकम्। अकृतसमासान्ताद्वेति ऋदादित्वात् कः तस्य भावस्तत्त्वं तत् समादधे चकार प्रथमं युधिष्ठिरकृतमाराधनमसहमानं निन्दन्तञ्च शिशुपालं कृष्णश्चक्रेण चिच्छेदेत्यर्थः ॥ १७ ॥

मखेति। मघवता इन्द्रेण समानस्तुल्यः विशां मनुष्याणां पतिर्दशरथः पक्षे युधिष्ठिरश्च। "विट्पुमान् मनुजे वैश्ये" इति मेदिनी। मखस्याश्वमेधस्य पक्षे राजसूयस्य अवसाने अन्ते यथोचितं यथायोग्यं योजिते कृते मानश्चित्तोन्नतिश्च पूजा च ते येषां यद्वा योजिता मानाय सम्मानाय पूजा येषां तान् भूमिपतीन् राज्ञो विसृज्य स्वस्वविषयान् प्रस्थाप्य शान्तो निवृत्त उपसर्ग उपद्रवो यत्र ताम्। "उपसर्ग उपद्रवे। प्रादौ च रोगभेदे च" इति हेमचन्द्रः। अवनिं पृथिवीं शशास पालितवान् ॥ १८ ॥

तथेति। भूलोकस्य आह्लादकत्वाच्चन्द्र इव भूलोकचन्द्रस्तस्य दशरथस्य पक्षे युधिष्ठिरस्य अतिवासवा वासवमिन्द्रमतिक्रान्ता इन्द्रसमृद्धेरप्यधिकेत्यर्थः तथा तादृशी समृद्धिः सम्पत्तिः चक्रवाकाणां निशाविरहिपक्षिविशेषाणां ज्योत्स्ना कौमुदीव दुर्हृदां द्विषतां दुःखाय आसीत्। "द्विषद्द्वेषणदुर्हृद" इत्यमरः। अत्र समृद्धौ ज्योत्स्नासाम्यात् यथा शीतलापि ज्योत्स्ना चक्रवाकाणां दुःखाय जायते तथा परप्रयोजनैकफलापि तस्य समृद्धिः शत्रूणां दुःखाय जातेत्यर्थः अतएव राज्ञि चन्द्रत्वारोपो युज्यते तेनात्र रूपकोपमयोरङ्गाङ्गित्वेन सङ्करः ॥ १९ ॥

अतर्क्ये कृतपातस्य पयसीव पराभवे ।
तद्विपक्षजनस्याभूत् हृदि चिन्तामयोज्वरः ॥२०॥
वर्त्तमानो वयस्यन्ते प्रज्ञादृगथ भूपतिः ।
ज्येष्ठे निजसुते लक्ष्मीमाधातुं मतिमादधे ॥२१॥

अतर्क्य इति । तद्विपक्षजनस्य दशरथशत्रुजनस्य हृदि चिन्तामयः कुत्र गन्तव्यं कुत्र वा स्थातव्यमित्यादिभावनारूपोज्वरः सन्तापोऽभूत् किम्भूतस्य अतर्क्ये तर्कयितुमशक्ये पयसि जल इव पराभवे धर्षणायां कृतपातस्य कृतमज्जनस्य कः पराभवोऽस्माकं विधास्यते इति अतर्कणीयं पराभवं चिन्तयमानस्येत्यर्थः यथा कुम्भिकादिभिराच्छन्नतया अतर्क्ये अपकृष्टे पयसि कृतपातस्य जनस्य ज्वरोभवति तथेत्युपमा ।

पक्षे मयदानवकौशलात् अतर्क्ये पयस्त्वेन निश्चेतुमशक्ये स्थलत्वेन निश्चिते इत्यर्थः पराभवे इव भीमाद्युपहासजननात् साक्षात् मूर्त्तिमत्पराभवे पयसि मयनिर्म्मितसभाधिष्ठितस्य कस्यचित् सरसोजले कृतपातस्य पतितस्य तद्विपक्षजनस्य युधिष्ठिरशत्रुजनस्य दुर्योधनस्य हृदि कथमस्य श्रियं ग्रहीष्यामीति चिन्तामयोज्वरोऽभूत् मयदानवकौशलेन जले स्थलभ्रान्त्या पतितोदुर्योधनो भीमेनोपहसितः पराभूतश्चिन्तां प्रापेत्यर्थः । अत्र उत्प्रेक्षायामिवशब्दः उपमावाचकस्योपमानोत्तरत्ववत् तस्य उत्प्रेक्षणीयवाचकोत्तरत्वनियमाभावादुत्प्रेक्षणीयवाचकपराभवपदस्य प्राङ्निवेशेऽपि न क्षतिः तेनात्र पूर्वार्द्धे उत्प्रेक्षालङ्कारः ॥ २० ॥

इत्थं प्रासङ्गिकमुक्त्वा प्रकृतं प्रस्तौति । वर्त्तमान इति । अथानन्तरम् अन्ते चरमे वार्द्धके इत्यर्थः वयसि वर्त्तमानः प्रज्ञया बुद्ध्या पश्यतीति प्रज्ञादृक् सदसद्विवेचक इत्यर्थः भूपतिर्दशरथः ज्येष्ठे निजसुते रामे लक्ष्मीं राज्यलक्ष्मीम् आधातुम् अर्पयितुं रामाय राज्यं दातुमित्यर्थः मतिम् आदधे निश्चयं चकार । अस्मिन् पक्षे रामाय राज्यदाननिश्चयं प्रति अन्ते वयसि वर्त्तमानत्वस्य प्रज्ञादृक्त्वस्य च हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ।

पक्षे अथ पराभूतस्य दुर्योधनस्यागमनानन्तरम् अन्ते वयसि वर्तमानः वृद्धः प्रज्ञैव दृक् चक्षुर्यस्य सः अन्ध इत्यर्थः भूपतिर्धृतराष्ट्रः ज्येष्ठे निजसुते दुर्योधने

अभिरामं प्रवृत्तापि कुलज्येष्ठमपोह्य तम्।
पृथुलाभरतं लक्ष्मीर्दुर्योधनमियेष सा ॥२२॥
सुधीरसौ बलोद्योगाद्राजा देवनतः श्रियम्।
धर्मपुत्रे स्थिरां व्याजैर्विना कर्त्तुं मनो दधे ॥२३॥

लक्ष्मीमाधातुं येन केनापि छलादिना युधिष्ठिरादाच्छिद्य दुर्योधनाय संपूर्णराज्यलक्ष्मीं दातुमित्यर्थः मतिम् आदधे निश्चिकाय इत्यर्थः ॥२१॥

अभिराममिति। अभिरामं रामं लक्ष्मीकृत्य प्रवृत्तापि गन्तुकामापि रामाय दित्सितापीत्यर्थः पृथुला महती सा लक्ष्मीः राज्यलक्ष्मीः कुलजेष्ठं गोत्रजेष्ठं तं रामम् अपोह्य परित्यज्य दुर्योधनं शत्रुभिर्दुःखेन योधनीयं भरतं भरतनामकं दशरथपुत्रम् इयेष अभिललाष। रामं वञ्चयित्वा भरताय राज्यं देयमिति कैकयी चिन्तयामासेत्यर्थः। अभिराममिति लक्षणेऽभिप्रतिपर्यनव इति द्वादित्वादभियोगे द्वितीया।

पक्षे प्रवृत्तापि युधिष्ठिरे वर्तमानापि सा लक्ष्मीः अभिरामं नृपगुणसामग्र्यसम्बन्धात् मनोज्ञं कुलज्येष्ठं तं युधिष्ठिरम् अपोह्य पृथौ महति लाभे रतं स्वराज्ये सत्यपि अधिकं युधिष्ठिरराज्यं लब्धुमनस्कं दुर्योधनम् इयेष कियत्कालं दुर्योधने वर्तितुमभिललाषेत्यर्थः चपलाहि लक्ष्मीर्नैकत्र चिरं तिष्ठतीति भावः ॥ २२ ॥

सु इति। सुधीः सुबुद्धिः तथा देवनतः देवेषु प्रणतः धार्मिक इत्यर्थः असौ राजा दशरथः बलानां सैन्यानाम् उद्योगात् रक्षासम्बन्धात् स्थिरां निश्चलां शत्रुभिरनतिक्रमणीयामित्यर्थः श्रियं राज्यलक्ष्मीं धर्मपुत्रे धर्मप्रधाने पुत्रे रामे व्याजैः कपटैर्विना कर्तुं निष्कपटं रामाय राज्यं दातुमित्यर्थः मनो दधे इयेष। अत्र रामाय राज्यदानं प्रति सुधीत्वस्य देवनतस्य च हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः।

पक्षे राजा धृतराष्ट्रो दुर्योधनो वा धर्मपुत्रे युधिष्ठिरे स्थिरां स्थिरतया वर्तमानां श्रियं राज्यलक्ष्मीं सुधीरः देवनचतुरो यः सौबलः सुबलनृपतनयः शकुनिस्तस्योद्योगात् प्रयत्नात् व्याजैश्छलैर्देवनतः पाशकक्रीडनात् विनाकर्तुम्

भरतज्यायसो दीप्ता दायादजननीतया।
द्यूतकेल्या नलस्येव लक्ष्मीर्मन्थरया हृता ॥२४॥
दुःशासनावलेपेन भरतानिष्टकारिणा।
तस्य लक्ष्मीविपक्षेण कृष्टा कान्ता कचेष्विव ॥२५॥

अपाकर्त्तुमपहर्त्तुमित्यर्थः मनोदधे निश्चिकाय युधिष्ठिरस्य राज्यापहरणार्थं शकुनिना छलद्युतं प्रवर्तयितुं मन्त्रयामासेत्यर्थः ॥ २३ ॥

भरतेति। भरतस्य ज्यायान् ज्येष्ठोरामस्तस्य दीप्ता उज्ज्वला लक्ष्मीः पित्रा दास्यमाना राज्यलक्ष्मीः दायादस्य सपिण्डस्य भरतस्येत्यर्थः जननीं कैकेयीम् इतया प्राप्तया तदर्थमेव कैकेयीसमीपं गतयेत्यर्थः मन्थरया कैकेयीपरिचारिकया द्यूतकेल्या द्यूतक्रीड़या नलस्येव नैषधस्येव हृता हृत्वा भरताय दापिता यथा द्यूतकेल्या नलस्य लक्ष्मीर्हृता तथेत्यर्थः मन्थरा किल रामस्य राज्यलाभे हृष्यन्तीं कैकेयीमुपसृत्य किमिति शोचनीये सपत्नीतनयराज्यलाभे हृष्यसीत्यादिना प्रतिकूलचित्तां तां विधाय तद्द्वारा पूर्वदत्तवरद्वयदानमुद्भाव्य भरतस्य राज्यं रामस्य वनगमनञ्च राजानमङ्गीकारयन्ती रामस्य राज्यं जहारेति रामायणकथा।

पक्षे दायादजनेन ज्ञातिजनेन दुर्योधनादिना नीतया प्रापितया कारितयेत्यर्थः मन्थरया मन्थोमन्थनं विलोड़नम् उपताप इति यावत् तं राति ददातीति सा तथा तया क्लेशप्रदयेत्यर्थः यद्वा मन्थरया वक्रया सकपटयेत्यर्थः। "मन्थरः कोषफलयोर्बाधमन्थानयोः पुमान् कुसुम्भां न द्वयोर्मन्दे पृथौ वक्रेऽभिधेयवत्" इति मेदिनी। द्यूतकेल्या शकुनिकृतया द्यूतक्रीड़या नलस्येव निषधाधिपतेरिव भरतज्यायसो भरतकुलज्येष्ठस्य युधिष्ठिरस्य दीप्ता लक्ष्मीः राज्यं हृता। द्यूतकेल्येति कर्तरि तृतीया। उभयत्राप्युपमालङ्कारः ॥२४॥

दुःशासनेति। भरतानिष्टकारिणा भरतस्य स्वपुत्त्रस्य राज्यप्राप्तिरूपम् अनिष्टम् इष्टवद्भासमानमपि पितृमरणादिहेतुत्वात् वस्तुतोऽनिष्टं यद्वा सति ज्येष्ठे रामे ग्रहणानौचित्यात् तद्रूपम् अनीप्सितं करोतीति तेन दुःशासनावलेपेन दुःशासनो दुरपनेयो योऽवलेपः पतिप्रेमास्पदत्वगर्वस्तेन हेतुना यद्वा

नैव सभ्या न गुरवो न मित्रज्ञातिबान्धवाः।
तं निवारयितुं शेकुः क्रियमाणं महानयम् ॥२६॥
गुरुभिः कल्पितं सोऽथ वत्सरादाचतुर्दशात्।
आरण्यकव्रतं धीरः सानुजः प्रत्यपद्यत ॥२७॥

दुर्निन्दितं यच्छासनं मन्थराकृतप्रबोधनं तदवलेपेन तज्जन्यगर्वेण हेतुना विपक्षेण कैकेयीरूपेण शत्रुणा कर्त्ता तस्य रामस्य लक्ष्मीः कचेषु कान्तेव कृष्टा नीता उपमया बलादृगृहीतेत्यर्थः।

पक्षे भरतस्य भरतवंशस्य अनिष्टकारिणा विनाशहेतुत्वादशुभकारिणा विपक्षेण शत्रुणा दुःशासनस्य दुर्य्योधनभ्रातुरवलेपेन कृदभिहितभावत्वात् अवलिप्तदुःशासनेनेत्यर्थः दुर्य्योधनाज्ञप्तेनेति शेषः तस्य युधिष्ठिरस्य लक्ष्मीः साक्षाल्लक्ष्मीरूपा कान्ता द्रौपदी कचेषु केशेषु कृष्टा केशेष्वाकृष्य सभायामानीतेत्यर्थः इवेति वाक्यपूरणे अवधारणे वा कचेष्वेवाकृष्यानीता नतु सामवादादिनेत्यर्थः। "अथेव चौपम्ये नियोगे वाक्यपूरणे च" इति मेदिनी ॥२५॥

नैवेति। क्रियमाणं कैकेय्या पक्षे दुर्य्योधनेन विधीयमानं तं रामस्य पक्षे युधिष्ठिरस्य राजभ्रंशनरूपं महान्तमनयं दुर्नीतिं निवारयितुं सभ्याः सभासदो नैव शेकुः तथा गुरवो वशिष्ठादयः पक्षे द्रोणादयः न शेकुः तथा मित्राणि सुहृदः ज्ञातयः सगोत्राः बान्धवाः आत्मपितृमातृसम्बन्धत्वेन त्रिविधा स्तेषां द्वन्द्वः ते च न शेकुः ॥२६॥

गुरुभिरिति। धीरः सुबुद्धिः स रामः अथानन्तरं गुरुभिर्दशरथेन कैकेयीवरदानवशीकृतेनेत्यर्थः गौरवाद्बहुवचनं कल्पितं निरूपितम् आचतुर्दशात् वत्सरात् चतुर्दशसंख्यापूरकरूपवत्सरपर्य्यन्तमभिव्याप्य। अभिविधावाङ्। आरण्यकानां अरण्यवासिमुनीनां व्रतं जटावल्कलधारणादिपूर्वकवनवासलक्षणं नियमं सानुजः सलक्ष्मणः सन् प्रत्यपद्यत अङ्गीचकार। अत्रारण्यकव्रतप्रतिपत्तिं प्रति गुरुकल्पितत्वस्य धीरत्वस्य च हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः।

पक्षे धीरः स युधिष्ठिरः सानुजः भीमादिसहितः सन् गुरुभिर्भीष्मद्रोणादिभिः कल्पितम् आचतुर्दशाद्वत्सरात् अत्र मर्य्यादायामाङ् चतुर्दशवत्सरं

सराज्यमैन्द्रेण पदेन तुल्यं
गुरुप्रियार्थं तृणवद्विहाय ।
अरण्यवासाय धृतप्रतिज्ञः
प्रतस्थिवान् सावरजः सदारः ॥२८॥

अपोढरत्नाभरणं रथेन
निर्यान्तमेनं नगरान्निरीक्ष्य ।
विमोक्तुमश्रूणि चिरं जनाना-
मासीन्नपर्याप्तमिवाक्षियुग्मम् ॥२९॥

मर्यादीकृत्य द्वादशवत्सरान् यत्र कुत्रचिद्वने वासः तत एकं वत्सरम् अज्ञात-वासः इति त्रयोदशवत्सरपर्य्यन्तमित्यर्थः आरण्यकव्रतं प्रत्यपद्यत ॥ २७ ॥

स इति । स रामः गुरुप्रियार्थं गुरोर्दशरथस्य यत्प्रियं सत्यवादित्वरक्षण-रूपं तदर्थम् ऐन्द्रेण इन्द्रसम्बन्धिना पदेनाधिपत्येन स्वाराज्येनेत्यर्थः तुल्यं समानम् । तुल्यार्थैरतुलोपमेर्वेति तृतीया । राज्यं तृणवत्तृणमिव विहाय अक्लेशं परित्यज्येत्यर्थः अरण्यवासाय वनवासाय चतुर्दश वत्सरानिति शेषः धृतप्रतिज्ञः कृताङ्गीकारः सन् सावरजः अवरजेन कनिष्ठेन लक्ष्मणेन सहितः तथा सदारः सीतया सहितः सन् प्रतस्थिवान् वनमिति शेषः ।

पक्षे स युधिष्ठिरः गुरोर्धृतराष्ट्रस्य प्रियार्थं सावरजः भीमादिसहितः सदारः द्रौपदीसहितः । शेषं तुल्यम् ॥ २८ ॥

अपोढेति । अपोढानि त्यक्तानि रत्नाभरणानि येन तं तथा रथेन नगरा-दयोध्यायाः पक्षे हस्तिनायाः निर्यान्तं निर्गच्छन्तमेनं रामं पक्षे युधिष्ठिरं निरीक्ष्य जनानां पौराणामक्षियुग्मम् नयनद्वयं चिरम् अश्रूणि विमोक्तुं पर्य्याप्त-मतिसमर्थं नासीदिव चिरमश्रुत्यागसमाप्तिसमर्थं न बभूवेव तथाविधं तं दृष्ट्वा पौराश्चिरमत्यन्तं रुरुदुरित्यर्थः ॥ २९ ॥

राजेन्द्रवेशापगमेऽपि नैनं
सौभाग्यलक्ष्मीः श्लथयाम्बभूव।
सुरासुरैः स्वीकृतरत्नराशि-
स्तथापि रत्नाकर एव सिन्धुः ॥३०॥

स्थितेऽप्युदग्रे पुरि राजवंश्ये
ज्यायांसमेनं न जहौ जनौघः।
द्वारोपकण्ठस्थितशङ्करोऽपि
वाणः किमासीद्भुवनस्य पूज्यः ॥३१॥

राजेन्द्रेति। राजेन्द्रस्य चक्रवर्तिनः यो वेशोमुकुटाद्यलङ्कारस्तस्य अपगमेऽपि परित्यागेऽपि सौभाग्यलक्ष्मीः स्वाभाविकसौन्दर्य्यशोभा भाविसौभाग्यव्यञ्जिका शोभा वा एनं रामं पक्षे युधिष्ठिरं न श्लथयाम्बभूव तत्याज तथाहि सिन्धुः समुद्रः सुरासुरैः सुरैरसुरैश्च। नित्यविरोधित्वाभावान्नैकवद्भावः। स्वीकृतो-गृहीतोरत्नराशिः कौस्तुभादिरत्नसमूहो यस्य स तथा तथापि रत्नाकर एव रत्नानामाकरत्वात् सरत्न एवेत्यर्थः। अत्र सौभाग्यलक्ष्मीयुक्तत्वरत्नाकरत्व-योर्व्विम्बतिविम्बभावे पर्य्यवसानाद्दृष्टान्तालङ्कारः। "दृष्टान्तः पुनरेतेषां सर्व्वेषां प्रतिविम्बनम्" इति लक्षणात् ॥ ३० ॥

स्थित इति। उदग्रे उन्नते गुणवतीत्यर्थः राजवंश्ये राजतनये भरते पक्षे दुर्य्योधने पुरि अयोध्यायां पक्षे हस्तिनायां स्थितेऽपि भूपतया वर्त्तमाने सत्यपि जनौघः पौरसमूहः ज्यायांसं गुणवयसोर्ज्येष्ठम् एनं रामं पक्षे युधि-ष्ठिरं न जहौ न तत्याज कियद्दूरमेनमनुजगामेत्यर्थः न केवलमुदग्रत्वं पौरानु-रागजनकं किन्तु ज्येष्ठत्वादिना यथार्थाधिकारित्वमपीति भावः दृष्टान्तेन द्रढ़यति द्वारोपकण्ठे पुरद्वारसमीपे स्थितः शङ्करः शिवो यस्य सतथा तादृशोऽपि वाणोवाणासुरः किं भुवनस्य देवादि-जीव-वृन्दस्य पूज्यो मान्य आसीत् अपि तु नैव असुरत्वादिति भावः दृष्टान्तालङ्कारः। अत्र रामायणपक्षे तदानी-

राष्ट्रादन्तःकलहकलुषान्मथ्यमानादिवाब्धे
स्तन्वी बाला किशलयमृदुर्निर्गताप्युज्ज्वलाङ्गी ।
भर्त्तुः प्रेम्णा वनभुवमपि प्रस्थिता राजकन्या
शम्भोर्जूटं नवशशिकला संश्रयन्तीव रेजे ॥३२॥

निरस्तमुक्ताभरणापि गेहा-
द्विनिर्गता सा निजयैव भासा ।
विद्योतयामास नरेन्द्रमार्गं
तडिल्लता मेघविनिःसृतेव ॥३३॥

मयोध्यायां भरतस्यानवस्थानेऽपि स्वामित्वसम्बन्धेन सद्भावनिश्चयात् पुरिस्थिते-ऽपीति कथनं नानुपपन्नमित्यवगन्तव्यम् ॥ ३१ ॥

राष्ट्रादिति । मथ्यमानात् देवासुरकृतमथनेन कलुषीकृतादब्धेः क्षीरो-दादिव अन्तःकलहेन अभ्यन्तरस्थविमनायमानप्रकृतिजनितविवादेन कलुषात् अप्रसन्नात् राष्ट्रात् राज्यात् निर्गता राजकन्या सीता पक्षे द्रौपदी । निर्गता-पीत्यत्र अपिपदं तात्पर्य्यवशात् तन्वीत्यादिविशेषणचतुष्टयेऽन्वेति । तन्वी क्षीणावयवापि बाला नवयौवनापि किशलयवत् मृदुः कोमलापि उज्ज्वलमङ्गं यस्याः सापि सर्वथा अन्तःपुरवासयोग्यापीत्यर्थः भर्तुर्वनं गच्छतः स्वामिनः प्रेम्णा स्नेहेन वनभुवमपि अतिभयदामरण्यभूमिमपि प्रस्थिता सती शम्भोः शिवस्य जूटं जटाम् । 'जूटोजटायाम्' इति शब्दरत्नावली । संश्रयन्ती भजमाना नवशशिकलेव नवचन्द्रखण्डमिव रेजे शुशुभे साध्वीनां भर्त्तनुगमनस्य न्याय्यत्वादितिभावः यथा मथ्यमानादब्धेर्निर्गत्य शम्भोर्जटामाश्रयन्ती नव-शशिकला राजते तथेत्यर्थः । श्रौतीयमुपमा । मन्दाक्रान्तावृत्तमिदं 'मन्दा-क्रान्ता जलधिषडगैर्म्भौनतौ ताद्गुरूचेत्' इति लक्षणात् ॥ ३२ ॥

निरस्तेति । गेहादन्तःपुराद्विनिर्गता सा सीता पक्षे द्रौपदी निरस्तानि परित्यक्तानि मुक्ताभरणानि मुक्ताप्रधानभूषणानि यया सा तथा तादृश्यपि

वाष्पाम्बुभिः क्षालितराजमार्गैः
सगद्गदं व्याहृतसाधुवादैः।
व्यलोकि सा पौरजनैरसूर्यं
पश्यापि मध्ये नगरं व्रजन्ती ॥३४॥

कृतानुयात्रान् सह मित्रबन्धुभि-
र्निवर्त्त्य भूयो नगराय नैगमान्।
सधर्मजन्मा निजकीर्त्तिनिर्मलां
सुरापगां प्राप सुमन्त्रसङ्गतः ॥३५॥

मेघाद्विनिःसृता तडिल्लतेव विद्युद्दामेव निजयैव स्वाभाविक्येव भासा कान्त्या नरेन्द्रमार्गं राजपथं विद्योतयामास शोभयाञ्चकार। उपमालङ्कारः ॥ ३३ ॥

वाष्पेति। वाष्पाम्बुभिरश्रुभिः करणैः क्षालितौ धौतौ राजमार्गौ यैस्ते तथा तैः अतिरुदद्भिरित्यर्थः वाष्पाम्बुजम्बालितराजमार्गैरिति क्वचित् पाठः तत्र जम्बालितः कर्दमित इत्यर्थः तथा सगद्गदं शोकाधिक्यादस्पष्टं यथा तथा व्याहृतः कथितः साधुवादः प्रशस्यतमासि या त्वमेवं विपत्कवलितमपि पतिमनुगच्छसीत्यादिरूपः प्रशंसालापो यैस्ते तथा तैः पौरजनैः असूर्यंपश्यापि सूर्यमपि द्रष्टुं नोचितापि सदा अन्तःपुर एव गोप्यापीत्यर्थः मध्येनगरं नगरस्य मध्ये व्रजन्ती सा सीता पक्षे द्रौपदी च व्यलोकि दृष्टा। असूर्यंपश्येति उग्रासूर्यदृश इति खशङ् नञर्थस्य क्रियान्वयित्वेनागमकत्वेऽपि समासोवैव-क्षिकः मध्येनगरमिति पारेमध्येषष्ठ्या वेत्यव्ययीभावनिपातः। अत्रासूर्यं-पश्यत्वेनोपश्लिष्टमन्तःपुरवासौचित्यं क्व नगरमध्यभ्रमणञ्च क्वेति विसदृशयो-र्घटनाद्विषमालङ्कारः। 'क्वचिद्यदतिवैधर्म्यान्न श्लेषोघटनामियात्' इत्यादि-लक्षणात् ॥ ३४ ॥

कृतेति। धर्मस्य जन्म यस्मात् सः धर्मप्रवर्तक इत्यर्थः स रामः मित्रैः सुहृद्भिर्बन्धुभिरात्मीयैश्च सह कृता अनुयात्रा अनुगमनं यैस्ते तथा तान् नैगमान् नगरवासिनः। "नैगमः स्यादुपनिषद्वणिजोर्नागरेऽपि च" इति

तां यज्ञभूमिप्रभवां पुरन्ध्री—
धुरं दधानां व्यसनाभिभूताम् ।
आश्वासयन्तीव सहंसवाणी
पस्पर्श गङ्गा लहरीसमीरैः ॥३६॥

र्विश्वः । नगराय नगरं गन्तुम् । तुङ्गभर्मात् कर्म्मणि इति चतुर्थी । भूयः पौनःपुन्येन निवर्त्य अनुरुध्य । इतःपरं तथाप्यपरित्यजतस्तान् तमसातीरे कृतैकरात्रिक्षेपः प्रत्यूष एवालक्ष्यगमनेन वञ्चयित्वेति रामायणैकवाक्यत्वादव-गन्तव्यम् । सुमन्त्रेण तन्नामसारथिना सङ्गतः सुमन्त्रोपनीतरथमारूढ़ः सन् निजकीर्त्तिनिर्म्मलां स्वकीर्त्तिवद्विशदां सुरापगां गङ्गां प्राप श्टङ्गवेरपुरसन्निधाने इतिशेषः ।

पक्षे स धर्मजन्मा धर्म्मतनयोयुधिष्ठिरः सुमन्त्रसङ्गतः पौरजनसहगमनं न श्रेय इति सुष्ठुमन्त्रणासहितः सन् नैगमान् भूयोनगराय निवर्त्य यूयं नगरमेव गच्छत तत्र मदात्मीयान् पालयत तेनैव मे परमा प्रीतिर्भवेदित्युक्त्वा विसर्ज्येत्यर्थः सुरापगां गङ्गां प्राप गङ्गातीरे प्रमाणाख्यवटवृक्षमूलं गत्वा तत्र तां रजनीं यापयामासेत्यर्थः । शेषं पूर्व्ववत् । अत्र स्वकीर्त्तिनिर्म्मलामित्यनेन प्रसिद्धोपमा-नभूतायाः सुरापगाया उपमेयत्वकल्पनात् प्रतीपालङ्कारः । "प्रसिद्धस्योपमान-स्योपमेयत्वप्रकल्पनम्" इत्यादि साहित्यदर्पणे दशमपरिच्छेदलक्षणात् ॥ ३५ ॥

तामिति । यज्ञभूमिर्यज्ञार्थं लाङ्गलकृष्टभूमिः पक्षे यज्ञकुण्डं प्रभव उत्पत्ति-स्थानं यस्याः सा तथा तां तथा पुरन्ध्रीणां सतीनां धुरं भारं पातिव्रत्यमित्यर्थः सतीनामग्रगण्यत्वं वा । "धूः स्त्री यानमुखे भारे" इति यादवः । दधानां सतीनामग्रे कीर्त्तनीयामित्यर्थः व्यसनेन विपदा अभिभूतां व्याकुलीकृताम् । "व्यसनं विपदि भ्रंशे दोषे कामजकोपजे" इत्यमरः । तां सीतां पक्षे द्रौपदीञ्च आश्वासयन्तीव । ईतौ शतृप्रत्ययः । आश्वासयितुमिवेत्यर्थः सहंसवाणी हंसवाण्या सह वर्तमाना गङ्गा लहरीसमीरैस्तरङ्गवातैः पस्पर्श अन्यापि व्यस-नाभिभूतां कामपि मधुरवचनाङ्गस्पर्शनाभ्यामाश्वासयति तेनात्र गङ्गाया-साश्वासनकर्त्तृव्यवहारप्रतीतेराश्वासयन्तीवेत्युत्प्रेक्षानुप्राणिता समासोक्ति-रलङ्कारः ॥ ३६ ॥

गुहानुबन्धाद्गहनं वनं सः
प्रविश्य चीरी जटिलो जटालैः।
समेयिवान् सावरजो मुनीन्द्रैः
सतां हि सङ्गो व्यसनार्णवे नौः ॥३७

वसन् शून्य इवारण्ये नगरे तद्गुरुर्जनः।
तद्वियोगपरिक्लेशात् श्रेयोमृत्युममन्यत ॥३८॥

गुहेति। चीरी परिहितचीरवसनः सावरजः सलक्ष्मणः स रामः गुहस्य निषादाधिपस्य अनुबन्धात्। यजगर्भत्वात्पञ्चमी। निषादाधिपसम्बन्धं प्राप्य शृङ्गवेरपुरसन्निधाने गुहेन सह एकरात्रमुषित्वेत्यर्थः जटिलः सन् गुहानीतेन न्यग्रोधक्षीरेण केशान् जटाविधायेत्यर्थः गहनं दुर्गमं वनं प्रविश्य। "गहनं विपिने दुर्गे गह्वरे कलिलेऽपि च" इति विश्वः। जटालैर्जटावद्भिर्मुनीन्द्रैः समेयिवान् सङ्गतो बभूव मुनीन्द्रैः समेत्य राज्यादिविरहदुःखं तत्याजेत्यर्थः उक्तमर्थं दृढ़यति हि यतः सतां साधूनां सङ्गः सन्निकर्षः व्यसनं विपदेव अर्णवो-दुस्तरत्वात् समुद्रस्तत्र नौः पोतः तत्पारप्रद इत्यर्थः। "व्यसनं विपदि भ्रंशे" इत्यमरः। अत्र समस्तवस्तुविषयसाङ्गरूपकपरिपुष्टः सामान्येन विशेषसमर्थन-रूपोऽर्थान्तरन्यासोऽलङ्कारः।

पक्षे सावरजः भीमाद्यनुजसहितः स युधिष्ठिरः गुहानुबन्धात् गुहा देव-खातविलम्। "देवखातविले गुहा" इत्यमरः। तत्सम्बन्धात् गहनं दुष्प्रवेशं वनं काम्यकमरण्यं प्रविश्य मुनीन्द्रैः समेयिवान् शेषं समानम् ॥ ३७ ॥

वसन्निति। तस्य रामस्य गुरुर्जनोदशरथः अरण्य इव शून्ये रामादिरहिते नगरे वसन् सन् तद्वियोगपरिक्लेशात् रामादिविरहजनितदुःखाधिक्याद्धेतोः श्रेयोमृत्युं तादृशदुःखानुभवप्रतिबन्धकत्वान्मङ्गलकरं मृत्युम् अमन्यत अनुबभूव ममारेत्यर्थः। अस्मिन् पक्षे श्रेयोमृत्युमेकं पदम् अन्यथा श्रेयांसमिति स्यात्।

पक्षे तेषां गुरुर्जनः कुन्ती तद्वियोगपरिक्लेशात् युधिष्ठिरादिविरहजनित-परिक्लेशमपेक्ष्य। यजगर्भत्वात् पञ्चमी। मृत्युं मरणं श्रेयः सुखम् अमन्यत मन्यतेस्म पुत्रविरहदुःखवज्जीवनापेक्षया मम मृत्युरपि वरमिति मन्यतेस्मेत्यर्थः।

तदाशुभरतेनाथ पश्चात्कृतनृपश्रिया।
कुलज्येष्ठो वने तिष्ठन् भेजे चत्तोचितक्रमम् ॥३९॥

उद्दामधीरतरलोभरतेन भीम-
सैनेन दूरमनुयातवता वनान्तम्।
रक्तप्रजामपि निजां नगरीमुपैतुं
स प्रार्थितोऽपि न मनः शिथिलीचकार ॥४०॥

अत्र श्रेयसोविधेयस्य नोद्देश्यलिङ्गाग्रहणं दोषायेति मन्तव्यम्। शेषं तुल्यम् ॥ ३८ ॥

तदिति। अथ रामस्य वनप्रवेशानन्तरं तदा यदा दशरथोमृतस्तस्मिन् काले भरतेन मातुलालयान्मन्त्रिभिरानीतेनेति शेषः चत्त्राणां चत्त्रियाणाम् उचितः क्रमोऽनुक्रमोयत्र तद्यथा स्यात्तथा। अयमेव चत्त्रियाणामुचितोऽनुक्रमः यत् ज्येष्ठएव राज्यं गृह्णाति अभावे कनिष्ठ इति। पश्चात्कृता तुच्छीकृता नृपश्रीराज्यलक्ष्मीर्येन स तथा तेन सता आशु शीघ्रं वने तिष्ठन् कुलज्येष्ठो-रामोभेजे प्राप्तः। कर्मणि लिट्। वनवासाद्रामं निवर्तयितुं तत्समीपं गतमित्यर्थः।

पक्षे अथ धृतराष्ट्रभर्त्सनानन्तरं शुभरतेन पाण्डवानां मङ्गलाशंसापरेण तथा पश्चात्कृता त्यक्ता नृपस्य धृतराष्ट्रस्य श्रीर्येन स तथा तेन चत्त्रां भुजिष्यातनयत्वात् चत्तृपदवाच्येन विदुरेण। 'चत्ता शूद्रो चत्त्रियजे प्रतीहारे च सारथौ। भुजिष्यातनयेऽपि स्यान्नियुक्तवेधसो पुमान्' इति मेदिनी। उचितः क्रमः क्रमणं गमनं यत्र क्रियायां तद्यथा स्यात्तथा वने काम्यके तिष्ठन् कुलज्येष्ठो युधिष्ठिरस्तदा भेजे हितं कथयन् धृतराष्ट्रनिराकृतोविदुरो युधिष्ठिरमभिजगामेत्यर्थः ॥ ३९ ॥

उद्दामेति। भीमा सेना यस्य स तथा तेन ससैन्येनेत्यर्थः तथा दूरं वनान्तं वनपर्यन्तं चित्रकूटपर्व्वतपर्यन्तमित्यर्थः अनुयातवता अनुगतवता भरतेन रक्तप्रजामपि अनुरक्तपौरामपि निजां नगरीं अयोध्याम् उपैतुं प्रत्यावर्तितुं प्रार्थितोऽपि स रामः मनः वनवासव्यवसायप्रवणं चित्तं न शिथिलीचकार न

**तं राजाज्ञां दधानोऽपि विपुलांसञ्जयस्थिरम्।**
**बलान्निवर्तयामास कथञ्चिद्विदुरं सुधीः ॥४१॥**

अथयाञ्चकार पितरं सत्यसन्धं कर्तुं राज्यं नैयेषेत्यर्थः किम्भूतः यत उद्दामा महती धीर्बुद्धिर्यस्य सः तथा अतरलोऽचञ्चलः अत्र मनसोऽशिथिलीकरणे-उद्दामादिविशेषणद्वयस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः।

पक्षे उद्दाम उद्रिक्तो धीरतरः स्थिरतरो यो लोभः समयमुल्लङ्घ्यापि राज्य जिघृक्षा तत्र रतेन भीमसेनेन वृकोदरेण नगरीं हस्तिनाम् उपेतुं बलेन दुर्योधनादीन् विनाश्य अधिकर्त्तुं प्रार्थितोऽपि विदुरसमीपे इति शेषः स युधिष्ठिरः मनोन शिथिलीचकार समयभङ्गजनितदुर्यशःसम्भावनया भीमाभिप्रायं न चकारेत्यर्थः। अन्यत् समानं। यद्यपि वनप्रवेशात् परं भीमस्येदृक् प्रार्थनं भारते न वर्णितं तथापि तन्नासङ्गतमिति न दूषणमावहतीति ध्येयम्। वसन्ततिलकं वृत्तम् ॥ ४० ॥

तमिति। राज्ञोदशरथस्य आज्ञां चतुर्दशवत्सरान् वनमधिवसेत्यनुमतिं दधानोऽपि पालयन्नेव। अपिरेवार्थे पोषणार्थोऽयं धाञ्धातुः। सुधीः सुबुद्धिः स रामः तं भरतं कथञ्चित् कथमपि बलान्निवर्तयामास हठेन नगरीं प्रत्यावर्तयत् पित्राज्ञापालनपरतन्त्रोऽहं न राज्यं करिष्यामि त्वं मत्पादुकेगृहीत्वा राज्यं कुरुष्वेत्यादिना कथमपि न्यवर्तयदित्यर्थः किम्भूतं विपुलावंसौ स्कन्धौ यस्य स तथा तं तथा जये शत्रुपराजये स्थिरं तथा विदुरं विद्वांसं विपुलांसत्वेन वीरत्वं जयस्थिरत्वेन अभीरुत्वं विदुरत्वेन नीत्यनुसारित्वञ्च भरतस्य सूचितं सर्वथा राज्यलक्षणयोग्यमित्यर्थः। विदुरमिति विदिभिदिच्छिदेरुर इति उरप्रत्ययः।

पक्षे राज्ञोधृतराष्ट्रस्य विपुलां गुर्वीम् आज्ञाम् अविलम्बितमेव विदुरमानयेति अनुमतिं दधानो धारयन् सुधीः सञ्जयः तन्नामा धृतराष्ट्रस्य दूतः। दधानोऽपीत्यत्र अपिर्भिन्नक्रमः स्थिरमित्यनेनान्वेति। स्थिरमपि युधिष्ठिरसमीप एव चिरं स्थास्यामीति स्थिरप्रतिज्ञमपि विदुरं विदुरनामकं धृतराष्ट्रस्य भ्रातरं मन्त्रिणञ्च कथञ्चिद्बलान्निवर्तयामास युधिष्ठिरसकाशात् हस्तिनापुरमानिनायेत्यर्थः। 'विदुरोनागरे धीरे कौरवायाञ्च मन्त्रिणि' इति विश्वः।

प्रभ्रंशं कथमपि लम्भितस्य दैवात्
सा भर्तुः समुपगमं समीक्षमाणा।
दायादं तदनु तदीयमेव लक्ष्मी-
र्नाकश्रीरिव नहुषं निषेवते स्म ॥४२॥

ते चित्रकूटाचलपादभाजां
मखश्रियालङ्कृतदण्डकानाम्।
क्रमेण भेजुः क्लमनाशनानि
तपस्विनामाश्रममण्डलानि ॥४३॥

सञ्जयस्थिरमित्यत्र सञ्जयात् परस्य विसर्गस्य कादियुक्ते शषसे लुग्वेत्यनेन लोपः ॥ ४१ ॥

प्रभ्रंशमिति। कथमपि दैवाददृष्टात् प्रभ्रंशं राज्यात् च्यवनं लम्भितस्य प्रापितस्य एकत्र कैकेयीवशंवदेन पित्रा अन्यत्र कपटद्यूतमुद्भावयता दुर्योधनेनेति शेषः भर्त्तुः स्वामिनो रामस्य पक्षे युधिष्ठिरस्य समुपगमं पुनः प्रत्यागमनं समीक्षमाणा प्रतीक्षमाणा लक्ष्मीः राज्यलक्ष्मीः तदनु वनप्रवेशात्परं तदीयमेव रामसम्बन्धिनमेव पक्षे युधिष्ठिरसम्बन्धिनमेव नत्वन्यं दायादं सपिण्डभ्रातरमित्यर्थः भरतं पक्षे दुर्योधनम्। "दायादस्तु भवेत्पुंसि सपिण्डे तनयेपि च" इति मेदिनी। नाकश्रीः स्वर्गलक्ष्मीर्नहुषं नृपविशेषमिव निषेवतेस्म शिश्रिये यथा ब्रह्मवध्याभयप्रच्छन्नस्येन्द्रस्यागमनं प्रतीक्षमाणा स्वर्गलक्ष्मीः कञ्चित्कालं नहुषं भेजे तथेत्यर्थः। अत्रोपमया भरते दुर्योधने वा राज्यलक्ष्मीर्नचिरं स्थास्यतीति ध्वन्यते अथच लक्ष्म्यां विषयभ्रष्टस्य पत्युरागमनं प्रतीक्षमाणायास्तत्कालमपरं पुरुषं भजन्त्यानार्य्याव्यवहारप्रतीतेः समासोक्तिरलङ्कारः। प्रहर्षणीवृत्तं यदाह भट्टकेदारः। 'म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षणीयमिति' ॥ ४२ ॥

त इति। ते रामादयः चित्रकूटाचलस्य चित्रकूटनामकपर्वतस्य पादभाजां प्रत्यन्तपर्वतवासिनाम्। "पादाः प्रत्यन्तपर्वताः" इत्यमरः। तथा मखश्रिया

**अवरोपितराज्येपि भर्तर्य्येकरसा यतः।**
**तेन निन्ये परां शोभां तद्वधूरनसूयया ॥४४॥**
**चणेन तेषां चणदाचरः क्वचि-**
**द्विराधतामारचयन् महायुधः।**

यज्ञसम्पदा अलङ्कृतदण्डकानां शोभितदण्डकारण्यानां तपस्विनां क्रमनाश्रनानि शुभद्दराणि आश्रममण्डलानि तपोवनसमूहान् क्रमेण भेजुः प्रापुः भरद्वाजोपदेशेन चित्रकूटं गत्वा अत्रिप्रभृतिमुनीनामाश्रमान् क्रमेण जग्मुरित्यर्थः।

पचे ते युधिष्ठिरादयः चित्राण्यद्भुतानि कूटानि शिखराणि येषां तादृशा ये अचलाः पर्वतास्तेषां पादभाजां प्रत्यन्तपर्वतवासिनाम्। "कूटोऽस्त्रीशिखरं शृङ्गम्" इत्यमरः। तथा मखश्रिया सततयज्ञानुष्ठानेन अलङ्कृतः शोभितः सुखेन गमित इत्यर्थः दण्डः कालोयैस्ते तथा तेषाम्। "दण्डोऽस्त्री लगुडे पुमान् व्यूहभेदे प्रकाण्डेऽश्वे कोणमन्थानयोरपि। सैन्ये काले मानभेदे चण्डांशोः पारिपार्श्वके" इति मेदिनी। मखश्रिया अलम् अत्यर्थं क्वताविहिता दण्डकाः काम्यकर्म्माणि यैस्तेषाम्। "दण्डकोदण्डकारण्ये काम्यकर्म्मणि च स्मृत इति शब्दार्णवः" इति केचित्। तपस्विनां क्रमनाश्रनानि आश्रममण्डलानि क्रमेण भेजुः॥ ४३॥

अवरोपितेति। तद्वधूस्तस्य रामस्य पत्नी सीता यतोयस्मात् अवरोपितराज्येऽपि त्यक्तराज्येऽपि भर्त्तरि स्वामिनि एकरसा अविच्छिन्नानुरागा अनुपाधिकप्रणयवतीत्यर्थः तेन हेतुना सा अनसूयया अत्रिमुनिपत्न्या परां शोभां निन्ये अङ्गरागादिनात्युत्कृष्टशोभां प्रापिता।

पचे तद्वधूर्द्रौपदी यतोऽवरोपितराज्येऽपि भर्त्तरि युधिष्ठिरे एकरसा अत्यनुरक्ता नतु विद्वेषिणीत्यर्थः तेन हेतुना अनसूयया द्वेषराहित्येन कर्त्र्या परां शोभां निन्ये सर्व्वास्वप्यवस्थासु स्त्रीणां भर्त्तनुरक्तत्वमेव परमा शोभेति भावः। अनसूययेति क्वचिदभावार्थकेनापि नञा तत्पुरुषः अत्र वादिनामविवादइत्यादिवत्॥ ४४॥

चणेनेति। क्वचिद्वनप्रदेशे सतां साधूनां मुनीनामित्यर्थः अव-

अरुन्धपन्थानमरुन्तुदः सतां
पुरा ग्रहाणामिव विन्ध्यभूधरः ॥४५॥
युद्धारब्धश्चण्डदोर्दण्डघातै-
र्भिन्दन् सन्धिं द्राग्विनिक्षिप्य भूमौ ।
संरम्भोद्यत्पांशुकिर्मीरमेनं
रक्षोनाथं राक्षसारिर्ममन्थ ॥४६॥

न्तुदोमर्मव्यथकोभवन् इत्यर्थः । तुदोविधुतिलारुष इति खश्प्रत्ययः नान्तद्विषदरुषामन्तलुक् चेति अरुष सलोपोमागमश्च । विराधेति नाम यस्य सविराधनामा क्षणदाचरो राक्षसः क्षणेन महायुधो महासंग्रामान् । युध्यतेर्भावे क्विप् । रचयन् कुर्वन् सन् पुरा पूर्वं ग्रहाणां सूर्यादीनां विन्ध्यभूधरोविन्ध्यपर्वतइव तेषां रामादीनां पन्थानम् अरुन्ध रुरोध ।

पक्षे महदायुधमस्त्रं यस्य स क्षणदाचरः किर्मीरनामा राक्षसः क्षणेन तेषां युधिष्ठिरादीनां विराधनां विशेषेण हिंसाम् आरचयन् सन् पन्थानम् अरुन्ध । शेषं समानम् । उपमालङ्कारः । उपेन्द्रवंशावृत्तम् ॥ ४५ ॥

युद्धेति । युद्धारब्धः आरब्धयुद्धः । आहितादिर्वाग्न्यादेरिति आरब्धस्य परभावः । राक्षसानामरिः शत्रूरामः राक्षसविनाशार्थमेव कृतावतार इत्यर्थः चण्डदोर्दण्डघातैः प्रचण्डबाहुदण्डप्रहारैर्न तु वाणाद्यस्त्रैः तस्याशस्त्र-वध्यत्वादिति भावः । सन्धिं तस्य अवयवसन्धानं भिन्दन् विदारयन् सन् द्राक् झटिति भूमौ निक्षिप्य अतएव संरम्भेण भूमियुद्धाडम्बरेण उद्यद्भिरुत्तिष्ठद्भिः पांशुभिर्धूलिभिः किर्मीरं कर्बुरवर्णम् एनं रक्षोनाथं राक्षसप्रधानं विराधं ममन्थ जघान हत्वा अवटे निचिक्षेपेत्यर्थः ।

पक्षे राक्षसारिर्भीमः संरम्भेण उद्यन्तः पांशवोयत्र क्रियायां तद्यथा तथा एनं रक्षोनाथं किर्मीरं वकराक्षसभ्रातरं ममन्थ । शेषं समानम् । "किर्मीरो नागरङ्गे च कर्बुरे राक्षसान्तरे" इति मेदिनी । शालिनीवृत्तं "शालिन्युक्ता मतौ तगौ गोऽब्धिलोकैः" इति लक्षणात् ॥ ४६ ॥

रक्षसां भयदानेन तैरलङ्कृतदण्डकैः।
सुतीक्ष्णशरभङ्गाढ्या सहसारण्यभूरभूत् ॥४७॥
तं प्रत्यगृह्णन्नातिथ्यैर्मुनयो मनुजेश्वरम्।
स्वकालसम्भवैः पुष्पैः कामदेवमिवर्त्तवः ॥४८॥

इति राघवपाण्डवीये महाकाव्ये
तृतीयः सर्गः।

रक्षसामिति। अलङ्कृतदण्डकैः शोभितदण्डकारण्यैस्तैरामादिभिः रक्षसां भयदानेन भयोत्पादनेन हेतुना सुतीक्ष्णशरभङ्गौ मुनिविशेषौ तदाढ्या तद्युक्ता अरण्यभूर्दण्डकारण्यभूमिः सहसा हसेन हास्येन सह वर्तमाना अभूत् सानन्दा बभूव राक्षसभयदानप्रवणान् रामादीन् दृष्ट्वा सुतीक्ष्णशरभङ्गादयो मुनयस्तुतुषुरित्यर्थः। तैरिति भयदानक्रियापेक्षया कर्त्तरि तृतीया क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशत इति न षष्ठी।

पक्षे भयदानेन किर्मीरं विनाश्य इतरदुर्वृत्तराक्षसादीनां भयोत्पादनेन अलङ्कृतः शोभितोदण्डोदमनकर्मयैस्ते तथा तैः दुर्वृत्तभयप्रदानं हि राजदण्डस्यालङ्कार इति भावः। तैर्युधिष्ठिरादिभिः अरण्यभूः काम्यकवनभूमिः सहसा हठात् रक्षसां सुतीक्ष्णैः शरैर्वाणैर्यो भङ्गः पराजयस्तदाढ्याभूत् निरुपद्रवा बभूवेत्यर्थः। अत्रापि भङ्गक्रियापेक्षया तैरिति कर्तरितृतीया ॥ ४७ ॥

तमिति। मुनयस्तद्वनस्था ऋषयस्तं मनुजेश्वरं राजानं रामं पक्षे युधिष्ठिरम् आतिथ्यैरतिथिप्रयोज्यसत्कारैः करणैः प्रत्यगृह्णन् पूजयामासुः। अत्रोपमिनोति स्वकालसम्भवैः स्वसमयोत्पन्नैः पुष्पैः कामदेवं कन्दर्पं एतत्काव्यकरणप्रयोजकं कामदेवनृपं वा ऋतवोवसन्तादय इव ॥ ४८ ॥

इति श्रीप्रेमचन्द्रन्यायरत्नभट्टाचार्यविरचितायां राघवपाण्डवीयमहाकाव्यटीकायां कपाटविपाटिकाख्यायां तृतीयः सर्गः।

---

## चतुर्थः सर्गः ।

अथारिवर्गं नरदेवसम्भवो
निराकरिष्यन् परमास्त्रतेजसा ।
उदग्रधन्वा गुरुकार्यमुद्वहन्
वनान्तरं प्राप शिवोपलब्धये ॥१॥
वराहवाधिरोपेण तपोभिर्भावितः पुरः ।
तेनागस्तिरयन् दृष्टो वनेचरवपुः प्रभुः ॥२॥

अथेति । विराधवधानन्तरम् उदग्रं महत् धनुर्यस्य सः । धनुषः सलोपश्चेति बहुव्रीहावन् सलोपश्च । तथा गुरु महत् कार्यं राक्षसवधरूपं प्रयोजनम् उद्वहन् सम्पादयन् नरदेवसम्भवोराजतनयोरामः परमास्त्रतेजसा महास्त्रप्रभावेण अरिवर्गं खरादिरूपशत्रुसमूहं निराकरिष्यन् निराकर्तुं । लक्षणहेत्वोः क्रियाया इति हेतौ शतृ । तथा शिवोपलब्धये राक्षसविनाशनेन वनवासिनां मङ्गललाभाय वनान्तरम् अन्यद्वनं प्राप जगाम ।

पक्षे अथ किर्मीरवधानन्तरं गुरोर्युधिष्ठिरस्य कार्यं शत्रुक्षयरूपम् उद्वहन् नरोनरावतारोदेवसम्भव इन्द्रपुत्रश्चेति कर्मधारयः नरदेवसम्भवोऽर्जुनः परमास्त्राणां तपःसन्तोषितशिवादिभ्यः प्राप्स्यमानपाशुपतादिदिव्यास्त्राणां तेजसा अरिवर्गं कौरवसैन्यसमूहं निराकरिष्यन् निराकर्तुं तस्यास्त्रान्तरेणासाध्यत्वादिति भावः उदग्रधन्वा गाण्डीवसहित एव शिवोपलब्धये प्रथमं महादेवस्य साक्षात्काराय वनान्तरम् इन्द्रकीलाद्रिवनमध्यं प्राप तपश्चरितुमिति शेषः । शिवं भद्रमिति शिवः शूलीति चामरः ॥ १ ॥

वराहेति । वरः श्रेष्ठो य आहवोयुद्धं तत्र अधिरोपोऽवष्टम्भो यस्य स तथा तेन युद्धवीरेणेत्यर्थः तेन रामेण तपोभिर्भावितस्तपोयुक्तः तथा वनेचरवपूर्वानप्रस्थाश्रमाचारवान् प्रभुः प्रभावशाली पुरोऽग्रे अयन् गच्छन् शिष्यमुखाद्रामाया-

निबद्धतूणः कवची धनुष्मान्
महर्षिभिस्त्यां समितिं प्रविष्टः ।
असौ मृगव्याधवपुर्धरेण
हरेण तुल्यो मुनिभिर्व्यलोकि ॥३॥

गमनं श्रुत्वा अग्निशरणादागच्छन्नित्यर्थः अगस्तिः अगस्त्योमुनिर्दृष्टः। अयन्निति ईगताविल्यस्य भौवादिकस्य रूपम्। "अगस्तिः कुम्भयोनौ च वङ्गसेनतरौ पुमान्" इति मेदिनी।

पक्षे वराहं वराहरूपधारिणं दानवविशेषं बाधत इति वराहबाधी रोपोबाणो यस्य तथा तेन। "पत्नीरोप इषुद्वयोः" इत्यमरः। तेनार्जुनेन तपोभिः स्वस्य तपस्याभिः पुरोऽग्रे भावितः प्रादुर्भावितः वनेचरः किरातस्तस्येव वपुर्यस्य सः किरातमूर्त्तिं धारयन्नित्यर्थः तथा आगोऽर्ज्जुनस्यापराधम्। गाण्डीवी कनकशिलानिभं भुजाभ्यामाजघ्ने विषमविलोचनस्य वक्ष इत्याद्युक्त-प्रकारं तिरयन् आच्छादयन् अगणयिष्यन्नित्यर्थः प्रभुरीश्वरः शिवोदृष्टः। अर्जुनजिघांसुर्वराहमूर्तिधारी कश्चिद्दानवोऽर्जुनेन किरातमूर्तिना शिवेन च युगपद्बाणेन विद्धः तदर्थञ्च विवदमानयोस्तयोर्महद्युद्धं वृत्तमिति भारती भारती ॥ २ ॥

निबद्धेति। महर्षिभिः शस्यां श्लाघ्यां समितिम् अगस्त्यस्य सभां प्रविष्टोऽसौ रामः मुनिभिस्तत्रत्यैर्ऋषिभिः मृगव्याधवपुर्धरेण दक्षयज्ञभङ्गकाले मृग-रूपधारिणोब्रह्मणस्तद्रूपस्वकन्यागमननिवारणकाले वा मृगव्याधशरीर-धारिणा हरेण शिवेन तुल्योव्यलोकि दृष्टः किम्भूतः यतोनिबद्धतूणः गृहीत-शरधिः तथा कवची आमुक्तवर्मा तथा धनुष्मान् गृहीतचापः सबाणश्चेत्यपि बोध्यं मृगव्याधवपुर्धारी हरोऽपि तदानीं तूणादिकं गृहीतवान्।

पक्षे महर्षिभिस्तद्दर्शनार्थमागतैः शस्यां प्रशंसनीयां समितिं युद्धं प्रविष्टोऽसौ अर्जुनः। "समितिः सम्पराये स्यात् सभायां सङ्गमेऽपि च" इति मेदिनी। मुनिभिः मृगव्याधवपुर्धरेण किरातमूर्तिना हरेण तुल्यो नतु न्यूनोव्यलोकि शिवोऽर्जुनश्च समं युध्यन् दृष्ट इत्यर्थः अन्यत्समानम् ॥ ३ ॥

तमग्रतोदर्शितविग्रहं प्रभुं
कृतप्रसादं प्रणिपत्य मौलिना ।
स कुम्भजन्मानमवाप्य शङ्करा-
त्ततोधनुर्वेदमयं समाददे ॥४॥
इति सविबुधविद्विड्घस्मराद्ब्रह्मयोने-
रधिगतपरमास्त्रोद्भासितूणीकृपाणः ।

तमिति । स रामः अग्रतोदर्शितोविग्रहः शरीरं येन स तथा तं तथा प्रभुं निग्रहानुग्रहसमर्थं तथा कृतप्रसादं प्रसन्नं तं कुम्भजन्मानम् अगस्त्यम् अवाप्य । 'अगस्त्यः कुम्भसम्भव' इत्यमरः । मौलिना शिरसा प्रणिपत्य प्रणम्य शङ्करात् कल्याणकरात् प्रसन्नादित्यर्थः ततोऽगस्त्यात् वेदमयं वेदोक्तरहस्यसहितं धनुः समाददे जग्राह अगस्त्यः प्रसन्नः सन् पूर्वमिन्द्रेण स्थापितं वैष्णवं धनुरादिकं रामाय ददावित्यर्थः । धनुरिति बाणखड्गाक्षयतूणवस्त्रकुण्डलानामुपलक्षणम् । "दत्त्वा धनुश्चैव शरांश्च विप्रः खड्गञ्च तूणौ च पृषत्कपूर्णौ । वस्त्रोत्तमञ्चैव ददौ महात्मा शक्रेण दत्तेऽपि च कुण्डले स" इत्यारण्यकाण्डे ।

पक्षे सोऽयमर्जुनः अग्रतः प्रथमं दर्शितोविग्रहोयुद्धं येन स तथा तं ततः कृतप्रसादं प्रसन्नोऽस्मि ते तपसा वीरत्वेन च वरं वृणीष्वेति ब्रुवन्तमित्यर्थः तं प्रभुमीश्वरम् अवाप्य ईश्वरोऽयं न किरातधिपतिरिति मत्वेत्यर्थः मौलिना कुं पृथ्वीं भजन् सन् प्रणिपत्य । "गोत्रा कुः पृथिवी पृथ्वी" इत्यमरः । ततः शङ्करान्मानं साधुधन्योऽसि वत्सेत्यादिरूपं सम्मानम् अवाप्य धनुर्वेदं धनुर्वेदोक्त-पाशुपतास्त्रीयरहस्यं समाददे प्राप ॥ ४ ॥

इतीति । इत्येवं विबुधानां देवानां विद्विट् शत्रुर्वातापिराक्षसस्तस्य घस्मरात् भक्षकात् ब्रह्मयोनेर्ब्राह्मणादगस्त्यात् अधिगतौ प्राप्तौ परमास्त्रै-रुद्भासिनौ तूणी शरधिश्च कृपाणः खड्गश्च तौ येन सः तथा नाकधाम्नां देवानां निकायैः सङ्घैरभिलषिता जयश्रीर्यस्य तादृशः स रामः वनभुवि वनभूम्यां पञ्च-वट्यामित्यर्थः कृतवासः सन् स्वस्थतां स्वस्मिन् तिष्ठतीति स्वस्थः । स्थोऽधि-

अभिलषितजयश्रीर्नाकधाम्नां निकायै-
र्वनभुवि कृतवासः स्वस्थतां संप्रपेदे ॥५॥

अर्जुनेन यशसानुलिम्पता
तच्चरित्रजनितेन दिक्तटीः ।
अध्यरोहि बलविद्विषः सभा
विह्वलीकृतसुरारियोषिता ॥६॥

करणाव्ययाभ्यामित्यादिना कर्तर्यङ् तस्य भावः स्वस्थता तां सुखित्वमित्यर्थः संप्रपेदे प्राप अगस्त्यवचनात् पञ्चवटीं गत्वा तत्र कृतवसतिः सन् सुखी बभूवेत्यर्थः ।

पक्षे वनभुवि इन्द्रकीलवनभूम्यां तपस्यार्थं कृतवासः सोऽर्जुनः इत्येवं विबुधविद्विषोऽन्धकादयस्तेषां चस्मरान्नाशकात् ब्रह्मयोनेः शिवात् अधिगतेन परमास्त्रेण पाशुपतादिना उद्भासिनी या तूणी तद्युक्तः कृपाणीयस्य सः तथा नाकधाम्नामिन्द्रादीनां निकायैरभिलषिता जयश्रीः निवातकवचकर्मकपराजयलक्ष्मीर्यस्य तादृशश्च सन् स्वस्थतां संप्रपेदे देवानामजेयस्य निवातकवचस्य नाशनाय इन्द्रादभ्यर्थितः स्वर्गं गत्वा तत्र कियन्तं कालमुवासेत्यर्थः । ब्रह्मयोनेरिति ब्रह्मणोवेदस्य प्रजापतेर्वा योनिः कारणात् कल्पभेदे ब्रह्मा शिवाज्जात इति पौराणिकी कथा यद्वा ब्रह्म परमात्मतत्त्वं योनिरुत्पत्तिस्थानं यस्य तस्मात् नतु प्राकृतिकादित्यर्थः । "वेदस्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः" इत्यमरः । ब्रह्मयोनेरित्युपलक्षणम् इन्द्रादयोऽप्यागत्य स्वानि स्वान्यस्त्राणि ददुरिति भारतस्वरसात्तेभ्योऽप्यस्त्राण्यधिगतानीति ध्येयम् । अस्मिन् पक्षे स्वस्थतामित्यत्र कादियुक्ते शषसे लुग्वेत्यनेन स्वःशब्दोत्तरस्य विसर्गस्य लोपः । मालिनीवृत्तम् ॥ ५ ॥

अर्जुनेनेति । तस्य रामस्य यच्चरित्रं राक्षसवधमुनिगणरक्षणादिरूपं तेन जनितेन सम्पादितेन तथा अर्जुनेन धवलेन निर्मलेनेत्यर्थः । "धवलोऽर्जुन" इत्यमरः । तथा दिक्तटीः दिगवकाशान् अनुलिम्पता अनुलिप्ता धवलाः कुर्वता तथा विह्वलीकृता काममुग्धीकृता सुरारियोषित् सुन्दासुरपत्नी

तस्मिन् दुरापे वसतः प्रदेशे
लब्धास्त्रजातस्य मनोभवान्धा ।
तस्योर्वशीतुल्यविलासवेशा
क्षपाचरी सन्निधिमाजगाम ॥७॥

सूर्पणखा राक्षसी येन तत्तथा तेन यशसा रामस्य कीर्त्या बलविद्विषो बलारातेरिन्द्रस्य सभा अध्यरोहि आरूढ़ा रामस्य यशो दिगन्तानभिव्याप्य क्रमेण इन्द्रलोकपर्यन्तं जगाम यच्छ्रुत्वा सूपणखापि रामे सकामा जातेत्यर्थः ।

पक्षे तत्तादृशं शिवसहितयुद्धादिरूपं यच्चरितं तेन जनितेन यशसा करणभूतेन दिक्तटीरनुलिम्पता अर्जुनेन पार्थेन बलविद्विषः इन्द्रस्य सभा सभास्थमिन्द्रस्यासनमित्यर्थः अध्यरोहि इन्द्रोऽर्जुनमागतं दृष्ट्वा हर्षेण निजासने निवेशयामासेत्यर्थः किम्भूतेनार्जुनेन विह्वलीकृता भयव्याकुलीकृताः सुरारियोषितः असुरपत्न्यो येन सः तथा तेन अर्जुनमागतं श्रुत्वा अवश्यम्भाविपतिमरणं सम्भाव्य निवातकवचयोषितो भयव्याकुला बभूवुरित्यर्थः । रथोद्धतावृत्तं "रान्नराविह रथोद्धता लगौ" इति लक्षणात् ॥ ६ ॥

तस्मिन्निति । दुरापे दुर्गम्ये तस्मिन् प्रदेशे पञ्चवट्यां वसतः कृताश्रमस्य तथा लब्धम् अगस्त्यात् प्राप्तम् अस्त्रजातम् अस्त्रसमूहो येन स तथा तादृशस्य तस्य रामस्य सन्निधिं समीपं मनोभवान्धा काममुग्धा क्षपाचरी सूर्पणखा राक्षसी आजगाम किम्भूता उर्वशी स्वर्वेश्याविशेषस्तया तुल्यौ विलासः कामिजनदर्शनजनितयानस्थानादिवैलक्षण्यं स च वेशश्च तौ यस्याः सा । "यानस्थानासनादीनां मुखनेत्रादिकर्मणाम् । विशेषस्तु विलासः स्यादिष्टसन्दर्शनादिना" इति साहित्यदर्पणः ।

पक्षे दुरापे अन्यैर्दुष्प्राप्ये तस्मिन् प्रदेशे इन्द्रलोके वसतः तथा लब्धं शिवादिभ्यः प्राप्तम् अस्त्रजातं येन तादृशस्य तस्यार्जुनस्य सन्निधिम् उर्वशी तन्नाम्नी स्वर्वेश्या आजगाम किम्भूता मनोभवान्धा इन्द्रप्रेरितचित्रसेनवचनेन कामव्याकुला तथा तुल्यौ परस्परं सदृशौ विलासवेशौ यस्याः सा तथा क्षपाचरी रात्रिसञ्चारिणी रात्रौ कृताभिसारेत्यर्थः ॥ ७ ॥

अकामं चकमे सा तं तरुणं जायसी सती।
वैषम्येण हि पुंनार्य्योर्घटना मृतजीविका ॥८॥
चुकोप सा भृशं तस्मै प्रातिकूल्यान्निराकृता।
कर्णनासापनोदोऽयं स्त्रीणां यदवमानना ॥९॥

अकाममिति। सा शूर्पणखा ज्यायसी वृद्धापि सती भवन्ती अकामं जितेन्द्रियत्वात् स्वविषयकाभिलाषशून्यमपि तरुणं युवानं तं रामं चकमे सम्भोगायाचकाङ्क्ष एतदनुचितमेवेत्यर्थान्तरन्यासेन द्रढ़यति वैषम्येणेति हि यतः पुंनार्योः पुरुषकामिन्योर्वैषम्येण घटना वयःकृतेन कामाकामकृतेन च वैपरीत्येन संयोगः मृतजीविका मृतं मरणमेव जीवोजीवनं यत्र सा तथाविधयोर्जीवनं मरणमेव नतु सुखदमित्यर्थः यद्वा मृतस्य मरणस्य जीविका उपायः "प्राणहानिकरी वृद्धा" इति कामशास्त्रात्।

पक्षे ज्यायसी वयोऽधिका स्ववंशवीजस्य पुरूरवसः परिग्रहत्वान्मातृवन्मान्या च सती सा उर्वशी शेषं समानम् ॥ ८ ॥

चुकोपेति। सा शूर्पणखा प्रातिकूल्यात् प्रतिकूलाचरणान्निराकृता निरस्ता सती तस्मै रामाय भृशं चुकोप चुक्रोध। तस्मै इति क्रुधद्रुहेर्ष्यादिना संप्रदानसंज्ञायां चतुर्थी। प्रातिकूल्यञ्च कृतदारोऽस्मि भवति भार्येयं दयिता ममेत्यादिना सा रामेण लक्ष्मणसमीपं प्रेषिता तेनापि प्रत्युक्ता पुनश्च रामसमीपमागत्य सीतां भक्षयितुमुद्यता ततश्च लक्ष्मणमाकार्य तद्द्वारा तस्याः कर्णनासापनोदनं कृतमिति। ननु वधार्हायास्तस्याः कथं वधो न कृतस्तत्राह यद्यस्मात् अयं कर्णनासापनोदः कर्णनासाच्छेदनमेव स्त्रीणाम् अवमानना वधः नतु प्राणवियोगफलकव्यापारः "अवध्याञ्च स्त्रियं प्राहुस्तिर्य्यग्योनिगतामपि" इति स्मृतेस्तस्य निषिद्धत्वात् ताड़कावधस्तु गुरुवचसा कृतत्वान्न दूषणमावहतीति ध्येयम्।

पक्षे सा उर्वशी प्रातिकूल्यात् स्वानङ्गीकाररूपाप्रियाचरणान्निराकृता सती तस्मै अर्जुनाय भृशमत्यन्तं चुकोप नन्वनङ्गीकारः कथमत्यन्तकोपे कारणमित्यत्राह स्त्रीणां यदवमानना अनङ्गीकारेणावज्ञाकरणम् अयं कर्णनासापनोदः

सा सर्वलोकैरपि दुष्प्रधर्षा
विलक्षतां प्राप्य तदातदर्हा।
तत्पौरुषस्य प्रतिरोधकानि
व्याहृत्य वाक्यानि विनिर्जगाम ॥१०॥

कृतवैरास्ततस्तेन खरदूषणसङ्गताः।
निवातकवचास्तूर्णं प्रययुः शक्रविद्विषः ॥११॥

कर्णनासाच्छेदवत्यपमानजनिकेत्यर्थः न काममपि परिहरेदिति श्रुतेः सकामानङ्गीकारस्य निषिद्धत्वादिति भावः ॥ ९ ॥

सेति। सर्वलोकैरपि दुष्प्रधर्षा खरादिभगिनीत्वात् प्रधर्षयितुमशक्या तथा अतदर्हा तथाविधकर्णनासापनोदरूपावमाननानर्हा सा सूर्पणखा तदा तस्मिन् समये विलक्षतां कर्णनासापनोदनेन लज्जां प्राप्य तस्य रामस्य यत्पौरुषं वीर्यं तस्य प्रतिरोधकानि प्रतिकूलानि तिष्ठ मद्भ्रातरस्ते पौरुषं शमयिष्यन्तीत्यादिरूपाणि वाक्यानि व्याहृत्य विनिर्जगाम तत्प्रदेशान्निःसृत्य खरादिसमीपं ययौ।

पक्षे सर्वलोकैरपि दुष्प्रधर्षा नाभिभवनीया अतदर्हा तथाविधोपेक्षानर्हा सा उर्वशी तदा विलक्षतां अर्जुनस्योपेक्षया सलज्जतां प्राप्य तस्यार्जुनस्य यत् पौरुषं पुंस्त्वं तस्य प्रतिरोधकानि प्रतिबन्धकानि। यस्मान्मां नाभिनन्देथाः कामबाणवशं गतां। तस्मात्त्वं नर्तनः पार्थ स्त्रीमध्ये मानवर्जितः। अपुमानिति विख्यातः षण्ढवद्विचरिष्यसीति शापरूपाणि वाक्यानि व्याहृत्य विनिर्जगाम ॥१०॥

कृतेति। ततः सूर्पणखाकर्णनासापनोदाद्धेतोस्तेन रामेण कृतं वैरं विरोधो येषां ते तथा खरदूषणौ नाम सूर्पणखाभ्रातरौ राक्षससेनान्यौ ताभ्यां सङ्गता अधिष्ठिताः तथा निवाता दृढपिनद्धाः कवचाः सन्नाहा येषां ते। "निवातौ दृढसन्नाहे वातशून्येऽपि चाश्रये" इति विश्वः। तादृशाः शक्रविद्विषो राक्षसास्तूर्णं प्रययुः युद्धार्थं राम-समीपमाजग्मुः।

जनस्थानं विसृज्याथ ते चास्थाने कृतोद्यमाः।
रणस्थानं समाजग्मुर्यमस्थानोपकण्ठगाः ॥१२॥

सान्द्रस्यन्दनवंशसिन्धुरघटागन्धर्ववृन्दोज्ज्वले
खड्गव्यग्रकराग्रपत्तिपृतनासम्पत्तिविस्तारिणि।
तं वीरं प्रतियाति वैरिनिकरे कल्पान्तकादम्बिनी
गम्भीरैरुदजृम्भि भीरुभयदैः संग्रामभेरीरवैः ॥१३॥

पक्षे ततोऽस्त्राभ्यासानन्तरं खरमुत्कटं यद्दूषणं लोकापकारादि तत्सङ्गताः शक्रस्येन्द्रस्य विद्विषः शत्रवः अतएव तेनेन्द्रपुत्रेणार्जुनेन कृतवैराः निवातकवचा-ख्यनामकसमुद्रतीरवासिनो दैत्यास्तूर्णं प्रययुः मातलिरथारूढमर्जुनमागतं श्रुत्वा युद्धार्थं स्वपुरान्निर्जग्मुरित्यर्थः ॥ ११ ॥

पूर्वोक्तमेव प्रकारान्तरेणाह। जनस्थानमिति। अथानन्तरम् अस्थाने जेतुमशक्यत्वादपदे कृतोद्यमाः कृतयत्नाः अतएव यमस्थानस्य यमालयस्य उप-कण्ठगाः समीपं गन्तारः आसन्नमरणा इत्यर्थः ते च खरदूषणादयः जनस्थानं स्वनिवासभूतं दण्डकारण्यप्रदेशं विसृज्य त्यक्त्वा रणस्थानं युद्धभूमिं समाजग्मुः।

पक्षे ते च निवातकवचाः अथ मातलिरथघोषश्रवणानन्तरं जनस्थानं बहुजनावासं नगरमित्यर्थः विसृज्य रणस्थानं समाजग्मुः। शेषं तुल्यम् ॥१२॥

इतःपरं विंशतिश्लोकै राक्षसदैत्यानां सपरिकरं युद्धं वर्णयति। सान्द्रेति। वैरिनिकरे शत्रुसमूहे राक्षसबले पक्षे दैत्यबले चेत्यर्थः तं वीरं रामं पक्षे अर्जुनं प्रतियति अभिगच्छति सति संग्रामभेरीरवैः समरदुन्दुभिध्वानैरुदजृम्भि उत्थितमित्यन्वयः। भावे लुङ्। किम्भूते वैरिनिकरे सान्द्राणामविरलानां स्यन्दनानां रथानां वंशाः केतवः सिन्धुराणां हस्तिनां घटा समूहः गन्धर्वाणाम् अश्वानां वृन्दं ते च सा च तच्चेति द्वन्द्वः तैरुज्ज्वले शोभमाने। "हस्ती महा-मृगः पीलुः सिन्धुरो दीर्घमारुत" इति त्रिकाण्डशेषः। "वाजिवाहार्वगन्धर्व-हयसैन्धवसप्तय" इत्यमरः। तथा खड्गव्यग्राणि खड्गव्यापृतानि कराग्राणि यासां तथाविधाः पत्तयः पदातयो यासु तादृश्यो याः पृतनाः सेनास्तासां सम्पत्तिभिः समृद्धिभिर्विस्तारिणि विस्तृते। खड्गेति बाणाद्युपलक्षणं विशेषण-

समन्ताच्छृण्वन्त्यः समरपटहध्वानमचिरा-
द्यथासन्नाः कल्पद्रुमविरचनाविभ्रमभृतः ।
नभोगर्भे चेरुर्मृधनिहतयोधग्रहपराः
कपोलोद्यत्स्वेदप्रसरकणिका दिव्यगणिकाः ॥१४॥

जवनपवनपातैर्दिक्षु विस्तारितायां
बहलसमरधूलीवागुरायां निमग्नः ।

द्वयेन चतुरङ्गसेनासद्भावः सूचितः तथा चामरः "हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयम्" इति । किम्भूतैर्भैरीरवैः कल्पान्ते प्रलयप्रारम्भे या कादम्बिनी मेघमाला तद्गर्जिते लक्षणा तद्वद्गम्भीरैर्मन्द्रैः तथा भीरूणां भयदैः । वृत्त्यनुप्रासालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ १३ ॥

समन्तादिति । अथानन्तरं दिव्यगणिकाः स्वर्वेश्या अप्सरसः मृधे युद्धे निहतानां सम्मुखयुद्धविनाशितानां योधानां ग्रहपराः ग्रहणतत्पराः सत्यः पतित्वेन तान् ग्रहीतुमित्यर्थः नभोगर्भे आकाशमध्ये चेरुर्भ्रमन्तिस्म किम्भूताः समन्तात् सर्वतः समरपटहानां ध्वानं शृण्वन्त्यः अतएव अचिरात् तत्क्षणमेव आसन्नाः युद्धसमीपमागत्य स्थिताः तथा कल्पद्रुमैः कल्पवृक्षजातपुष्पादिभिर्या विरचना वेशस्तया विभ्रमं विलासं बिभ्रतीति तादृश्यः तथा सत्त्वोदयात् कपोलयोर्गण्डयोरुद्यन्त्यो विलसन्त्यः स्वेदप्रसरस्य निःसृतस्वेदजलस्य कणिका यासां ताः । रथासन्नाकल्पद्रुतविरचनेति पाठस्तु न मनोरमः । अपराङ्मुखतया धर्मयुद्धेन युध्यन्तोहताः स्वर्गं गच्छन्ति तएव स्वर्वेश्यादिभिः क्रीड़न्तीत्येतन्मूलमेव दिव्यगणिकानां युद्धसमीपागमनवर्णनमिति तेनालासम्बन्धे सम्बन्धरूपातिशयोक्तिरलङ्कारश्छेकानुप्रासश्चेति सङ्करः । शिखरिणीवृत्तम् ॥ १४ ॥

जवनेति । जवनो वेगवान् यः पवनो वायुस्तस्य पातैर्गमनैर्दिक्षु विस्तारितायां प्रसारितायां बहुला याः समरधूल्यः युद्धस्थानोत्थितरजांसि ता एव वागुरा मृगबन्धनी-जालविशेष इत्यर्थः तस्यां निमग्नः प्रच्छन्नमण्डलः अथच पतितः अतएव परिमलिनितम् अतिम्लानतां प्राप्तं वक्रं मुखं सांमुख्यमित्यर्थः

परिमलिनितवक्त्रः शोचनीयामवस्था-

मभजत परितूर्णं बद्धपादः पतङ्गः ॥१५॥

अथोच्चलत्कलकलघोषभीषणं

तदागतं बलमवलोक्य विद्विषाम्।

उपाददे नरपतिनन्दनो धनु-

र्घनाघनः कुलिशवरायुधं यथा ॥१६॥

अथच वदनं यस्य सः तथा बद्धाः रुद्धाः पादारश्मयः अथच चरणा यस्य सः पतङ्गः सूर्यः अथच शलभः पक्षी वा शोचनीयां शोकार्हामवस्थां दशां परितूर्णम् अतिशीघ्रम् अभजत प्राप। "पादारश्म्यङ्घ्रितुर्यांशाः" इत्यमरः "पतङ्गः शलभे शालिप्रभेदे पक्षिसूर्ययोः" इति मेदिनी। अन्योऽपि पतङ्गः पक्षी वागुरानिपतितो रुद्धचरणो मलिनमुखः सन् शोच्यां दशां प्राप्नोति। नेयं समासोक्तिर्विशेष्यपदस्यापि पतङ्गस्य श्लिष्टत्वात्, नापि श्लेषः द्वितीयार्थस्याप्रस्तुतत्वात् तत्र समकक्षतयार्थद्वयस्फुरणस्यौचित्यात्, तस्मादभिधया प्रकरणेन सूर्येऽर्थे नियन्त्रिते व्यञ्जनया द्वितीयार्थस्तद्घटितोपमा वा व्यज्यते इति शब्दशक्त्युत्थो ध्वनिः। तेन च युद्धस्यौत्कट्यं व्यज्यत इति ध्येयम्। मालिनीवृत्तम् ॥ १५ ॥

अथोच्चलदिति। अथानन्तरं नरपतिनन्दनो रामः पक्षेऽर्जुनश्च उच्चलता उत्तिष्ठता कलकलघोषेण कोलाहलरूपवीररथगजतुरग-तूर्यशब्देन भीषणं भयदम् आगतम् उपस्थितम् विद्विषां खरादीनां पक्षे निवातकवचानां तद्बलं सैन्यम् अवलोक्य धनुरुपाददे जग्राह युद्धाय सज्जो बभूवेत्यर्थः उपमयास्य शत्रुहन्तृत्वं ख्यापयति घनाघन इन्द्रः कुलिशवरायुधं यथा कुलिशं वज्रं तद्रूपं वरं श्रेष्ठम् आयुधं शस्त्रमिव। "घनाघनो निरन्तरे। वासवे घातुके मत्तगजे वर्षुकवारिदे" इति हेमचन्द्रः। कुलिशधरायुधमिति पाठे घनाघनो-वर्षुकाब्दः कुलिशधरस्य इन्द्रस्य आयुधं धनुरिवेत्यर्थः। उपमेयं श्रौतीरुचिरावृत्तम्। "चतुर्ग्रहैरिह रुचिरा जभस्जगा" इति लक्षणात्। इदञ्च वृत्तं रौद्रवीररसयोरत्यनुकूलमित्यस्मिन्नेव प्रायेण कवयो युद्धं वर्णयन्ति ॥ १६ ॥

विसारिणीमपि जगतीन्द्रनन्दनो-
महारथाक्रमणसमग्रविक्रमः।
रुरोध तां विबुधविरोधिवाहिनीं
महोदधेर्मलय इवोर्मिसन्ततिम् ॥१७॥

तरस्विनां द्विरदरथाश्वचारिणां
सिसृक्षतां प्रहरणपङ्क्तिमुज्ज्वलाम्।
विरोधिनामधिरणमेकलक्षतां
चिरं दधौ नृपसुत एक एव सः ॥१८॥

विसारिणीमिति। महारथानाम्। "रथेनैकेन शत्रून् यः साहङ्कारो प्रजन्यलम्। महारथः सविज्ञेयोयुद्धशास्त्रविशारद" इत्युक्त-लक्षणानां वीराणाम् आक्रमणे समग्रं पर्याप्तोविक्रमः पराक्रमो यस्य सः जगतीन्द्रस्य राज्ञोदशरथस्य नन्दनोरामः विसारिणीमपि आक्रमणाय समन्ततः प्रसृतामपि तां विबुधविरोधिनां देवविद्वेषिणां राक्षसानां वाहिनीं सेनां मलयो मलयनामा पर्वतः महोदधेः समुद्रस्य ऊर्मिसन्ततिं कल्लोलपरम्परामिव रुरोध आवृणोत्। उपमालङ्कारः।

पक्षे इन्द्रनन्दनोऽर्जुनः जगति पृथिव्यां विसारिणीमपि विबुधविरोधिनाम् असुराणां वाहिनीं रुरोध। शेषं तुल्यम् ॥ १७ ॥

तरस्विनामिति। एकएव स नृपसुतोरामः पक्षेऽर्जुनः अधिरणं रणे। सप्तम्यर्थेऽव्ययीभावः। तरस्विनां बलवतां तथा द्विरदैर्हस्तिभिः रथैः अश्वैश्च चरन्तीति ते तथा तेषां द्विरदरथाश्वचारिणां तथा उज्ज्वलाम् उद्दीप्तां प्रहरण-पङ्क्तिम् अस्त्रसमूहं सिसृक्षतां त्यक्तुमिच्छतां विरोधिनां शत्रूणां खरादीनां पक्षे निवातकवचानां एकलक्षताम् अद्वितीयवेध्यताम् अथच एकः सन्नपि लक्षसंख्यकत्वं चिरं दधौ स्वीचकार एकः सन्नपि बहुभिः सार्द्धं योद्धुं प्रवृत्त इत्यर्थः। एतेनास्य महावीरत्वं ध्वनितम् ॥ १८ ॥

नियन्तृभिर्युधि पुरतः प्रधाविता
रथाः पुरःपवनपराङ्मुखीकृतैः।
व्यदर्शयन् दिशमिव केतनांशुकैः
पराजये झटिति पलायनोचिताम् ॥१९॥
अथापतन्नृपतनयस्य दृष्टयः
पतिष्यतः शरनिकरस्य सर्वतः।
अनादरादरिपृतनासु दूतिकाः
सरोजिनीष्विव रजनीपतेस्त्विषः ॥२०॥

नियन्तृभिरिति। युधि युद्धे नियन्तृभिः सारथिभिः पुरतः अग्रतः जेतव्याभिमुख्येनेत्यर्थः प्रधाविताः प्रचालिता रिपूणां रथाः पुरःपवनेन सम्मुखागतवायुना प्रतिकूलपवनेनेत्यर्थः पराङ्मुखीकृतैः पश्चात्कृतैः केतनांशुकैर्ध्वजपटैः करणैः पराजये अवश्यम्भाविनि भङ्गे झटिति पलायनोचितां पलायनयोग्यां दिशमिव व्यदर्शयन् विशेषेण दर्शितवन्तः प्रतिकूलपवनेन रथानां केतनांशुकानि पराङ्मुखतया न केवलं कम्पन्तेस्म किन्तु पराजयस्यावश्यम्भाविततया पलायनयोग्यां दिशमिव दर्शयन्तिस्मेत्युत्प्रेक्षा ॥ १९ ॥

अथेति। अथानन्तरं सर्वतः समन्तात् पतिष्यतः शरनिकरस्य रिपूणां बाणसमूहस्य अनादरात् अवज्ञानात् तदर्थमित्यर्थः नृपतनयस्य रामस्य पक्षेऽर्जुनस्य दृष्टयो दूतिका दूत्य इव अरिपृतनासु शत्रुसेनासु रजनीपतेश्चन्द्रस्य त्विषः कान्तयः सरोजिनीष्विव अपतन् नृपतनयः सावज्ञमरिपृतनाः ददर्शेत्यर्थः यथा चन्द्रकिरणपतनेन पद्मिन्यः सङ्कोचं प्राप्नुवन्ति तथा तद्दृष्टिपातेन अरिसेनाः सङ्कोचं प्राप्ता इत्युपमया ध्वन्यते दृष्टिषु दूतीत्वारोपेण च अरिपृतनासु वशीभविष्यन्नायिकात्वारोपो व्यज्यते तेनात्र एकदेशविवर्ति रूपकं अन्योऽपि वश्यत्वाय नायिकासु दूतीं प्रेरयति तेनात्र एकदेशविवर्तिरूपकोपमयोर्निरपेक्षतयावस्थानात् संसृष्टिः। केचित्तु पतिष्यतः शरनिकरस्य नृप-

उदञ्चयन् ध्वजमिव विक्रमश्रियो
विजृम्भयन् फणमिव रोषभोगिनः ।
प्ररोहयन् विजयतरोरिवाङ्कुरं
व्यभाव्यत भ्रुकुटिमता मुखेन सः ॥२१॥

भुजेन तद्भुजगनिभेन भूभृत-
स्तरस्विना विहितविधूननं धनुः ।
अबूबुधच्छरधिगुहान्तशायिनः
स्वनिस्वनैरिव समराय सायकान् ॥२२॥

तनयप्रमोच्यमाणस्य बाणसमूहस्य दूतिका दूत्य इव नृपतनयस्य दृष्टयः अरि-पृतनास्वपतन्नित्यन्वयं कुर्वन्ति ॥ २० ॥

उदञ्चयन्निति। स रामः पक्षेऽर्जुनः भ्रुवोः कुटिः सङ्कोचो भ्रुकुटिः। भ्रूकुंशादीनां ह्रस्वातावित्ति भ्रुवो ह्रस्वः। तद्वता भ्रुकुटियुक्तेन मुखेन कर्त्रा विक्रमश्रियो विक्रमलक्ष्म्या ध्वजमिव केतुमिव उदञ्चयन् उत्तोलयन् व्यभाव्यत प्रकाशितः तथा रोषभोगिनः क्रोधरूपसर्पस्य फणमिव विजृम्भयन् व्यभाव्यत तथा विजयतरोर्विजयरूपवृक्षस्य अङ्कुरमिव प्ररोहयन् प्रादुर्भावयन् व्यभाव्यत तस्य भ्रुकुटिमन्मुखं विक्रमातिरेकं रोषातिशयं विजयावश्यम्भावञ्च सूचयामासेत्यर्थः रूपकसङ्कीर्णोत्प्रेक्षासंसृष्टिरलङ्कारः ॥ २१ ॥

भुजेनेति। भूभृतो राज्ञो रामस्य पक्षेऽर्जुनस्य अथ च पर्वतस्य भुजगनिभेन दीर्घत्वादजगरसदृशेन तरस्विना बलवता भुजेन विहितं कृतं विधूननं कम्पनं यस्य तादृशं धनुश्चापः अथच पियालवृक्षः। "धनुः पियाले ना नस्त्री राशिभेदे शरासने" इति मेदिनी। स्वस्य निस्वनैः शब्दैः शरधिस्तूणो गुहा दरीव शरधिगुहा तस्या अन्ते एकदेशे शेरत इति शरधिगुहान्तशायिनः तान् सायकान् बाणान् अथच स्यन्ति नाशयन्तीति सायकाः सिंहास्तान् समराय युद्धं कर्तुम्। तुंगर्भाच्चतुर्थी। अबूबुधदिव अजागरयदिव। अन्यस्यापि भूभृतो भुजगेन कम्पितः पियालवृक्षः स्वशब्देन गुहान्तशायिनः सिंहान्

विधीयतां किमधिमृधं विरोधिनां
परासुता किमु परिभाव एव वा।
इतीव तं विभुमनुयोक्तुमुद्यता
शरावलिः श्रवणसमीपमाश्रयत् ॥२३॥

अथ स्फुरद्‌गुरुगुणनादमेदुरा-
च्छरासनादुपहितमण्डलाकृतेः।
विनिर्ययुर्निशितमुखाः शिलीमुखाः
क्षयार्णवादिव वडवाग्निहेतयः ॥२४॥

जागरयति। स धनुः सज्यं कृत्वा युद्धार्थं तूणाच्छरान् ग्रहीतुमुपचक्रमे इति भावः। अत्र श्लेषानुप्राणितोपमासङ्कीर्णोत्प्रेक्षालङ्कारः॥ २२॥

विधीयतामिति। अधिमृधम् अधियुद्धम्। सप्तम्यर्थेऽव्ययीभावः। विरोधिनां शत्रूणां परासुता प्राणशून्यता किं विधीयतां मयेति शेषः। किमु वा परिभाव एव जीवतामेव तेषां पराभव एव विधीयताम् इति इदं तं विभुं रामं पक्षेऽर्जुनम् अनुयोक्तुमिव प्रष्टुमिव। "प्रश्नोऽनुयोगः पृच्छा च" इत्यमरः। उद्यता उद्युक्ता शरावलिः बाणश्रेणी तस्य श्रवणसमीपं कर्णान्तिकम् आश्रयत् प्राप तेन मोक्षणाय बाणा आकर्णान्तमाकृष्टा इति भावः। अत्र शरावलेस्तादृशानुयोगासम्बन्धेऽपि तत्सम्बन्धकल्पनादतिशयोक्तिस्तया चाङ्गाङ्गितया सङ्कीर्णोत्प्रेक्षेति केचित् वस्तुतस्तूत्प्रेक्षैवेयं सम्भावनयैवानुयोगस्य सम्भवात्॥ २३॥

अथेति। अथाकर्षणानन्तरं स्फुरन्नुत्तिष्ठन् गुरुर्भयदो यो गुणस्य ज्याया नादष्टङ्कारस्तेन मेदुरात्दुद्भटात् तथा उपहिता ज्याकर्षणेन रचिता मण्डलाकृतिर्मण्डलवदाकारो यस्य तत्तथा तस्मात् शरासनाद्धनुषः सकाशात् निशितमुखास्तीक्ष्णाग्राः शिलीमुखाबाणाः क्षयार्णवात् प्रलयकालीनसमुद्रात् वडवाग्नेर्हेतयः शिखा इव विनिर्ययुर्निश्चक्रमुः यथा जगद्दिधक्षया वाडवाग्निशिखाः प्रलयसमुद्रान्निःसरन्ति तथा रिपुदिधक्षया बाणाधनुषोनिःसृता

शरोरगाः सुररिपुसैन्यसागरं
जगाहिरे नृपसुतचापनोदिताः ।
विघट्टनस्फुटिततनुत्रनिष्पतत्
स्फुलिङ्गकप्रसरविषाकुलाननाः ॥२५॥

परोज्झिताः प्रहरणपङ्क्तयोऽपत-
न्नृपात्मजे हिमततिवद्विनाश्य ताः ।
अनेकधा विसस्रुपुरस्य ते ततो
रवेरिव प्रतिदिशमंशवः शराः ॥२६॥

इत्यर्थः यथार्णवोऽपि गुरुनादेनोद्भटो भवति । 'अर्चिर्हेतिः शिखा स्त्रियाम्' इत्यमरः । उपमालङ्कारः ॥ २४ ॥

शरोरगा इति । नृपसुतस्य रामस्य पक्षेऽर्जुनस्य चापेन नोदिताः प्रेरिताः शरा उरगाः सर्पाइव शरोरगाः । व्याघ्रादित्वादुपमितिं समासः एवमग्रेऽपि । सुररिपूणां राक्षसानां पक्षे दैत्यानां सैन्यं सागरइव तं जगाहिरे विलोडयामासुः किम्भूताः विघट्टनेन दृढसंयोगेन स्फुटितानि यानि तनुत्राणि सैन्यानां वर्माणि तेभ्यो निष्पतन्तो ये स्फुलिङ्गा एव स्फुलिङ्गका वह्निकणाः । स्वार्थेकः । तेषां प्रसरः समूहोविषमिव तत्तथा तेनाकुलं व्याप्तम् आननं मुखं येषां ते । अन्येऽपि उरगाः सागरं गाहन्ते विषाकुलाननाश्च भवन्ति । अत्र नृपसुतचापनोदितत्वधर्मस्य केवलमुपमेयान्वितत्वेन उपमासाधकत्वादौपम्यवाचकलोपे लुप्तोपमा, न रूपकमिति ध्येयम् ॥ २५ ॥

परोज्झिता इति । परैः शत्रुभिः खरादिभिर्निवातकवचैश्च उज्झिताः क्षिप्ताः प्रहरणपङ्क्तयः अस्त्रश्रेणयः हिमततिवत् नीहारपरम्परा इव अव्यथादायिन्य इत्यर्थः नृपात्मजे रामेऽर्जुने च अपतन् पतिताः ततोऽनन्तरम् अस्य रामस्यार्जुनस्य च ते प्रसिद्धाः शराः रवेरंशव इव ता प्रहरणपङ्क्तीर्विनाश्य प्रतिदिशं समन्तात् । शरदादेरव्ययीभावे इत्यसमासान्तः । अनेकधा बहुधा

रणोद्यतं प्रथममुदायुधालिकं
व्यलोक्यत त्रिदशजनैर्द्विषां बलम्।
अनन्तरं कलितकबन्धबन्धुरं
ततः क्षणात् क्षितितलसंस्तरायितम् ॥२७॥

कबन्धभावात् पिशिताशनानां
प्रनृत्यतां कुक्षिमनुप्रविष्टाः।
विनिर्ययुः कण्ठपथेन तेषां
मूर्त्ता इव प्राणगणाः खगेन्द्राः ॥२८॥

विसस्रुपुः पेतुः। यथा रवेरंशवोऽन्धिमततीर्विनाश्य प्रतिदिशं विसर्पन्ति तथास्य शराः परेषां प्रहरणपङ्क्तीर्विनाश्य प्रतिदिशं विसस्रुपुरित्युपमा ॥ २६ ॥

रणोद्यतमिति। त्रिदशजनैर्देवलोकैः युद्धकौतुकदर्शनार्थमागतैरित्यर्थः द्विषां शत्रूणां बलं सैन्यं प्रथमं रणोद्यतं युद्धाय कृतोद्योगं सत् उत् उत्तोलिता आयुधानाम् आलिः श्रेणिर्येन तादृशं व्यलोक्यत विलोकितम् अनन्तरं कलितैः तेन कृतैः कबन्धैर्मस्तकशून्ययोधकलेवरैर्बन्धुरम् उन्नतानतं व्यलोक्यत। "कबन्धोऽस्त्री क्रियायुक्तमपमूर्द्धकलेवरम्" इत्यमरः, बन्धुरन्तून्नतानतमिति च। ततस्तस्मात् क्षणात् तत्परमित्यर्थः। दिग्देशकालार्थः पूर्वादिरिति आरादित्वात् गम्यमानपरशब्दयोगेऽपि पञ्चमी। क्षितितले यः संस्तरः शयनीयकटः स इवाचरतीति कर्तुः क्यङ् इत्यादिना क्यङ्: ततः कर्तरि क्तः। तादृशं व्यलोक्यत। सर्वत्र त्रिदशजनैरित्येव कर्ता ॥ २७ ॥

कबन्धेति। कुक्षिमुदरम् अनुप्रविष्टाः युद्धसमये उदरं निर्भिद्य कृतप्रवेशाः खगेन्द्राः काणशेष्ठाः। "खगः सूर्ये ग्रहे देवे मार्गणे च विहङ्गमे" इति विश्वः। कबन्धभावात् अशिरस्कत्वभावं प्राप्य। यज्लोपे पञ्चमी। प्रनृत्यतां वेतालाधिष्ठानेन प्रकर्षेण नृत्यं कुर्वतां तेषां पिशितानि मांसान्यश्नन्तीति ते तथा तेषां राक्षसानां पक्षेऽसुराणाञ्च मूर्ता मूर्तिमन्तः प्राणगणा इव कण्ठपथेन मस्तकापगमात् अनावरणेन गलनालमार्गेण विनिर्ययुः निश्चक्रमुः नृत्य-

उत्कृत्ता अपि विशिखैः सजीवशेषाः
मूर्द्धानः सितदशनोत्कटाः परेषाम्।
संस्कारादभिनरवीरमापतन्तः
खे गृध्रैः कलितकचैरवाक्रियन्त ॥२९॥

शिरांसि तद्विशिखमुखार्पितान्यलं
निषादिनां नभसि निगृह्य चञ्चुभिः।
पतत्त्रिणः क्षणकृतमण्डलभ्रमाः
पदं दधुः परबलकेतुमूर्द्धसु ॥३०॥

वेगेनेति भावः पूर्वं प्राणनिर्गमने जातेऽपि त्वरितवेगेन निर्गच्छत्सु बाणेषु तथाविधप्राणगणत्वसम्भावनया जात्युत्प्रेक्षालङ्कारः ॥ २८ ॥

उत्कृत्ता इति। परेषां शत्रुणाम् आपतन्तः कायात् भूम्यां पतन्तः नतु पतिताः मूर्द्धानः शिरांसि कलितागृहीताः कचाः केशा यैस्ते तथा तैर्गृध्रैः पक्षिभेदैः खे आकाशे अवाक्रियन्त हृता इत्यन्वयः किम्भूताः सजीवशेषाः जीवस्य जीवनस्य शेषेण सह वर्तमानाः किञ्चिज्जीवनवन्तः इत्यर्थः तथा विशिखैर्बाणैः उत्कृत्ता अपि तेन छिन्ना अपि नरेषु वीरो नरवीरो रामः पक्षे नरावतारोऽर्जुनस्तं अभिलक्षीकृत्य संस्कारात् पूर्वजातवैरित्वज्ञानजन्यभावनातः सितैः शुभ्रैर्दशनैर्दन्तैरुत्कटा भयङ्कराः क्रोधवशेन सितदन्तान् प्रकाश्य तं प्रति भङ्गीं कुर्वन्त इत्यर्थः अभिनरवीरं संस्कारादापतन्त इति योजनातु न रुचिरा उत्कृत्तमूर्द्धामाभिमुख्येनापतनासम्भवात् संस्कारजनितापतनस्यागमनरूपतयैव पर्यवसानस्यौचित्यादिति ध्येयम्। प्रहर्षिणीवृत्तम्। 'त्र्याशाभिर्मनजरगैः प्रहर्षिणीयम्' इति लक्षणात् ॥ २९ ॥

शिरांसीति। नभसि आकाशे क्षणं व्याप्य कृतः क्षणेन उत्सवेन कृतोवा मण्डलभ्रमो मण्डलाकारेण भ्रमणं यैस्ते शिरोहरणार्थमिति शेषः पतत्त्रिणः गृध्रादिपक्षिणः तस्य रामस्य पक्षेऽर्जुनस्य विशिखमुखेन बाणमुखेनार्पितानि छित्वा तेभ्योदत्तानि निषादिनां हस्त्यारूढसैन्यानां शिरांसि। 'हस्त्यारोहानि-

रणाचितौ परकरिणां शरक्षतै-

श्चिरं करैरभिलुलुठे भयङ्करैः ।

द्रुतोत्पतत्खगपतितुण्डखण्डित-

भ्रमन्महाविषधरभोगभङ्गिभिः ॥३१॥

शरावलीविदलितकुम्भिकुम्भजा

विरेजिरे रणभुवि मौक्तिकोत्कराः ।

प्रवर्तिताः प्रतिमुखमस्य सम्मदा-

ज्जयश्रिया स्वयमिह लाजवृष्टयः ॥३२॥

पादिन' इत्यमरः। चक्षुभिर्निगृह्य दृढं गृहीत्वा परबलस्य शत्रुसैन्यस्य केतूनां ध्वजानां मूर्द्धसु उपरिभागेषु पदं दधुः स्थानं चक्रुः। अत्र नभसि भ्रमन्नाः पतत्त्रिभ्यस्तद्विशिखमुखकर्तृकशत्रुशिरोदानस्यासम्बन्धेऽपि तत्सम्बन्धकथनाद-तिशयोक्तिः। पूर्वोक्तलक्षणं, रुचिरावृत्तम् ॥ ३० ॥

रणेति। रणाचितौ युद्धभूमौ शरक्षतैः रामस्य पक्षेऽर्जुनस्य वाणच्छिन्नैः परकरिणां शत्रुसम्बन्धिहस्तिनां करैः शुण्डैः भयङ्करैर्भयजनकैः सद्भिश्चिरम् अभिलुलुठे अतितरां लुठितम्। भावे लिट्। किम्भूतैः द्रुतं सवेगं यथा तथा उत्पततः खगपतेर्गरुड़स्य तुण्डेन मुखेन खण्डितश्छिन्नः अतएव भ्रमन्न-भिलुठन् यो महाविषधरस्य वृहत्सर्पस्य भोगः शरीरं तद्वद्भङ्गिश्चेष्टा येषां तैः। भोगः सुखे धने चाहेः शरीर-फणयोरपीति मेदिनी। वृत्त्यनुप्रासः उत्तरार्द्धे लुप्तोपमा च तदनयोरेकाश्रयानुप्रवेशः सङ्करः ॥ ३१ ॥

शरावलीति। रणभुवि युद्धभूम्यां शरावल्या रामस्य पक्षेऽर्जुनस्य वाण-परम्परया विदलिताः खण्डिता ये कुम्भिनां हस्तिनां कुम्भा मस्तकोच्चांशास्तेभ्यो-जाता इति शरावलीविदलितकुम्भिकुम्भजा मौक्तिकप्रकरा मुक्तासमूहा विरेजिरे शुशुभिरे। अत्रोत्प्रेक्षते जयश्रिया जयलक्ष्म्या संमदाद्धर्षात् स्वयं मत्यन्यद्वारा अस्य रामस्य पक्षेऽर्जुनस्य प्रतिमुखं सम्मुखं प्रवर्तिताः प्रयोजिता लाजवृष्टय इव क्रदभिहितभावत्वात् वृष्यमाणलाजा इव अन्या अपि जयिपुरुषं

हृतं शरैः प्रजविभिरुष्णवारणं
दिवि भ्रमत्पवनवशादशोभत।
मनस्विनां मन इव विक्रमोर्जितं
सविभ्रमं भुवनपरिभ्रमोद्यतम् ॥३३॥

तमीक्षितुं प्रतिमुखमाहितोद्यमा
विरोधिनो हृतशिरसः क्षणाच्छरैः।
नभोगताः सपदि सुराङ्गनासखा
व्यलोकयन् मुखमनिमेषदृष्टयः ॥३४॥

प्रति लाजाविक्षेपेण मङ्गलमाचरन्ति। अत्र पूर्वार्द्धे तादृशमौक्तिकोत्कराणामसम्बन्धेऽपि तत्सम्बन्धकथनादतिशयोक्तिरुत्तरार्द्धगतयोत्प्रेक्षयाङ्गाङ्गित्वेन सङ्कीर्यते ॥ ३२ ॥

हृतमिति। प्रजविभिरतिवेगवद्भिः शरैः रामस्य पक्षेऽर्जुनस्य वाणैः हृतं छिन्नं उष्णमातपं वारयतीति उष्णवारणं शत्रूणां छत्रं पवनवशात् दिवि आकाशे भ्रमत् सत् अशोभत। उपमिनोति विक्रमोर्जितं विक्रमैकरसं तथा भुवनस्य लोकस्य परिभ्रमे परिक्रमणे दिग्विजये इत्यर्थः उद्यतमुद्युक्तम् अतएव सविभ्रमं विभ्रान्त्या सहितं चञ्चलमित्यर्थः मनस्विनां प्रशस्तमनस्कानां वीराणां मन इव यथा दिग्विजयार्थं जातोद्यमस्य वीरस्य मनः बहुव्यापाराकुलिततया विभ्रान्तं भवति तथाच्छिन्नमुष्णवारणमित्युपमा यद्वा भुवनानां सम्मुखयुद्धमरणसम्पत्स्यमानस्वर्गलोकानां परिभ्रमे गमने उद्यतं मनस्विनां मानिनां शत्रुवीराणां मन इव। नेदं छिन्नमुष्णवारणम् आकाशे भ्रमति किन्तु युद्धमरणेन लोकान् प्रयास्यतां शत्रूणां मन इवेत्युत्प्रेक्षा ॥ ३३ ॥

तमिति। तं रामं पक्षेऽर्जुनं प्रतिमुखं सम्मुखम् ईक्षितुं कीदृग्वीरोऽयमिति द्रष्टुम् आहितोद्यमाः कृतयत्नाः नतु दृष्टवन्तः दर्शनात् प्रागित्यर्थः शरैस्तस्य वाणैः क्षणात् तत्क्षणमेव हृतशिरसश्छिन्नमस्तका विरोधिनः शत्रवः सपदि तत्क्षणात् नभोगताः सम्मुखयुद्धमरणपुण्येन दिव्यशरीरं प्राप्य स्वर्ग-

दृष्टा विशन्तश्च विनिर्गताश्च
विपाटयन्तो बलमप्रकाशाः।
सतोयदे व्योमनि दृष्टनष्टा-
श्चेरुर्महोल्का इव तस्य बाणाः ॥३५॥

एकेषुणा येऽस्य परे विभिन्ना
न ते द्वितीयस्य शरव्यमासन्।
भिन्दन्ति भानोः प्रथमे तमांसि
शेषाः करा लोकविभूषणाय ॥३६॥

मारोढुम् आकाशगताः तथा सुराङ्गनानाम् अप्सरसां सखायः सुराङ्गनासखाः सन्तः। राजादित्वात् समासान्तः। यतोऽनिमेषा दिव्यमूर्तित्वान्निमेषरहिता दृष्टिश्चक्षुर्येषां ते अतः सुखमविघ्नं यथा तथा तं व्यलोकयन् ददृशुः। अत्र सुखेन दर्शनेऽनिमेषदृष्टित्वस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गं तेन चाङ्गेन असम्बन्धस्य तथाविधविलोकनस्य सम्बन्धकथनरूपातिशयोक्तिः सङ्कीर्यते ॥ ३४ ॥

दृष्टा इति। विशन्तश्च रिपुकायं प्रविशन्तश्च तथा विनिर्गताश्च रिपुकायात् निःसृताश्च दृष्टाः जनानां प्रत्यक्षतां गताः तथा बलं रिपुसैन्यं विपाटयन्तो भिन्दन्तः अप्रकाशा अदृष्टाः प्रवेशनिर्गमकालयोर्दृष्टा भेदनकाले अदृष्टा इत्यर्थः तस्य रामस्य पक्षेऽर्जुनस्य बाणाः सतोयदे मेघसहिते व्योमनि आकाशे दृष्टनष्टाः तोयदप्रवेशनिर्गमकाले दृष्टाः तोयदाभ्यन्तरस्थितिकाले नष्टा अदृष्टाश्च महोल्का इव चेरुर्भ्रमन्तिस्म। उल्का आकाशात्पतंस्तेजोविशेषः, सा च बहुविधा। यदाह काश्यपः। "बृहच्छिखा च सूक्ष्माग्रा रक्तनीलशिखोज्ज्वला। पौरुषेयप्रमाणेन उल्का नानाविधा स्मृता" इति। उपमालङ्कारः ॥ ३५ ॥

एकेषुणेति। अस्य रामस्य पक्षेऽर्जुनस्य एकेषुणा एकेन बाणेन ये परे शत्रवोविभिन्नास्ताडितास्ते द्वितीयस्य बाणस्य शरव्यं लक्ष्यं नासन् न बभूवुः

च्युतानकप्रकटितमानडम्बरा
समन्ततो भृतबहुरत्नभूषणा ।
असुक्षयक्षणिककृतान्तकल्पिता
रणावनिर्विपणिरिव व्यभाव्यत ॥३७॥
दानाम्भोभिः कुम्भिनां पङ्किलान्ता
धावद्रथ्यानेमिसीमन्तदुर्गा

एकबाणेनैव कार्यनिर्वाहात् द्वितीयप्रक्षेपोन कृत इत्यर्थः। लक्षं लक्ष्यं शरव्यञ्चेत्यमरः। अत्र शरव्यशब्दस्याजहल्लिङ्गवचनत्वात् क्लीवत्वमेकत्वञ्च। एतदेव द्रढयति भानोः सूर्यस्य प्रथमे कराः किरणास्तमांसि भिन्दन्ति नाशयन्ति तर्हि अन्येषां किं प्रयोजनमित्यत्राह शेषाः करा लोकानां भुवनानां विभूषणाय अलङ्करणाय। अत्र शरव्यीभवनस्य भेदनस्य च वस्तुत एकरूपत्वात् प्रतिवस्तूपमालङ्कारः ॥ ३६ ॥

च्युतेति। रणावनिः सा युद्धभूमिर्विपणिरिव पण्यवीथिकेव व्यभाव्यत अदृश्यत किम्भूता च्युतैः पतितैः आनकैः पटहैः रणवाद्यविशेषैः प्रकटितो व्यञ्जितो मानस्य परिमाणपात्रविशेषस्य डम्बरो विस्तारो यत्र सा विपणौ च मानपात्राणि तिष्ठन्ति। तथा समन्ततः सर्वतः भृतानि धृतानि मृतदेहात् पतित्वा राशीभूतानीत्यर्थः बहूनि रत्नभूषणानि रत्ननिर्मिताभरणानि यत्र सा पक्षे समन्ततोभृतानि स्थापितानि बहूनि रत्नानि हीरकादीनि भूषणानि च यत्र सा तथा असुक्षयः प्राणवियोगः क्षणिकः क्षणेन निष्पाद्योयस्मात् तादृशो यः कृतान्तो यमस्तेन कल्पिता प्रादुर्भाविता पक्षे असूनां लोकप्राणानां क्षयो-निवासः रक्षणमित्यर्थः। क्षिनिवासगत्योरित्यस्य रूपं। विपणिक्रीतद्रव्योपयोगेनैव लोकाः प्राणान् धारयन्तीति भावः। तत्र क्षणिकः उत्सवान्वितः सोत्साह इत्यर्थः असुक्षयक्षणिकः। 'क्षणः कालविशेषे स्यात् पर्वण्यवसरे महे' इति हेमचन्द्रः। तेन कृता तथा अन्ते नगरस्य ग्रामस्य वा प्रान्तभागे कल्पिता स्थापिता विपणिर्हि पौरजनोपमर्दपरिहाराय प्रायेण प्रान्तभागे स्थाप्यते। अत्र श्लेषमूलातिशयोक्त्यनुप्राणिता उपमा ॥ ३७ ॥

पादातानां सा जघानाजिभूमि-
र्जङ्घालत्वं रक्तजम्बालसादा ॥३८॥
समधिकतरमाजौ राजसूनुर्विरेजे
त्रुटितसुभटकण्ठग्रन्थियन्त्रप्रगुन्नैः ।
रुधिरघुसृणधाराचक्रवालैर्वितन्व-
न्नभिनवजलकेलीविभ्रमं दिग्वधूभ्यः ॥३९॥
सुरद्विषां तुङ्गतरैः कबन्धैः
पतद्भिरुर्वी सुचिरं चकम्पे ।

दानेति । कुम्भिनां हस्तिनां दानाम्भोभिर्मदजलैः पङ्किलं पङ्कयुक्तम् अन्तं स्वरूपं यस्याः सा । 'अन्तं स्वरूपे नाशे न' इति मेदिनी । तथा धावन्ती या रथ्या रथसमूहस्तस्या नेमिभिश्चक्रधाराभिः कृतो यः सीमन्तः सीमन्ताकाररेखा तेन दुर्गा दुःसञ्चारा । सुदुरोरधिकरणे इति अधिकरणे डः । तथा रक्त-जम्बालेन रुधिरकृतपङ्केन सादो गच्छतामवसादो यत्र सा तथाभूता आजिभूमि-र्युद्धस्थली पादातानां पदातिवृन्दानां जङ्घालत्वम् अतिजवेन गन्तृत्वं जघान अनाशयत् । 'जङ्घालोऽतिजवस्तुल्यौ' इत्यमरः । अत्र जङ्घालत्वनाशं प्रति विशेषणत्रयस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम् । शालिनीवृत्तम् ॥ ३८ ॥

समधिकेति । राजसूनू रामः पक्षेऽर्जुनः आजौ युद्धे त्रुटिताश्छिन्ना ये सुभटानां कण्ठग्रन्थयः कण्ठबन्धास्त एव यन्त्राणि शृङ्गकाणि तैः प्रणुन्नैः प्रक्षिप्तैः रुधिरमेव घुसृणं कुङ्कुमं कुङ्कुमाक्तजलमित्यर्थः तस्य धाराचक्रवालैः धारासमूहैः कृत्वा । 'रक्तसंज्ञन्तु कुङ्कुमं जागुडं दीपनं वसं सौरभं घुसृणञ्च तत्' इति त्रिकाण्डशेषः । दिश एव वध्वस्ताभ्यः दिग्वधूरुद्दिश्येत्यर्थः । यदभिप्रेत्य धात्वर्थ इति संप्रदानसंज्ञायां चतुर्थी । अभिनवा मनोज्ञा या जलकेली जलक्रीडा तस्या विभ्रमं विलासं वितन्वन् विस्तारयन् सन् समधिकतरमतितरां विरेजे शुशुभे । अन्योऽपि राजसूनुर्वधूभिः सह शृङ्गोत्क्षिप्तकुङ्कुमजलेन क्रीडति । साङ्गरूपकम् । मालिनीवृत्तम् ॥ ३९ ॥

प्राक्खण्डिताग्रैरनुकृत्तमूलै-
र्महाद्रुमाणामिव मध्यकाण्डैः ॥४०॥

वाणव्रातव्रणितवपुषां पेतुषां कुञ्जराणा-
मङ्गादग्र्यात् कुलिशदलितोत्तुङ्गभूभृन्निभानाम् ।
सद्यः प्रोहुः प्रतिदिशमसृक्सिन्धवो मेरुमूल-
भ्रश्यज्जम्बूफलरससरित्पूरसौभाग्यभाजः ॥४१॥

सुरेति। सुरद्विषां राक्षसानां पक्षे निवातकवचानां पतद्भिः रथादिभ्य इतिशेषः तुङ्गतरैर्वृहद्भिः कबन्धैरपमूर्द्धकलेवरैः बाहुभिर्वा उर्वी पृथ्वी सुचिरं चकम्पे कम्पिता। "कबन्धोऽस्त्री क्रियायुक्तव्यपमूर्द्धकलेवरे। क्लीवं जले पुंस्युदरे बाहुरक्षोविशेषयोः" इति मेदिनी। उपमिनोति प्राक् प्रथमं खण्डितं छिन्नमग्रं येषां तैः तथा अनु पश्चात्कृत्तं छिन्नं मूलं येषां तैः महाद्रुमाणां वृहद्वृक्षाणां पतद्भिर्मध्यकाण्डैः मध्यप्रकाण्डैरिव तैर्यथा उर्वी कम्पते तथेत्यर्थः। अत्रोपमानविशेषणद्वयं पतनसौकर्यार्थं नतु सादृश्यद्योतनार्थं उपमेये तथानुपादानात् ॥ ४० ॥

वाणेति। वाणानां व्रातेन समूहेन व्रणितानि क्षिचानि वपूंषि येषां ते तथा तेषां तथा कुलिशेन वज्रेण दलिता विदारिता ये उत्तुङ्गभूभृतोवृहत्पर्वतावयवास्तेषां निभा सादृश्यं यत्र ते तथा तेषां पेतुषां पतितवताम्। पतेर्वस्वन्तात् षष्ठीबहुवचनम्। कुञ्जराणां हस्तिनां अग्र्यात् अग्रभवात् अङ्गात् कण्ठादित्यर्थः। जात्याश्रयणादेकवचनम्। असृक्सिन्धवः रक्तनद्यः प्रतिदिशं दिशिदिशि सद्यः प्रोहुः प्रकर्षेण वहन्तिस्म किम्भूताः मेरुमूले सुमेरुपादे भ्रश्यन्ति जम्बूवृक्षात्पतन्ति यानि जम्बूफलानि तेषां रसेन रसस्य वा या सरित् जम्बूनदी तस्याः पूरस्य प्रवाहस्य सौभाग्यं सौन्दर्यं भजन्त इति ताः। अत्रान्यसौभाग्यस्यान्यकर्तृकभजनासम्भवात् विम्बप्रतिविम्बभावे पर्यवसानान्निदर्शनालङ्कारः भूभृन्निभानामित्युपमया सङ्कीर्णः। मन्दाक्रान्ता-वृत्तम् ॥ ४१ ॥

नीहारसंक्षिप्तमिवाब्जषण्डं
कल्पानलालीढमिवार्णवाम्भः।
शरन्मरुन्नुन्नमिवाभ्रवृन्दं
बलं कथाशेषमभूत् परेषाम् ॥४२॥

इति स सुभटदर्शं विद्विषां सम्प्रमाथा-
द्विरचितगुरुगुप्तिर्भूर्भुवःस्वस्त्रयस्य।
विबुधमुनिनुतश्रीर्वर्द्धयन् धर्मधाराः
कृतसुरपतितोषः सोदराभ्यर्णमागात् ॥४३॥

सोऽथ तीव्रविरहव्यथाहरैः
शृण्वतां श्रवणमार्गपावनैः।

नीहारेति। नीहारेण हिमेन संक्षिप्तं निःशेषितम् अब्जषण्डमिव पद्मकदम्बमिव। "अब्जादिकदम्बे षण्डमस्त्रियां" इत्यमरः। तथा कल्पानलेन प्रलयाग्निना आलीढं शोषितम् अर्णवाम्भः समुद्रजलमिव तथा शरन्मरुता शरत्कालसम्बन्धिवायुना नुन्नं विक्षिप्तम् अभ्रवृन्दं मेघसमूह इव परेषां शत्रूणां बलं सैन्यं कथाशेषं कथैव शेषोयेषां तादृशम् अभूत् नाशं प्रापेत्यर्थः। अत्र एकस्य बलस्य बहुभिरुपमीयमानत्वात् मालोपमा ॥ ४२ ॥

इतीति। इत्येवं सुभटदर्शं सुभटान् दृष्ट्वा। साकल्ये दृशविद इति णमुल्। विद्विषां शत्रूणां संप्रमाथात् सम्यक् नाशनात् भूर्भुवःस्वस्त्रयस्य भूरादिलोकत्रयस्य विरचिता विहिता गुरुर्महती गुप्तीरक्षा येन सः तथा विबुधैर्देवैर्मुनिभिश्च नुता स्तुता श्रीर्जयलक्ष्मीर्यस्य सः तथा धर्मस्य धर्मकर्मणो-धाराः परम्पराः वर्द्धयन् बाहुल्येन प्रवर्तयन् अतएव कृतः सुरपतेरिन्द्रस्य तोषोयेन तादृशः स रामः पक्षेऽर्जुनः सोदरस्य भ्रातुर्लक्ष्मणस्य पक्षे सोदराणां सहोदराणां युधिष्ठिरादीनाम् अभ्यर्णं समीपम् आगात् आगतवान्। रामायण-पक्षे लक्ष्मणस्य सुमित्रापुत्रत्वेन सोदरत्वाभावात् सोदरपदस्य भ्रातरि लक्षणा। सम्प्रमाथादिति हेतुर्विशेषणचतुष्टयेऽन्वेति। मालिनीवृत्तम् ॥ ४३ ॥

आत्मवृत्तकथनैः समादधे
दारसोदरमनःप्रहर्षणम् ॥४४॥
सोत्कण्ठया तीव्रवियोगखेदा-
द्भुजोपपीडं प्रिययोपगूढः ।
नरेन्द्रसूनुः सुतरां विरेजे
रत्येव युक्तो भुवि कामदेवः ॥४५॥

इति राघवपाण्डवीये महाकाव्ये चतुर्थः सर्गः ।

स इति । अथानन्तरं स रामः पक्षेऽर्जुनः तीव्रा दुःसहा या विरहव्यथा वियोगजनितपीड़ा तां हरन्तीति तैः । पक्षे तीव्रोबहुकालीनोयोविरहस्तज्जनितव्यथापहारकैः तथा श्रवणवतां तेषां श्रवणमार्गपावनैः कर्णविवरपावित्र्यजनकैः अत्यद्भुतत्वात् श्रवणवद्भिः साभिनिवेशं श्रूयमाणैरित्यर्थः आत्मनो यद्वृत्तं राक्षससैन्यवधरूपं पक्षे पाशुपताद्यस्त्रप्राप्तिपूर्वकनिवातकवचवधपर्यन्तं चरितं तस्य कथनैः । कथ्यमानस्य बाहुल्याद्बहुवचनम् । दाराणां सीतायाः पक्षे द्रौपद्याः सोदरस्य भ्रातुर्लक्ष्मणस्य च । पूर्ववल्लक्षणा । पक्षे सोदराणां युधिष्ठिरादीनां मनसः प्रहर्षणं सन्तोषणं समादधे चकार । रथोद्धतावृत्तम् । "रान्नराविह रथोद्धता लगौ" इति लक्षणात् ॥ ४४ ॥

स इति । स नरेन्द्रसूनू रामः पक्षेऽर्जुनः तीव्रवियोगखेदात् दुःसहविरहखेदात् सोत्कण्ठया उत्सुकया प्रियया सीतया पक्षे द्रौपद्या भुजोपपीडं भुजाभ्यामुपपीड्य । कर्षतिवधोपपीड़ इति णमुल् । उपगूढ़ आलिङ्गितः सन् भुवि भूम्यां सम्बरणदे इत्यर्थः तदानीमेव रत्या विरहखेदोत्कण्ठया कामदेवालिङ्गनसम्भवात् । रत्या स्वभार्यया युक्त उपगूढ़ः कामदेव इव कन्दर्प इव रत्या प्रीत्या युक्तः कामदेव एतत्काव्यप्रवर्त्तकनृप इवेति वा सुतरामतितरां विरेजे । उपमेयं श्रौती ॥ ४५ ॥

इति श्रीप्रेमचन्द्रतर्कवागीशभट्टाचार्य्यविरचितायां राघवपाण्डवीयमहाकाव्यटीकायां कपाटविपाटिकाख्यायां चतुर्थः सर्गः ।

## पञ्चमः सर्गः ।

तीर्थानामभिगमनादघं नुदन्तः
शृण्वन्तो मुनिगदिताः कथाश्च दिव्याः ।
पश्यन्तो नगवननिम्नगाश्च कालं
द्राघिष्ठं दिनमिव ते सुखेन निन्युः ॥ १ ॥

स्वाध्यायैरतिथिजनार्चनैः सहोमै-
र्भूतानां बलिहरणैः स्वधाभरैश्च ।
संवासेष्वथ महताञ्च सत्कथाभि-
स्ते नैकं दिनमपि बन्ध्यतामनैषुः ॥ २ ॥

तीर्थानामिति। ते रामादयः पक्षे युधिष्ठिरादयः तीर्थानाम् अभिगमनात् अघं पापं दुःखं वा नुदन्तः नाशयन्तः। "अघन्तु व्यसने दुःखे दुरिते च नपुंसकम्" इति मेदिनी। तथा मुनिभिर्गदिता दिव्यामनोज्ञाः कथा इतिहासांश्च शृण्वन्तः तथा नगाः पर्वताः वनानि काननानि निम्नगा नद्यश्च ताः पश्यन्तश्च सन्तः सुखेन तत्तद्व्यापारजनितानन्देन हेतुना द्राघिष्ठम् अतिदीर्घं कालं दिनमिव एकाहमिव निन्युर्यापयामासुः सुखेन वनवासदुःखं न गणयामासुरिति भावः। उत्प्रेक्षालङ्कारः। प्रहर्षिणीवृत्तम्। "त्र्याशाभिर्मनजरगाः प्रहर्षिणीयम्" इति लक्षणात् ॥ १ ॥

स्वाध्यायैरिति। ते रामादयः पक्षे युधिष्ठिरादयः स्वाध्यायैर्वेदपाठैः तथा अतिथिजनानाम् अर्चनैः पूजनैः तथा सहोमैरग्निहोत्रीयहोमसहितैर्भूतानां बलिहरणैर्बलिकर्मभिः तथा स्वधाभरैर्नित्यश्राद्धतर्पणैश्च अथ किञ्च महतां मुनीनां संवासेषु वसतिषु सत्कथाभिर्धर्मप्रधानालापैश्च एकं दिनमपि बन्ध्यताम् अफलतां न अनैषुः प्रापयामासुः अपितु वनवासकर्षिता अपि सर्वाण्यपि दिनानि पञ्चयज्ञसत्कथादिभिः सफलानि चक्रुरित्यर्थः। "पाठो-

महाजगरसन्नद्धभीमसेनाभयङ्करात्।
राज्ञः प्रभावाद्दधिरे रोमहर्षं महर्षयः ॥३॥

स रक्षसां क्रोधवशेन सद्यो-
गणेन युद्धे यमसात्कृतेन।
श्रुतिं प्रयातेन पुलस्त्यनप्तु-
र्दुर्मानसं क्षोभयतिस्म भीमः ॥४॥

होमश्चातिथीनां सपर्य्या तर्पणं वलिः। एते पञ्च महायज्ञा ब्रह्मयज्ञादिनामका" इत्यमरः॥ २ ॥

महेति। महर्षयो मुनयः महता जगरेण कवचेन। "उरश्छदः कङ्कटकोजगरः कवचोऽस्त्रियाम्" इत्यमरः। सन्नद्धा वर्मिता या भीमाः भयजनिकाः सेना राक्षसबलानि तासामपि भयङ्करात् राज्ञो रामस्य प्रभावात् प्रतापात् रोमहर्षं रोमाञ्चं दधिरे धारयामासुः रामस्य तादृशं प्रभावं दृष्ट्वा मुनयो विस्मिता बभूवुरित्यर्थः।

पक्षे महता अतिदीर्घकायेन अजगरेण अगस्त्यशापादजगरसर्पतां प्राप्तेन नहुषराजेन सन्नद्धस्य वेष्टितस्य भीमसेनस्य अभयङ्करात् ततो मोचनेनाभयप्रदायकात् राज्ञो युधिष्ठिरस्य प्रभावात् महर्षयो रोमहर्षं दधिरे। धन्योऽयं राजा यत्प्रभावात् नहुषाजगरबन्धनादपि भीमोमुक्त इति विस्मयं प्रापुरित्यर्थः। पुराकिल नहुषराजोदेवैरिन्द्रत्वं प्रापितः कालेनैश्वर्यमदगर्व्वितो मान्यानवजानन्नगस्त्येन स्वाराज्यात् च्यावयित्वाजगरतां नीतोवने तिष्ठन् यदृच्छया मृगयार्थे पर्यटन्तं भीमसेनं वेष्टितवान् ततश्च युधिष्ठिरेणागत्य प्रश्नोत्तरप्रदानसम्भाषणैस्तस्माद्भीमः स च शापान्मोचित इति भारतीया भारती। "रोमहर्षं महर्षय" इति छेकानुप्रासः॥ ३ ॥

स इति। भीमोराक्षसानां भयङ्करः स रामः युद्धे सद्यो यमसात्कृतेन यमाय दत्तेन विनाशितेनेत्यर्थः पुलस्त्यनप्तूरावणस्य श्रुतिं प्रयातेन सूर्पणखया श्रवणविषयतां नीतेनेत्यर्थः क्रोधवशेन क्रोधयुक्तेन रक्षसां खरादीनां गणेन समूहेन हेतुना पुलस्त्यनप्तुर्दुर्मानसं निन्दितं मनः क्षोभयतिस्म क्षोभयामास राम-

वनेऽपि सा सङ्गतसत्यभामा
सम्भाव्यमाना मुनिदारवर्गैः ।
पुष्पैरपूर्वैर्दयितोपनीतैः
कृतावतंसा विरराज राज्ञी ॥५॥

निहतान् खरादीन् सूर्पणखामुखात् श्रुत्वा रावणस्य मनसि क्षोभोजात इत्यर्थः। पुलस्त्यनप्तुरिति काकाक्षिन्यायादुभयत्रान्वेति।

पक्षे स भीमो भीमसेनः युद्धे सद्यो यमसात्कृतेन तथा श्रुतिं प्रयातेन श्रुतेन क्रोधवशेन क्रोधवशसंज्ञितेन। एकेन निहताः संख्ये रणे क्रोधवशगणा इति भारतोक्तेः। रक्षसां गणेन मणिमत्प्रधानेन समूहेन हेतुना पुलस्त्यनप्तुः कुवेरस्य दुर्मानसं दैवत्वात् सदा प्रसन्नमपि तदानीमागन्तुकक्रोधोदयात् विकृतं चित्तं क्षोभयतिस्म दुर्निन्दितं यथा तथेति क्रियाविशेषणं वा। सौगन्धिकाहरणार्थं द्रौपद्या प्रोत्साहितो भीमोगन्धमादनशिखरमारुह्य मणिमत्प्रभृतिकुवेरानुचरक्रोधवशसंज्ञितराक्षसगणवधं कृतवान् तच्छ्रुत्वा कुवेरः किञ्चिज्जातकोपइव तत्रागत्य अगस्त्यशापमनुस्मृत्य पाण्डवान् प्रति तुतोषेति भारतम्। यद्यपि आजगरोपाख्यानात् पूर्वमेव यक्षयुद्धं भारते वर्णितं तथापि रामायणपक्षानुरोधात् श्लेषसौकर्यसम्पादनायात्र कविना वर्णितं नात्यन्तदूषणमावहतीति ध्येयं एवमुत्तरत्रापि ज्ञेयम् ॥४॥

वन इति। सा राज्ञी सीता दयितेन पत्या रामेण दयितेन स्निग्धेन लक्ष्मणेन वा उपनीतैरपूर्वैर्मनोज्ञैः पुष्पैः कृतावतंसा कृतकर्णपूरा कृतशेखरा वा सती। "अवतंसो न स्त्रियां स्यात्कर्णपूरे च शेखरे" इति मेदिनी। वनेऽपि विरराज शुशुभे। किम्भूता सङ्गतः प्राप्तः सत्यः सफलो भाम क्रोधो यया सा यद्वा सङ्गता दृष्टा सत्यः साध्व्यः अनुसूयाप्रभृतयो यया सा सङ्गतसती अतएव अभामा अक्रोधा अनुसूयोपदेशात् पतिं प्रति क्रोधशून्या इत्यर्थः। भाम इति भाम क्रोधे इत्यस्य घणिरूपम्। सङ्गताः सत्यं भा दीप्तिर्मा लक्ष्मीश्च ता यया सा इति बहवः। तथा मुनिदारवर्गैः सम्भाव्यमाना आद्रियमाणा।

पक्षे दयितेन भीमेन उपनीतैः कुवेरसरस आनीतैरपूर्वैः पूर्वमदृष्टैः पञ्चवर्णैः पुष्पैः कृतावतंसा सती सा राज्ञी द्रौपदी वनेऽपि विरराज किम्भूता सङ्गता

निशाचरेषु क्षयितेषु तत्र
प्रवृत्तयज्ञोत्सवपुण्यघोषे।
समं मुनीन्द्रैः सुखमध्युवासं
प्रहृष्टदारावरजः स राजा ॥६॥
ततो रथव्यावृतघोषयानः
सुरेन्द्रसेनाकृतरोषबन्धः।
अजातशत्रूद्यमरक्षितात्मा
मायी रिपुस्तद्वनगोचरोऽभूत् ॥७॥

पतिवशीकरणोपायजिज्ञासार्थं सम्प्राप्ता सत्यभामा कृष्णपत्नी यां सा पाण्डव-सम्भावनाय आगतेन कृष्णेन सह सत्यभामाप्यागता तया च द्रौपदी सङ्गते-त्यर्थः शेषं तुल्यम् ॥ ५ ॥

निशेति। निशाचरेषु खरादिषु क्षयितेषु नाशितेषु सत्सु अतएव प्रवृत्ता निर्विघ्नमारब्धा यज्ञा उत्सवा हर्षप्रधानव्यापाराः पुण्यघोषा वेदध्वनयश्च यस्मिन् तत्र वने स राजा रामः प्रहृष्टामुदिता दाराः सीता अवरजो लक्ष्मणश्च यस्य तादृशः सन् मुनीन्द्रैः समं सह सुखमक्लेशं यथा तथा अध्युवास अध्यतिष्ठत्। क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशत इति न्यायात् तत्रेत्यत्राधिकरणत्वं नत्वधिवसतियोगे कर्मत्वमिति ध्येयम्।

पक्षे स राजा युधिष्ठिरः निशाचरेषु सरीरचक्रराक्षसेषु क्षयितेषु भीमेन नाशितेषु सत्सु। तत आगत्येत्यत्राध्याहार्यम्। प्रवृत्तयज्ञोत्सवपुण्यघोषे तत्र द्वैतवने प्रहृष्टदारावरजः मुदितद्रौपदीभीमाद्यनुजः सन् मुनीन्द्रैर्मार्कण्डेयादिभिः समं सुखमध्युवास ॥ ६ ॥

तत इति। ततस्तदनन्तरं रिपूरावणः मायी मायावान् मायया कृत-भिक्षुवेश इत्यर्थः तादृशः सन् तद्वनगोचरोऽभूत् रामाश्रमोपलक्षितवनगतो बभूव सीताहरणार्थमिति शेषः किम्भूतः रथस्य व्यावृतौ निवारितौ घोषश्चक्र-

अथ स्फुरच्चित्रमृगोपलब्ध्यै
दूरं गते सावरजे नरेन्द्रे।
तदाश्रमोपान्तमवाप लोभा-
ज्जयद्रथस्तीव्रतरादशास्यः ॥८॥

ध्वनिर्यत्र तादृशी यात्रा गमनं यस्य सः रामाभिज्ञानशङ्कया मन्दचालनया निःशब्देन रथेन कृतागमन इत्यर्थः तथा सुरेन्द्रसेनासु कृतोरोषबन्धो येन सः देवपक्षविरोधीत्यर्थः तथा अजातः शत्रुर्यस्य सोऽजातशत्रू रामस्तस्य उद्यमात् मारणोद्योगात् रक्षितो गोपित आत्मा देहो येन सः रामकर्तृकस्ववधमाशङ्क्य प्रच्छन्नात्मना तद्वनं प्रविष्ट इत्यर्थः।

पक्षे मायी घोषावेक्षणच्छलवान् रिपुर्दुर्योधनः रथैर्व्यावृता सम्पादिता घोषेषु द्वैतवनस्थाभीरपल्लीषु यात्रा येन स गवां प्रत्यवेक्षणार्थं वत्सानामङ्कनार्थञ्च विहितघोषयात्राच्छल इत्यर्थः ततश्च ऐश्वर्यदर्शनया पाण्डवानां परितापनार्थं तद्वनगोचरः पाण्डवाधिष्ठितद्वैतवनगतः सन् ततश्च सुरेन्द्रसेनासु इन्द्रप्रेरितचित्रसेनप्रधानगन्धर्वसैन्येषु कृतरोषबन्धः गन्धर्वैः कृतेन आश्रमप्रवेशनिवारणेन जातक्रोधो युद्धं कुर्वन् तैः पराजित्य बद्धानीयमान इत्यर्थः यद्वा सुरेन्द्रसेनाभिः कृतोरोषेण बन्धोयस्य सः। ततश्च अजातशत्रोर्युधिष्ठिरस्य उद्यमेन चेष्टया रक्षितात्मा संस्थापितजीवनोऽभूदिति भारतानुरोधादन्वयः ॥७

अथेति। अथानन्तरं स्फुरन् शोभमानो यश्चित्रमृगः मायया अद्भुतमृगरूपधारी मारीच इत्यर्थः तस्योपलब्ध्यै लाभाय सावरजे सलक्ष्मणे नरेन्द्रे रामे दूरं गते सति अत्र पूर्वपश्चाद्भावेन गमनं वोध्यं, पूर्वं रामोगतः पश्चात् रामस्येव मारीचस्यार्तस्वरं श्रुत्वा अनिष्टमाशङ्कमानया सीतया प्रेरितो लक्ष्मणोऽपि गत इत्यर्थः जयन् जययुक्तोरथो यस्य सः तथा तीव्रं उत्कटं तरोवेगो यस्य सः। "रंहस्तरसी तु रयः स्यद" इत्यमरः। तादृशोदशास्यो रावणः लोभाद्धेतोः सीतायामिति शेषः तदाश्रमस्य रामाश्रमस्य उपान्तं समीपं अवाप।

पक्षे सावरजे भीमादिसहिते नरेन्द्रे युधिष्ठिरे चित्रा, बहुविधामृगामृगजातयस्तेषाम् उपलब्ध्यै मृगयार्थमित्यर्थः दूरं गते सति अशास्यः धनयौवनादिमदाददम्यो जयद्रथस्तन्नामा सिन्धुराजः तीव्रतरादत्युद्रिक्तात् लोभात्

स तत्र कृष्णाञ्चितमीनलोचनां
निरीक्ष्य मूर्तिं जनकान्वयश्रियः ।
वशं प्रपेदे वशिभिर्विगर्हितं
स्मरस्य मृत्योरथवा दुरत्ययम् ॥८॥
अलोकसम्भाव्यमसौ विलोक्य
तदङ्गसौन्दर्यमनङ्गनुन्नः ।

द्रौपद्यामिति शेषः तदाश्रमोपान्तं पाण्डवाश्रमनिकटम् अवाप विवाहार्थमन्यत्र गच्छन् यदृच्छयातिरूपवतीं द्रौपदीं दृष्ट्वा तद्धरणार्थं तदाश्रमसमीपं जगामेत्यर्थः ॥८॥

स इति । स रावणः तत्राश्रमे कृष्णेन कज्जलेन अञ्चिते अर्चिते मीनवत् चपलशफरवल्लोचने यस्याः सा तथा तां जनकान्वयस्य विदेहवंशस्य श्रीः शोभा यतः सा तथा तस्याः अथवा जनके जनकवंशेऽन्वयः सम्बन्धोयस्यास्तादृशी या श्रीर्लक्ष्मीस्तस्याः सीतायामूर्तिं निरीक्ष्य वशिभिर्जितेन्द्रियैर्विगर्हितं निन्दितं स्मरस्य कामस्य वशम् अधीनत्वं प्रपेदे प्राप अथवा किम्बा दुरत्ययं दुर्निवार्य्यम् अवश्यभाव्यमित्यर्थः मृत्योर्यमस्य मरणस्य वा वशं प्रपेदे एतेनैवोपोद्घातेन मृत्योरवश्यम्भावादिति भावः ।

पक्षे स जयद्रथः तत्र द्वैतवने जनाएव जनकास्तान् भाग्यवत्पुरुषान् अन्वेति अनुगच्छतीति जनकान्वया तेष्वन्वयोयस्याः सा इति वा तादृशी या श्रीर्लक्ष्मीस्तस्यामूर्तिं मूर्तिमिव साक्षाल्लक्ष्मीरूपामित्यर्थः जनकान्वयश्रियः सीताया मूर्तिमिवेति कश्चित् । जितोमीनोयाभ्यां ते चपलमीनादप्यतिरमणीये इत्यर्थः लोचने यस्याः सा तथा तां कृष्णां द्रौपदीं निरीक्ष्य । "कृष्णा स्यात् द्रौपदीनीलीकणाद्राक्षासु योषिति" इति मेदिनी । स्मरस्य वशं प्रपेदे अन्यत् समानम् । अत्र विरुद्धयोः स्मरवशत्वयमवशत्वप्राप्त्योरावर्णनात् विकल्पालङ्कारः । "विकल्पस्तुल्यबलयोर्विरोधश्चातुरीयुत" इति लक्षणात् ॥८॥

अलोकेति । असौ रावणः पक्षे जयद्रथः अनङ्गनुन्नः कामवशगः सन्

एवं वितर्कं मनसा चकार
सहेन्द्रियैस्तन्मयतां गतेन ॥१०॥

धाता ध्याननिमीलिताक्षिनिकरः कैश्चित्पदार्थैर्नवैः
सृष्ट्वेमां तदवस्थएव नियतं यज्ञक्षमायामधात्।
यद्युन्मीलितदृष्टिसृष्टममुना क्वाप्येतदीयं वपुः
क्व ध्यानं क्व तपः क्व चास्य नियमः क्व ब्रह्मवादेरतिः ॥११॥

अलोकसम्भाव्यं लोकेषु असम्भावनीयम् अप्राप्यमित्यर्थः तस्याः सीतायाः पक्षे द्रौपद्या अङ्गसौन्दर्यं देहसौष्ठवं विलोक्य इन्द्रियैश्चक्षुरादिभिः सह तन्मयतां तद्रूपतां गतेन तदाकारतया परिणतेनेत्यर्थः। यथा तडागोदकं छिद्रान्निर्गत्य कुल्यात्मना केदारान् प्रविश्य तद्वदेव चतुष्कोणाद्याकारं भवति तथा तैजसमन्तःकरणमपि चक्षुरादिना निर्गत्य घटादिविषयं गत्वा घटाद्याकारेण परिणमते इति वेदान्तिनः। तादृशेन मनसा एवं वक्ष्यमाणप्रकारं वितर्कं विविधविचारं चकार। "तर्कौविचारः सन्देहाद्भ्रूशिरोऽङ्गुलिनर्तक" इति दर्पणः ॥१०॥

वितर्कमेवाह धातेति।

धाता ब्रह्मा ध्याने ध्यानाय वा निमीलितो मुद्रितोऽक्षिनिकरश्चतुर्मुखत्वादष्टौ चक्षूंषि यस्य तादृशः सन् नवैर्नूतनैर्नतु पुरातनैः पृथिव्यादिभिः कैश्चिदनिर्वचनीयैः पदार्थैरिमां सीतां पक्षे द्रौपदीं सृष्ट्वा निर्मायसृष्टिकर्ममात्रव्यापृतस्य ध्यानकालेऽपि सृष्टेरयोगादिति भावः नियतं नूनं तदवस्थएव निमीलिताक्षिनिकरः सन्नेव यज्ञक्षमायां लाङ्गलकर्षणीयजनकयज्ञभूम्यां पक्षे द्रुपदयज्ञवेद्याम् अधात् स्थापयामास। कुत एतदित्यर्थापत्त्या उपपादयति यदीति यदि अमूना धात्रा उन्मीलिता विकाशिता दृष्टयश्चक्षूंषि यत्र तद्यथा स्यात्तथा क्वापि मुखाद्यङ्गे। पर्वते नितम्बेहुताशन इत्यादिवदवच्छेदे सप्तमी मुखाद्यवयवावच्छेदेनेत्यर्थः। एतदीयं सीतासम्बन्धि पक्षे द्रौपदीसम्बन्धि वपुः सृष्टं निर्मितं स्यादिति शेषः अनन्तरं तदेत्यध्याहार्य तदा अस्य धातुर्ध्यानं तत्त्व-

अभियोक्तुमात्मविशिखेन शिवं
यदि रूपमेतदवलम्ब्य पुरा ।
अयतिष्यत ध्रुवमयुग्मशरो
ननु नाभविष्यदशरीरइति ॥१२॥

सकामः कामोऽस्यामपि निजवधूकोपचकितः
प्रवृत्तानां स्वैरं सकलजनचित्तप्रमथने ।

चिन्तनं क्व कुत्र तिष्ठेदिति शेषः एवं तपस्तपस्या च क्व तथा नियमः संयमश्च क्व तथा ब्रह्मवादे वेदपाठे आत्ममीमांसायाम्वा रतिरनुरागः क्व ध्यानादीनां विशुद्धसत्त्वान्तःकरणसाध्यत्वात् तस्य च उन्मीलितदृष्टिसृष्टौ तदीयवपुः-सौन्दर्यदर्शनेन मुग्धत्वात् न तत्र तेषामवकाश इति तस्मात् ध्याननिमीलिताच्चिनिकरोभूत्वा धाता इमां निर्माय तदवस्थएव यज्ञभूमौ स्थापितवानित्यनुमानालङ्कारः स च नियतशब्दस्य न्यूनार्थकत्वे उत्प्रेक्षया अतदर्थकत्वे असम्बन्धे सम्बन्धरूपयातिशयोक्त्या सङ्कीर्यते ॥११॥

अभियोक्तुमिति। अयुग्मशरः पञ्चवाणः कामः पुरा आत्मविशिखेन स्ववाणेन शिवम् अभियोक्तुं प्रहर्तुं विशिखप्रहारेण शिवं भग्नसमाधिं कर्तुमित्यर्थः यदि एतत् सीतासम्बन्धि पक्षे द्रौपदीसम्बन्धि रूपं सौन्दर्यं स्वरूपं वा अवलम्ब्य आश्रित्य सहायं कृत्वेत्यर्थः ध्रुवमिति वितर्के अयतिष्यत यत्नमकरिष्यत् ननु तर्हि अशरीर इति अनङ्ग इति नाम्ना ख्यातोनाभविष्यत्। उभयत्र क्रियाया अनिष्पत्तौ लृङ्। पुरा कामेन पार्वतीरूपमवलम्ब्य शिवे विशिखपातः कृतः तच्च रूपं नेष्टमतः शिवं नामोहयत् ततश्च कुपितः स भगवान् तं भस्मावशेषं चकार एतद्रूपावलम्बने तु न तथा स्यादिति पार्वतीरूपापेक्षया-तद्रूपस्योत्कर्षातिशय इति व्यतिरेकालङ्कारोध्वन्यते। प्रमिताक्षरावृत्तं, "प्रमिताक्षरा सजससैः कथिता" इति लक्षणात् ॥१२॥

सकाम इति। कामः कन्दर्पः अस्यामपि न केवलमात्मपत्न्यां रत्यामेव किन्तु अस्यां सीतायामपि पक्षे द्रौपद्यामपि सकामः साभिलाष इत्यनुमिनो-

स्वयं लक्ष्यीभावं किल निजशराणां परिहर-
न्ननङ्गत्वं गत्वा मम हृदयदुर्गं निविशते ॥१३॥

भवतु शतमखस्य स्वर्गलोकाधिपत्यं
भवतु तदुपभोग्या नन्दनोद्यानलक्ष्मीः।
भवतु सततफुल्लं वृक्षसहस्रं तदीयं
सकलमफलमस्याः प्रेक्ष्यतां योन यातः ॥१४॥

मीति शेषः कुत एतदनुमानमित्याह यतः सः निजवधूरतिः तस्याः कोपाशङ्कितस्वान्तः सन् तथा सकलजनचित्तप्रमथने स्वपरविवेकाभावेन सकामजनमात्रहृदयोन्मादने स्वैरं स्वच्छन्दं न तु प्रयोक्तृप्रयोगसापेक्षं यथा तथा प्रवृत्तानां निजशराणां स्वयं स्वस्य लक्ष्यीभावं लक्ष्यत्वं परिहरन् अत्र चकारोऽध्याहार्यः परित्यजंश्च किलेत्युत्प्रेक्षायाम् अनङ्गत्वम् अशरीरत्वम् अथच प्रच्छन्नशरीरत्वं गत्वा मम रावणस्य पक्षे जयद्रथस्य हृदयमेव दुर्गं निविशते प्रविशति। न्याधाहिशादेरित्यात्मनेपदम्। अन्योऽपि कुतश्चिद्भयेन वाणपातवारणार्थंश्च प्रच्छन्नशरीरोभूत्वा दुर्गमाश्रयति एतेनास्यामतितरां सकामोऽस्मीति भावः। उत्प्रेक्षालङ्कारः, शिखरिणीवृत्तम् ॥ १३ ॥

इमामनधिगच्छतोमच्छद्प्यैश्वर्यं वृथेत्याह।

भवत्विति। शतमखस्य तिष्ठतु तावदन्येषां वार्ता शतमखानुष्ठानजनितपुण्यशालिन इन्द्रस्य स्वर्गलोकाधिपत्यं स्वाराज्यं भवतु तिष्ठतु तथा तेन शतमखेन उपभोग्या नन्दनोद्यानलक्ष्मीर्नन्दनवनसम्पत्तिर्भवतु तथा सततफुल्लं देवत्वेन निमेषशून्यत्वात् निरन्तरविकसितम्। स्तोकनम्रा स्तनाभ्यामित्यादिवत् क्रियाविशेषणस्यापि समासोवैवक्षिकः। तदीयं शतमखसम्बन्धि दृक्सहस्रं भवतु किन्तु तस्य सकलं स्वर्गलोकाधिपत्यादि सर्वम् अफलं निरर्थकम्। कुत इत्याह यः शतमखः अस्याः सीतायाः पक्षे द्रौपद्याः। कर्तरिषष्ठी। प्रेक्ष्यतां साभिलाषदर्शनविषयतां न यातो न गतः। प्रेक्षितामिति पाठे अस्या इति कर्मणि षष्ठी अयं पाठः सम्यक् अतएव सततफुल्लदृक्सहस्रोत्कीर्तनं

अविरतमखदीक्षाजातसंस्कारजाड्यं
स्फुटतरमरसज्ञं मन्महे नाकनाथम्।
भवति यदि स ईदृग्रूपवेशान्तरज्ञ-
श्चिरतरमकलत्रः स्यात्कथं गोतमोऽसौ ॥१५॥
अस्याः स्फुटं माल्यकदामशोभि
वेणीगुणोत्कर्षमलिम्लुचानाम्।

मङ्गच्छति। अत्र इमां विना इन्द्रस्य स्वाराज्यादिकं विफलमिति विनोक्त्य-लङ्कारो ध्वन्यते। मालिनीवृत्तम् ॥ १४ ॥

अविरतेति। नाकस्य स्वर्गस्य नाथम् इन्द्रम् अविरतमखदीक्षया निरन्तर-यज्ञानुष्ठानेन जातं संस्कारस्य हेयोपादेयविवेकशक्तेर्जाड्यं यस्य स तथा तं यद्वा अविरतमखदीक्षायां जातो यः संस्कारस्तेन जाड्यं जड़ता यस्य स तथा तम् अतएव स्फुटतरं सुव्यक्तम् अरसज्ञम् उत्कृष्टविषयेष्वरसिकं मन्महे जानीमः। मनुबोधने इत्यस्य तानादिकस्य रूपं वमयोर्वेति वैकल्पिकत्वादागमाभावः। कुत इत्याह स इन्द्रः ईदृशोः सीतासम्बन्धिनोः पक्षे द्रौपदीसम्बन्धिनोः रूप-वेशयोरन्तरं विशेषम् इतरसुन्दर्यपेक्षया वैलक्षण्यं जानातीति स तथा तादृशो-यदि भवति स्यात् तदा असौ गोतमोऽहल्यापतिर्मुनिविशेषः चिरतरं कालं व्याप्य कथम् अकलत्रः पत्नीरहितः स्यात् एतामपेक्ष्य निकृष्टामप्यहल्याम् अतिसुन्दरीं मन्यमान इन्द्रो यत्कामयतेस्म येन च जारसङ्गदूषितां तां कोपेन पाषाणतां नीत्वा गोतमश्चिरम् अपत्नीकोऽभूत् तत्तस्य संस्कारजाड्यजनित-रसज्ञत्वाभावविजृम्भितमित्यर्थः एतेनाहल्यातोऽप्युत्कृष्टेयमिति व्यतिरेको-व्यङ्ग्यः ॥ १५ ॥

अस्या इति। घनानां मेघानामन्तोयत्र स घनान्तः शरत्कालः अस्याः सीतायाः पक्षे द्रौपद्या माल्यकानां पुष्पमालानां दाम्ना समूहेन शोभत इति तादृशी या वेणी तस्या यो गुणोत्कर्षः स्वभावतः शोभमानाया अपि वेण्या माल्यदामकृतशोभाधिक्यमित्यर्थः तस्य मलिम्लुचानां चोराणाम्। "प्रतिरोधि-परास्कन्दिपाटच्चरमलिम्लुचा" इत्यमरः। कलापिनां मयूराणां शिखण्डभारस्य

कलापिनां कल्पयतीव दण्डं
शिखण्डभारच्यवणाद्वनान्तः ॥१६॥

ईदृग्रूपप्रचयरचनारम्भपाण्डित्ययोगा-
ज्जातो दैवाज्जगति निपुणैः श्लाघनीयो विरिञ्चिः ।
किञ्चैतस्याः प्रसवविधिना योगकोटीनिविष्टं
युक्तं भूमेर्बहु मनुमहे रत्नगर्भाभिधानम् ॥१७॥

पिच्छसमूहस्य च्यवणात् पातनात् स्फुटं व्यक्तं दण्डं शास्तिं कल्पयतीव करोतीव शरदि मयूराणां बर्हपतनं भवति तत एवेयमुत्प्रेक्षा अन्योऽपि राजा चोराणां शिखावपनादि दण्डं करोति । अत्र दण्डविधानं प्रति मलिम्लुचान्तविशेषणस्य हेतुत्वात् काव्यलिङ्गालङ्कारस्तेन चोत्प्रेक्षाङ्गाङ्गितया सङ्कीर्यते ततश्च एतस्या वेणी मयूरकलापसदृशीत्युपमाध्वनिः ॥ १६ ॥

ईदृगिति । विरिञ्चिर्ब्रह्मा दैवात् घुणाक्षरन्यायेन नतु स्वाभाविकसृष्टि-कौशलादित्यर्थः ईदृक् अलौकिकः सीतायाः पक्षे द्रौपद्या यो रूपप्रचयः सौन्दर्यो-त्कर्षस्तस्य रचना निर्माणं तस्या आरम्भे अनुष्ठाने यत्पाण्डित्यं कौशलं तस्य योगात् सम्बन्धात् निपुणैर्विवेचकैः जगति श्लाघनीयोजातः प्रशंसनीयोऽभूत् इदानीमिति शेषः पूर्वमीदृक्सृष्टेरदर्शनात् केनापि न तस्य प्रशंसा कृता इदानीमलौकिकैतद्रूपसर्गपाण्डित्यदर्शनेन निपुणैरपि सा क्रियते तच्च पाण्डित्यं दैवात् घुणाक्षरन्यायसिद्धम् अन्यथा वेदाभ्यासजडस्य विषयपरा-ङ्मुखस्य कुतः स्वारसिकमित्यर्थः किञ्च अपिच एतस्याः सीतायाः पक्षे द्रौपद्याः प्रसवविधिना यज्ञवास्तुतः समुद्भावनेन योगकोटीनिविष्टं यौगिकशब्दगणमध्ये प्रविष्टम् अवयवार्थसद्भावात् यौगिकमित्यर्थः भूमेः पृथिव्या रत्नगर्भाभिधानं रत्नं गर्भोयस्या इतिव्युत्पत्त्या रत्नगर्भेति नाम युक्तं न्याय्यं बहु अत्यन्तं सादर-मित्यर्थः यथा तथा मनुमहे मन्यामहे । अत्र एतस्या इत्यनन्तरमेवकारो-बोध्यः एतस्याः स्त्रीरत्नत्वात् एतत्प्रसवविधिनैव भूमेरत्नगर्भत्वं नतु हीरकादि-प्रसवेनेति भावः । अद्वितयेऽपि नान्यैतत्सदृशीति व्यतिरेकध्वनिः । मन्दा-क्रान्तावृत्तम् ॥ १७ ॥

अनुदिनमपि गर्भं गाहतामम्बुराशे-
र्मुहुरपि रविबिम्बे स्वं वपुः संक्षिणोतु ।
अपि पुनरकलङ्कं मण्डलं प्राप्य चन्द्र-
स्तुलयितुमलमस्या नैव वक्त्रारविन्दम् ॥१८॥
वनान्तरे स्तोकविभूषणापि
पर्याप्तशोभा निजयैव कान्त्या ।
दृष्टा मया भाग्यबलेन सैषा
मेघोपरुद्धेव शशाङ्कलेखा ॥१९॥

अनुदिनमिति । चन्द्रः अम्बुराशेः समुद्रस्य गर्भं मध्यम् अनुदिनमपि गाहतां विलोडयतु कलङ्कक्षालनार्थमिति भावः तथा मुहुर्वारंवारमपि प्रतिदर्शमपीत्यर्थः दर्शेष्वेव सूर्याचन्द्रमसोरेकराश्यवस्थानात् रविबिम्बे सूर्य-मण्डले स्वं वपुर्मण्डलं संक्षिणोतु सम्यक् क्षयं नयतु वपुःक्षयेण कलङ्कक्षयार्थ-मिति भावः । अपीति भिन्नक्रमे अकलङ्कं मण्डलं पुनः प्राप्यापि कलङ्कस्य वज्रलेपवदनपनेयत्वे सत्यपि कथञ्चित् वारम्बारजलक्षालनतापादिना काला-न्तरे निष्कलङ्कीभूत्वापीत्यर्थः अस्याः सीतायाः पक्षे द्रौपद्याः वक्त्रं मुखम् अर-विन्दमिवेति पुरुषव्याघ्रवदुपमितिसमासः अत्युत्कृष्टं वक्त्रमित्यर्थः तुलयितुं सदृशीकर्तुं नैव अलं समर्थः । चन्द्रोन केवलं कलङ्कसम्पर्कादेतन्मुखतुलनाया-मयोग्यः किन्तु निकृष्टत्वात् स्वभावतोऽपि तस्मादम्बुराशिप्रवेशादिकं निरर्थक-मनुतिष्ठतीत्यर्थः । अत्रापि व्यतिरेकध्वनिः । मालिनीवृत्तम् ॥ १८ ॥

वनान्तर इति । स्तोकमल्पं विभूषणं यस्याः सापि निजयैव स्वाभा-विक्यैव कान्त्या पर्याप्तशोभा प्रभूतसौन्दर्या सा पूर्ववर्णितोत्कर्षा एषा सीता पक्षे द्रौपदी मया रावणेन पक्षे जयद्रथेन मेघेन उपरुद्धा आच्छादिता शशाङ्कस्य चन्द्रस्य लेखेव वनान्तरे वनमध्ये भाग्यबलेन प्राक्तनशुभादृष्टसामर्थ्येन दृष्टा शुद्धान्तयोग्याया अप्यस्या वनान्तरे दर्शनं मेघाच्छन्नचन्द्रलेखादर्शनमिव तच्च भाग्यबलेन अभाग्यवतां कुत ईदृगभ्युदय इत्यर्थः । उपमेयं श्रौती ॥ १९ ॥

आलोकमात्रादखिलोऽपि मौग्ध्या-
न्माभूज्जनोमन्मथवाणवेध्यः ।
इतीव नूनं नगरीमपोह्य
वनान्तमेषागमिता विधात्रा ॥२०॥

न खलु जलदगर्भाद्विद्यतेऽन्यत्र विद्युत्
स्फटिकजठरलग्नो मृग्यते पद्मरागः ।
इयमपि वनभूमौ वर्तते हन्त बाला
नहि जगति निधानं सर्वलोकप्रकाशि ॥२१॥

अस्यावनान्तरावस्थाने हेतुं तर्कयति ।

आलोकेति । आलोकमात्रात् एतस्यादर्शनमात्रजनितात् मौग्ध्यान्मूढ़त्वा-द्धेतोः अखिलोऽपि सर्वोऽपि जनः मन्मथवाणस्य वेध्योलक्ष्योमाभूत् काम-वशगो न भवतु इतीव हेतोः नूनं निश्चितं विधात्रा एषा सीता पक्षे द्रौपदी नगरीम् अपोह्य परित्याज्य वनान्तम् अन्तशब्दस्य स्वरूपवाचकत्वात् वनम् आगमिता आनीता । एतस्या जनबहुलायां नगर्यामवस्थाने बहूनां काम-पारवश्यं भवेदित्यस्मादिव कारणादियं वनमानीतेति हेतूत्प्रेक्षा ॥२०॥

नखल्विति । विद्युत् सौदामिनी जलदगर्भात् मेघमध्यादन्यत्र न खलु विद्यते मेघमध्यएव तिष्ठतीत्यर्थः तथा पद्मरागोलोहितमणिविशेषः स्फटिकानां श्वेतोपलविशेषाणां जठरलग्नो मध्यनिविष्टो मृग्यते अन्विष्यते शोभाधिक्यजन-नात् स्फटिकमध्यएव स्थाप्यत इत्यर्थः तथा इयमपि बाला सीता पक्षे द्रौपदी हन्तेति हर्षे । वनभूमौ वर्तते अर्थान्तरेणेदं द्रढ़यति हि यतः जगति लोके निधानं निधीयमानं सुवर्णाद्युत्कृष्टं वस्तु सर्वलोकप्रकाश्य सर्वलोकज्ञानगोचर-स्थाने न स्थाप्यत इतिशेषः तस्माद्वनभूमावेवास्या अवस्थानं युक्तमित्यर्थः । अत्र निधानशब्दस्य निधीयमानवस्तुमात्रवाचकत्वेन सामान्येन विशेषसमर्थन-रूपोऽर्थान्तरन्यासालङ्कारः ॥२१॥

यावन्नरेन्द्रसुतसायकदत्तिणाङ्ग-
सारङ्गरक्तकपिशं न वनं तदासीत् ।
तामीक्षमीक्षमितितर्कपरः स राजा
तावद्बभूव मदनायुधदक्षिणोर्मा ॥२२॥
गाम्भीर्यादिव रथतोऽवतीर्य रागी
संजानन्नपि निजगाद तां तपस्वी ।
कासि त्वं करभोरु कस्य दाराः
कोवा ते कथय वनान्तवासहेतुः ॥२३॥

यावदिति। तद्वनं यावत् नरेन्द्रसुतस्य रामस्य सायकेन बाणेन दक्षिणे दक्षिणाङ्गे अवयवे यस्य तादृशो यः सारङ्गो मायामृगो मारीचस्तस्य रक्तेन कपिशं श्यावं आसीत् तावत् स राजा रावणः तां सीतां ईक्षमीक्षं दृष्ट्वा दृष्ट्वा। आभीक्ष्ण्ये णमुम्। इति तर्कपरः पूर्वोक्तरूपं तर्कं कुर्वन् सन् मदनायुधेन कामबाणेन दक्षिणे दक्षिणाङ्गे ईर्मं व्रणो यस्य तादृशोबभूव कामपरवशोऽभवत्। "व्रणोऽस्त्रियामीर्ममरुः" इत्यमरः। दक्षिणेर्मेति दक्षिणादीर्मात्-व्याधव्रणितदक्षिणाङ्गे मृगे इत्यनुसमासान्तः।

पक्षे नरेन्द्रसुतानां मृगयार्थं निर्गतानां युधिष्ठिरादीनां सायकैर्दक्षिणाङ्गे ये सारङ्गामृगास्तेषां रक्तेन कपिशं तद्वनं यावदासीत् यावत्ते मृगयातोन निवृत्तिरे इत्यर्थः तावत् स राजा जयद्रथस्तां द्रौपदीमीक्षमीक्षं इति तर्कपरः सन् मदनायुधदक्षिणोर्मा बभूव ॥ २२ ॥

गाम्भीर्यादिति। तपस्वी धृततपस्विवेशोरावणः पक्षे तपस्वी अनुकम्प्यः वह्निर्भावितोदारस्वभाव इत्यर्थः जयद्रथः। "तपस्वी तापसे चानुकम्प्ये त्रिषु" इति मेदिनी। रागी वस्तुतोऽनुरागवान् सन् रथतो रथादवतीर्य तां सीतां पक्षे द्रौपदीं संजानन्नपि रामपत्नीत्वेन पक्षे पाण्डवपत्नीत्वेन सम्यक् ज्ञातवानपि गाम्भीर्यादिव गभीराशयत्वमिव प्रकाश्य नतु चापल्यादित्यर्थः। यज्जुगर्भत्वात्

सा तेन पृष्टा चलचेतसापि
विस्पष्टमाचष्ट यथार्थमेव।
तस्यापि हृत्स्थं दशनांशुजालैः
शान्तिं नयन्तीव तमःसमूहम् ॥२४॥
योऽसौ वितानाहितसोमकार्यः
क्षौणीभृताहं जनकेन तेन।

पञ्चमी। निजगाद वक्ष्यमाणं पप्रच्छ किं तदित्याह हे करभोरु करिशावक-शुण्डवदूरुयुग्मे त्वं कासि का भवसि तथा कस्य दाराः पत्नी तथा वनान्त-वासस्य हेतुर्वा कः वने वा किमर्थं तिष्ठसि कथय एतत् सर्वं ब्रूहि। प्रहर्षिणी-वृत्तम् ॥ २३ ॥

सेति। चलचेतसापि काम‌लोलमनसापि तेन रावणेन पक्षे जयद्रथेन पृष्टा सा सीता पक्षे द्रौपदी अतिथिबुद्ध्या विस्पष्टं सुव्यक्तं यथा तथा यथार्थमेव सत्यमेव सर्वम् आचष्ट उवाच। विस्पष्टभाषणे हेतुरुत्प्रेक्ष्यते दशनानां धवल-दन्तानाम् अंशुजालैः करणैः तस्य रावणस्य पक्षे जयद्रथस्य अपिभिन्नक्रमे हृत्स्थमपि हृदयाभ्यन्तरस्थितमपि तमःसमूहं मोहजालम् अथच अन्धकार-निकरं शान्तिं नाशं नयन्तीव। अत्र तमःसमूहशब्दस्य श्लिष्टत्वेन शाब्दं रूपकं तच्च दशने आर्थस्य चन्द्रत्वारोपस्य कारणमेवञ्च एकदेशविवर्ति-परम्परितरूपकं तथा चन्द्रस्तु वहिःस्थितमेव तमः शमयति दशनस्तु हृदयाभ्यन्तरस्थमपीति व्यतिरेकश्च एताभ्यां नयन्तीवेत्युत्प्रेक्षा अङ्गाङ्गितया सङ्कीर्यते ॥ २४ ॥

किमाचष्टेत्याह।

य इति। वितान‌े यज्ञे आहितं कृतं सोमेन सोमरसेन कार्यं होमरूपं येन सः विहितसोमयाग इत्यर्थः तादृशो योऽसौ प्रसिद्धः तेन जनकेन जनक-वंशप्रसूतेन सीरध्वजनाम्ना क्षौणीभृता राज्ञा कर्त्री सीता लाङ्गलपद्धत्यामुत्पन्न-त्वात् सीतानाम्नी अहम् अपीति निश्चये सम्बोधने वा कलत्रे पत्न्यां तनयेव पुत्रीव कृष्णाजिनेन यज्ञाङ्गत्वात् कृष्णसारचर्मणा शोभितायां क्षितौ लाङ्गल

लब्धापि कृष्णाजिनशोभितायां
क्षितौ कलत्रे तनयेव सीता ॥२५॥
पतिर्मम क्षत्रमशेषभूभृत्-
प्रभाविरामोऽयमजातशत्रुः ।
भीमश्च भीमावरजश्च जिष्णु-
र्नासत्यजाताभिरताच साहम् ॥२६॥

कृष्टयज्ञभूम्यां लब्धा प्राप्ता यथा पत्नां तनया लभ्यते तथा यज्ञभूम्यां जनकेनाहं लब्धेत्यर्थः जनकतनया सीतास्मीति कासीति प्रश्नस्योत्तरम्।

पक्षे वितानाच्छिती विस्तारं प्राप्तो यः सोमकः सोमकवंशस्तत्र आर्यः श्रेष्ठो योऽसौ प्रसिद्धः तेन क्षौणीभृता जनकेन मत्पित्रा द्रुपदेन कलत्रे तनयेव सीता गुणैर्वैदेहीसदृशी निर्मलाशयत्वात् गङ्गासदृशी वा कृष्णा तन्नाम्नी अहम् अजिनशोभितायां क्षितौ याजोपयाजविहितयागभूम्यां लब्धा प्राप्ता द्रुपदपुत्री कृष्णास्मीत्युत्तरम् ॥ २५ ॥

पतिरिति। अशेषभूभृत्सु समस्तनृपतिषु मध्ये प्रभावि प्रतापशालि क्षत्रं क्षत्रियजातिः अयम् अचिरमेवाश्रमान्निर्गतो रामः रामनामा दशरथतनयः मम पतिः स्वामी। इदं कस्य दारा इत्यस्योत्तरम्। किम्भूतः अजातः शत्रुर्यस्य सः निर्हेतुकमविरोधीत्यर्थः तर्हि किं पराक्रमशून्यः नेत्याह भीमश्च शत्रूणां भयङ्करोऽपि तथा भीमोभयदोऽवरजः कनिष्ठोलक्ष्मणो यस्य तादृशोऽपि तथा जिष्णुः शत्रुजयशीलः। स्वोक्तदार्ढ्यार्थमाह सा सीता अहम् अतीव असत्यजाते मिथ्यावादसमूहे अभिरता अनुरक्ता सत्यमेव सर्वं कथयामीत्यर्थः।

पक्षे क्षत्रं क्षत्रियजातिः तथा अशेषभूभृतां प्रभायास्तेजसोविरामोनाशो यस्मात् सः अयम् अजातशत्रुर्युधिष्ठिरो मम पतिः। न केवलमयमेक एव किन्तु भीमश्च भीमोऽपि मम पतिः तथा भीमस्य अवरजः कनिष्ठोजिष्णुरर्जुनश्च मम पतिः तर्हि त्रय एव किं ते पतयः नान्योऽस्ति नहि नहीत्याह सा त्रयाणामपि पत्नी अहं नासत्यजातयोराश्विनेयपुत्रयोर्नकुलसहदेवयोरभिरता च अनु-

पितुर्निकेतं श्वशुरश्रियञ्च
विहाय साहं समयप्रतीक्षा।
दायादसंक्रामितराज्यभार-
स्वभर्तृभक्त्या विपिने वसामि ॥२७॥

इयं हि पूर्वैः पदवी प्रदिष्टा
स्त्रीणां त्रिवर्गाधिगमस्य मूलम्।
सुखेषु दुःखेष्वथवा स्थितोऽयं
यदेकभावेन पतिर्निषेव्यः ॥२८॥

रक्षापि अहं तयोरपि पत्नीत्यर्थः एतेन पञ्चानां पाण्डवानामहं पत्नी न ते बलाद्ग्राह्या भवामीति सूचितम् ॥ २६ ॥

पितुरिति। सा सीता अहं पितुर्जनकस्य निकेतं गृहं तथा श्वशुरस्य दशरथस्य श्रियमैश्वर्यञ्च विहाय त्यक्त्वा समयं पूर्णचतुर्दशवर्षोत्तरकालं प्रतीक्षत इति तादृशी सती दायादे ज्ञातौ भरते संक्रामितः कैकेय्या प्रापितोराज्यभारो यस्य तादृशो यः स्वभर्ता मत्स्वामी रामस्तस्मिन् भक्त्या अनुरागेण विपिने वने वसामि। इदं कीवा ते वनान्तवासहेतुरित्यस्योत्तरम्।

पक्षे सा कृष्णाहं पितुर्द्रुपदस्य निकेतं श्वशुरस्य पाण्डोः श्रियञ्च विहाय समयप्रतीक्षा पूर्णत्रयोदशवर्षोत्तरकालं प्रतीक्षमाणा सती दायादे दुर्योधने संक्रामितः शकुनिकर्णादिभिर्द्यूतच्छलेन सङ्क्रमितोराज्यभारो येषां तादृशाये स्वभर्तारो युधिष्ठिरादयस्तेषु भक्त्या विपिने वसामि ॥ २७ ॥

ननु भवतु नाम ते पत्युर्वने वासः तव कथमित्याशङ्क्याह।

इयमिति। हि यतः पूर्वैः प्राचीनैर्मन्वादिभिः स्त्रीणां त्रिवर्गाधिगमस्य धर्मार्थकामप्राप्तेः। धर्मफलानभिसन्धानान्मोक्षप्राप्तेरपीति बोध्यम्। मूलं कारणं इयं पदवी वर्त्म प्रदिष्टा उपदिष्टा केयं पदवीत्याह सुखेषु अथवा दुःखेषु अवस्थितोऽयं पतिर्यत् एकभावेन अव्यभिचारिण्या भक्त्या निषेव्यः नितरां सेवनीयः धर्मादिमूलं पतिसेवामुद्दिश्यैव वनमागतास्मीति भावः।

इति ब्रुवाणां स्मरवाणभिन्नः
स निःसपत्नोमनुजेन्द्रपत्नीम् ।
मनोज्ञहासां कृतहासमेनां
पुनर्बभाषे प्रतिषिद्धभाषी ॥२९॥

अयं पुराविद्भिरुदीर्यमाणः
स्फुटोऽभत् संप्रति लोकवादः ।
तृणे महानीलशिलेव सक्तिं
करोत्यपात्रे खलु कामिनीति ॥३०॥

"पतिं या नाभिचरति मनोवाक्कायसंयता। सा भर्तृलोकानाप्नोति सद्भिः साध्वीति चोच्यते" इति मनुः। "दुःशीलोदुर्भगोवृद्धो जडोरोग्यधनोऽपि वा। पतिः स्त्रीभिर्न हातव्योलोकेप्सुभिरपातकी" इति भागवतञ्च ॥२८॥

इतीति। इति ब्रुवाणां पूर्वोक्तं कथयन्तीं तथा मनोज्ञहासां साध्वीत्वादुद्धतहास्यरहिताम् एनां मनुजेन्द्रपत्नीं सीतां पक्षे द्रौपदीं स रावणः पक्षे जयद्रथः कृतहासम् अवज्ञया कृतहास्यं यथा तथा पुनर्बभाषे वक्ष्यमानमुवाच। स किम्भूतः स्मरवाणभिन्नः कामतरलः तथा निःसपत्नः रामलक्ष्मणयोः पक्षे युधिष्ठिरादीनामसान्निध्यान्निर्भयः अतएव प्रतिषिद्धं परस्त्रीसमक्षं यन्निषिद्धं तद्भाषत इति सः ॥२९॥

यद्बभाषे तदाह अयमिति। पुराविद्भिः प्राचीनविज्ञैरुदीर्यमाणः कथ्यमानः अयं लोकवादो जनप्रवादः संप्रति स्फुटोऽभवत् सत्योबभूव जनप्रवादस्य प्रामाण्यसन्देहेऽपि अद्य त्वदीयव्यवहारदृष्ट्या सत्यत्वं निश्चितमित्यर्थः कः स इत्याह तृणे तृणमणौ निकृष्टोपले इत्यर्थः महानीलशिलेव कामिनी काममातपरतन्त्रा नारी खल्वप्यर्थे अपात्रेऽपि अयोग्यपुरुषेऽपि सक्तिम् आसक्तिं करोतीत्ययं लोकवादः एवं सुन्दरी त्वं कथमयोग्यभर्तरि सानुरागेति भावः ॥३०॥

इदन्तु ते भर्तृजनस्य भाग्यं
तवाथवा प्राक्तनकर्मशक्तिः।
त्वया विचारोज्झितया स एव
न मुच्यते यद्वत दुर्गतोऽपि ॥३१॥
अनात्मसम्भारसमर्थमेनं
सा त्वं विहायात्महिते यतस्व।
अप्यस्ति कार्यं तृणकाष्ठलोष्ट्रै-
र्न राज्यहीनैर्नरदेववंश्यैः ॥३२॥
भिक्षावृत्तिं हरमपि जहौ जाह्नवी सिन्धुनसा
हित्वा नागानुपरतमदान् पङ्कजं याति भृङ्गी।

इदमिति। तु पुनरिदं वरस्त्रीप्रापकं ते तव भर्तृजनस्य भाग्यं प्राचीनशुभादृष्टम् अथवा तव प्राक्तनकर्मणः कुपतिप्रापकजन्मान्तरीणनिन्दितकृत्यस्य शक्तिः सामर्थ्यं पक्तिरिति पाठे परिपाकः यत् यस्मात् विचारोज्झितया ग्राह्याग्राह्यविवेकत्यक्तया त्वया वत कष्टं दुर्गतोऽपि राज्यभ्रंशवनवासादिना दरिद्रोऽपि सएव कथमपि पूर्वं स्वीकृतएव पतिर्नमुच्यते अद्याप्यङ्गीक्रियते. सर्वथास्य न योग्यासीति भावः ॥३१॥

अनात्मेति। सा अतिसुन्दरी त्वम् अनात्मसम्भारसमर्थम् आत्मपोषणेऽप्यशक्तम् एनं पतिं विहाय आत्महिते योग्यपुरुषान्तराश्रयणरूपे यतस्व यत्नं कुरु। भवतु दुर्गतोऽपि पतिः साध्वीनामत्याज्य एवेत्याशङ्कायामाह तृणकाष्ठलोष्ट्रैरपि कार्यमस्ति अतितुच्छैस्तृणादिभिरपि कदाचित् प्रयोजनं स्यात् नतु राज्यहीनैर्नरदेववंश्यैः राजपुत्रैः कार्यमस्ति तस्मात् साध्वीभिरपि तादृशः पतिस्त्याज्य एवेति भावः। यावज्जीवेत्सुखं जीवेदिति लोकायतमतमत्र मूलमवगन्तव्यम् ॥३२॥

दृष्टान्तेन स्वोक्तं द्रढयति।

वीर्योदग्रं भजति नृपतिं प्राक्तनं प्रोह्य पृथ्वी
सारापेताः सरसिजदृशस्तूलतुल्या भवन्ति ॥३३॥

अहं युवा सुन्दरि सिन्धुराजः
कुवेरसम्पत्प्रतियोगिलक्ष्मीः ।
यो रावणोविद्विषतामसाध्य-
स्तमागतं मां भज भर्तृभावात् ॥३४॥

भिक्षेति । जाह्नवी गङ्गा सिन्धौ रत्नाकरे नम्रा प्रवणा प्रविष्टेत्यर्थः अथच अनुरक्ता सती भिक्षैव वृत्तिर्जीवनोपायो यस्य स तथा तं हरमपि सर्वजन-पूज्यं शिवमपि जह्नौ तत्याज हरशिरसि न चिरं तस्थावित्यर्थः तथा भृङ्गी भ्रमरी उपरतमदान् विरतदानान् नागान् हस्तिनोहित्वा पङ्कजं मधुसमृद्धि-पूर्णं पद्मं याति तथा पृथ्वी प्राक्तनं नृपतिं निर्वीर्यं राजानं प्रोह्य त्यक्त्वा वीर्येणो-दग्रम् उद्भटम् अतिबलवन्तमित्यर्थः नृपतिं भजति आश्रयति तथा साराङ्गना-दपेताः पुरुषाः सरसिजदृशः स्त्रियः तूलतुल्यास्तूलवदतितुच्छास्त्याज्या इत्यर्थः भवन्ति अतस्त्वयापि सारापेतोऽयं पतिस्त्याज्य इति भावः । "सारन्तु द्रविण-न्याय्यवारिषु" इति हेमचन्द्रः । अत्र वाक्यार्थानां परस्परविम्बप्रतिविम्बतया पर्यवसानात् दृष्टान्तालङ्कारः स च तत्त्यागं प्रति भिक्षावृत्तित्वादीनां विशेषणगत्या हेतुत्वात् काव्यलिङ्गसंसृष्ट्या सङ्कीर्णः । मन्दाक्रान्तावृत्तम् ॥३३॥

फलितार्थमाह ।

अहमिति । हे सुन्दरि सीते योऽहं रावणो रावणनामा तथा युवा तरुणः तथा सिन्धौ समुद्रमध्ये लङ्कायामित्यर्थः राजतइति सिन्धुराजः । पचादित्वानुङः । यद्वा सिन्धुरेण हस्तिना अजति गच्छतीति सिन्धुराजः तव पतिवन्नाहं पद्भ्यां वने भ्रमामीत्यर्थः । तथा कुवेरस्य सम्पदः समृद्धेः प्रति-योगिनी सदृशी लक्ष्मीर्यस्य तथा विद्विषतां शत्रूणां देवादीनाम् असाध्यः ब्रह्मवरप्राप्त्या अजेयः अतस्तम् आगतम् अन्याभिश्लेषया दुष्प्राप्यमपि स्वयमुप-स्थितं मां भर्तृभावात् पतित्वेन भज अङ्गीकुरु ।

पक्षे हे सुन्दरि द्रौपदि योऽहं सिन्धुदेशस्य राजा जयद्रथः तथा विद्विषतां

सा त्यक्तशोका जटिलामशोकै-
रुद्यानलक्ष्मीमुपशोभयन्ती ।
मत्पाणिलूनप्रसवावतंसा
साकं मया सञ्चर सिन्धुदेशान् ॥३५॥

सा तेन वाक्यैरिति सान्त्विताऽपि
धाराहता विद्युदिव स्फुरन्ती ।
अलं प्रलापैरपयाहि पापे-
त्युक्त्वा परावृत्तमुखी बभूव ॥३६॥

रावणः रावयति युद्धे शब्दयतीति सः। नन्दादित्वाद्ल्युः। तथा असाध्योऽजेयः अन्यत् समानम्। अत्र भजनं प्रति यौवनादीनां हेतुत्वात् काव्यलिङ्गम् ॥ ३४ ॥

सेति। सा त्वं त्यक्तशोका सती निकृष्टपतिपरित्यागजन्यशोकं विहायेत्यर्थः मया साकं सह सिन्धुदेशान् समुद्रतीरप्रदेशान् पक्षे सिन्धुनामकदेशान् सञ्चर विहारार्थमिति शेषः किम्भूता अशोकैः पुष्पिताशोकवृक्षैः जटिलां व्याप्ताम् उद्यानलक्ष्मीम् उपवनशोभाम् उपशोभयन्ती स्वसान्निध्येन वर्द्धयन्ती। सिन्धुदेशेऽपि अशोकवृक्षबाहुल्यमस्ति। तथा मत्पाणिना लूनाश्छिन्ना ये प्रसवाः पुष्पादीनि तैरवतंसः शिरःकर्णभूषणं यस्याः सा मत्परिग्रहे तवैतादृशं सौभाग्यं भविष्यतीति भावः। मयेत्यस्य सहार्थतृतीयान्तत्वात् तद्योगेऽपि सञ्चरेत्यत्र सञ्चरस्तृतीयायुक्ताच्चेत्यनेन नात्मनेपदं करणार्थतृतीयान्तयोगेनैव तद्विधानात् ॥ ३५ ॥

सेति। सा सीता पक्षे द्रौपदी तेन रावणेन पक्षे जयद्रथेन इति पूर्वोक्तैर्वाक्यैः सान्त्विताऽपि प्रलोभिताऽपि धाराभिराहता विद्युदिव स्फुरन्ती कोपेन ज्वलन्ती सती। धारावर्षणसमये विद्युतश्चाञ्चल्यं भवतीति प्रसिद्धिः। क्वचित् वाताहतेति पाठः वातेनाहता तरलितेत्यर्थः। हे पाप निन्दितपुरुष प्रलापै-

यदा तया प्रार्थितयापि भूयः
शोरेवया शोण इवापविद्धः ।
विकारमासाद्य तदा स तीव्रं
बलेन तां हर्तुमियेष बालाम् ॥३७॥
पुरातिदर्पादिव दानवस्त्रयीं
विधुन्तुदः पर्वणि चन्द्रिकामिव ।
नदीरयस्तीरलतामिवोत्प्लवे
स तां जहार प्रसभेन भामिनीम् ॥३८॥
तथागतां तामवलोक्य विह्वलां
तदार्तनादप्रतिशब्दमेदुरैः ।

रनर्थकालापैरलम् अपयाहि दूरमपगच्छ इति उक्त्वा परावृत्तमुखी तस्य अनभिमुखी बभूव। पापिष्ठस्य द्रष्टुमनौचित्यादिति भावः ॥३६॥

यदेति। भूयः पुनः पुनः प्रार्थितयापि पूर्वोक्तरीत्या स्वभजनं प्रति याचितयापि तया सीतया पक्षे द्रौपद्या शोरेवया शोमत्या नर्मदया नद्या शोणो नदविशेष इव स रावणः पक्षे जयद्रथः यदा अपविद्धः निराकृतः तदा स तीव्रं क्रोधलोभसहकारेणोत्कटं विकारं कामकृतं मनसः क्षोभं रामायणपक्षे तपस्विवेशत्यागरूपम्वा आसाद्य प्राप्य तां बालां बलेन हर्तुमियेष। पूर्वार्द्धे उपमा ॥३७॥

पुरेति। स रावणः पक्षे जयद्रथः तां भामिनीं सीतां पक्षे द्रौपदीं प्रसभेन हठेन जहार। उपमाभिस्तस्या हरणायोग्यत्वमुपपादयति पुरा अतिदर्पात् दानवस्त्रयीं त्रिवेदीमिव तथा विधुन्तुदोराहुः पर्वणि पौर्णमास्यां चन्द्रिकामिव तथा नद्यारयोवेगः उत्प्लवे जलोद्रेके तीरलतामिव। मालोपमालङ्कारः ॥३८॥

तथेति। वनान्तमेदिनी वनस्थली तां सीतां पक्षे द्रौपदीं तथागतां

गुहामुखैर्निर्झरवाष्पवर्षिणी
स्वयं नु चक्रन्द वनान्तमेदिनी ॥३९॥
चलज्जटायौ वनसीम्नि तिष्ठता
त्रिलोक्य चौर्ये हृतां परेण ताम्।
तदीयकेलीहरिणीगणैः समं
चिराय चुक्रोश वने द्विजावलिः ॥४०॥
आकृष्यमाणः प्रसभादिवोच्चै-
स्तदार्तनादैर्निजया रुषा च।

तद्रूपापन्नां तथाविधमयोग्यहरणं प्राप्तामित्यर्थः अतएव विह्वलां व्याकुलाम् अवलोक्य निर्झरो निर्झरजलं स एव वाष्पम् अश्रु तद्वर्षतीति तादृशी सती तस्या आर्तनादस्य प्रतिशब्देन प्रतिध्वनिना मेदुरैः पूर्णैर्गुहा एव मुखानि तैः कृत्वा नूत्प्रेक्षायां स्वयं नु चक्रन्द अरोदीदिव। अन्यापि रुदतीं दृष्ट्वा अश्रुवर्षिणी सती हाहादिरवपूर्णमुखेन रोदिति। अत्र गुहायां मुखत्वारोपस्य निर्झरजले वाष्पत्वारोपस्य च शाब्दत्वात् वनान्तमेदिन्याम् आर्थः सखीत्वारोपोऽपेक्षणीयः तेनैकदेशविवर्तिरूपकमेवेदं न समासोक्तिः तदनुप्राणिता चोत्प्रेक्षेत्यनयोः सङ्करः ॥ ३९ ॥

चलदिति। चलन् उद्धारार्थं चञ्चलीभवन् जटायुस्तन्नामा पक्षी यत्र सा तथा तस्यां वनसीम्नि तिष्ठता परेण शत्रुणा रावणेन चौर्येण हृतां तां सीतां विलोक्य द्विजावलिः पक्षिकुलं तदीयाः सीतासम्बन्धिन्यो याः केलीहरिण्यः क्रीडामृग्यस्तासां गणैः समं सह वने चिराय चिरं कालं व्याप्य चुक्रोश क्रन्दितवती।

पक्षे यौवनसीम्नि तिष्ठता यूना परेण जयद्रथेन चौर्येण हृतां तां द्रौपदीं विलोक्य चलन्त्यः कोपेन शिरःकम्पनात् कम्पमाना जटा लग्नकचा यस्याः सा द्विजावलिः धौम्यादिविप्रसमूहः तदीयकेलीहरिणीगणैः समं वने चिराय चुक्रोश। "दन्तविप्राण्डजाद्विजा" इत्यमरः ॥४०॥

त्वरावतस्तस्य रुरोध मार्गं
जवेन भीमः खगराट्समानः ॥४१॥
परस्पराक्षेपविवृद्धरंहसोः
प्रहाररेखाङ्कितगात्रयोर्मिथः ।
प्रकर्षविस्मापितसिद्धचारणं
तयोरभूत् सङ्गरकर्म दारुणम् ॥४२॥
चिरप्रहारक्षतपक्षमेनं
निगृह्य कण्ठस्थितजीवशेषम् ।

आकृष्यमाण इति। उच्चैरुन्नतैः तस्याः सीताया आर्तनादैः हा राम हा लक्ष्मणेत्यादिकातरध्वनिभिः तथा निजया रुषा कोपेन च प्रसभात् आकृष्यमाण इव नीयमान इव भीमः प्रबलभयङ्करः खगराट् पक्षिश्रेष्ठोजटायुः समानः सगर्वः सन् त्वरावतः सीतामादाय सत्वरं गच्छतस्तस्य रावणस्य मार्गं पन्थानं जवेन रुरोध आवृणोत् ।

पक्षे उच्चैस्तेषां द्विजानामार्तनादैर्निजया रुषा च प्रसभादाकृष्यमाण इव जवेन खगराट्समानः गरुड़तुल्यो भीमोभीमसेनः त्वरावतस्तस्य जयद्रथस्य मार्गं रुरोध ॥ ४१ ॥

परस्परेति। परस्परमाक्षेपेण निन्दावादेन विवृद्धं रंहोयुद्धवेगोययोस्तौ तथा तयोः तथामिथः परस्परं प्रहाररेखाभिः प्रहारजनितचिह्नैरङ्किते गात्रे ययोस्तौ तथो तादृशोस्तयोर्जटायुरावणयोः पक्षे भीमजयद्रथयोः प्रकर्षेण विस्मापिता विस्मयं नीताः सिद्धाश्चारणाश्च गणभेदा यत्र तत् दारुणं सङ्गरकर्म युद्धकार्यम् अभूत् ॥ ४२

चिरेति। भीमा सेना यस्य तादृशः स रावणः चिरप्रहारेण क्षता क्षयं गमिताः पक्षाः पतत्राणि यस्य स तथा तं तथा कण्ठस्थितः कण्ठलुठितो जीवस्य जीवनस्य शेषोऽवशेषो यस्य स तथा तं मृतप्रायमित्यर्थः एनं जटायुः निगृह्य पराभूय स्वस्य बलेन सामर्थ्येन तां सीतां धर्मराजो यमस्तेनाश्रिता या

स भीमसेनः स्वबलेन निन्ये
तां धर्मराजाश्रितदिङ्मुखान्तम् ॥४३॥
निशाचराणामवरोधकर्त्रा
पत्या प्रकामं कृतसान्त्वनापि ।
निनाय साशोकवनेषु कालं
न मृत्युना नाप्यथ जीवितेन ॥४४॥
ततो वनेषु भ्रमते शशंस
भर्त्रे प्रजानामरणीं प्रियां स्वाम् ।

दिक्‌दक्षिणादिक् तस्या मुखस्य साम्मुख्यस्य अन्तं दक्षिणादिङ्मुखस्यान्ते वर्तमानां लङ्कामित्यर्थः निन्ये प्रापयामास भीमसेन इति तदानीं सेनाया असम्बन्धात् उपलक्षणविधयान्वयः ।

पक्षे स भीमसेनो वृकोदरः स्विरप्रहारेण क्षताः पक्षाः सैन्यादिसहाया यस्य तम् एनं जयद्रथं निगृह्य गृहीत्वा तां द्रौपदीं धर्मराजोयुधिष्ठिरः तदाश्रित-दिङ्मुखान्तं निन्ये युधिष्ठिरसमीपं प्रापयामास अन्यत्समानम् ॥ ४३ ॥

निशेति । सा सीता अशोकवनेषु अशोकवृक्षबहुलेषु । विस्तृतत्वाद्बहु-वचनम् अवरोधकर्त्रा वन्दीत्वेन नियन्त्रणकारकेण निशाचराणां पत्या प्रभुणा रावणेन प्रकाममत्यन्तं कृतसान्त्वनापि स्वभजनं प्रति कृतानुनया सत्यपि न मृत्युना नाप्यथ जीवितेन कालं निन्ये मृतप्राया दुःखेन कालं यापयामासेत्यर्थः । कृतसान्त्वनेति रम्भाशापात् बलेन हरणं परिहृतम् ।

पक्षे निशाचराणां हिडिम्बादीनाम् अवरोधकर्त्रा विनाशकेन पत्या स्वामिना भीमेन प्रकामं कृतसान्त्वनापि सा द्रौपदी शोकवनेषु शत्रुहरणानु-स्मरणेन शोकबहुलेषु वनेषु न मृत्युना नाप्यथ जीवितेन अतिदुःखेनेत्यर्थः कालं निन्ये ॥४४॥

तत इति । ततोऽनन्तरं श्रमेण युद्धायासेन कृच्छ्रगतः जीवनसंशयं प्राप्तः द्विजोत्तमः पक्षिश्रेष्ठः जटायुः वनेषु भ्रमते सीतान्वेषणार्थमितस्ततः पर्यटते

द्विजोत्तमः कृच्छ्रगतः श्रमेण
परेण विभ्यद्धरिणापनीता ॥४५॥
वने पुनस्तत्पदवीं विचिन्वन्
द्विजानुजप्राणभयोद्यतेन ।
कबन्धभूतेन परिश्रमार्तः
केनापि भूतेन ससङ्गतोऽभूत् ॥४६॥

प्रजानां भर्त्रे राज्ञे रामाय बिभ्यद्धरिरिन्द्रो यस्मात् स तथा तेन परेण शत्रुणा रावणेन अपनीतां हृतां स्वां प्रियां सीतां शशंस युद्धे मां विनिर्जित्य रावणः सीतां जहारेति कथयामासेत्यर्थः। किम्भूताम् अरणीं तव कोपाग्न्युद्दीपकत्वात् मन्थनकाष्ठमिव अन्याप्यरणी मथ्यमाना अग्निमाविर्भावयति ।

पक्षे परेणाधिकेन श्रमेण हरिणानुधावनायासेन कृच्छ्रगतः प्राप्तक्लेशः द्विजोत्तमः कश्चिद्ब्राह्मणश्रेष्ठः बिभ्यद्भीतीयो हरिणः अरण्यां शिरःकण्डूयनतत्परो मृगरूपधारी धर्मस्तेनापनीतां स्वां प्रियाम् अग्निहोत्रसम्पादनैकहेतुत्वात् स्नेहास्पदम् अरणीं मन्थनकाष्ठं वनेषु भ्रमते प्रजानां भर्त्रे युधिष्ठिराय शशंस राजन् इमामरणीं शृङ्गलग्नामादाय हरिणोऽयं पलायते तदेनं निगृह्य तामानीय मह्यं देहीतिकथयामासेत्यर्थः। "अरणिस्त्वग्निमन्थे ना द्वयोर्निर्मन्थ्यदारुणि" इति मेदिनी ॥४५॥

वन इति। वने दण्डकारण्यात् क्रोशत्रयातीतेऽरण्ये तस्याः सीतायाः पदवीं पन्थानं पुनर्विचिन्वन् कया पदव्या सा रावणेन नीतेत्यन्विष्यन् अतएव परिश्रमेण भ्रमणखेदेनार्तः कातरः स रामः निजस्य स्वस्य अनुजस्य लक्ष्मणस्य च प्राणभये विनाशे इत्यर्थः उद्यतेन उद्युक्तेन कबन्धेतिनाम्ना भूतोवित्तः ख्यातः कबन्धभूतस्तेन केनापि भूतेन जन्तुना स्थूलशिरोमुनिशापेन राक्षसतां इन्द्रेण च विकृताकृतां नीतेन दनोर्मध्यमपुत्रेणेत्यर्थः सङ्गतः संप्राप्तोऽभूत्। "भूतं क्ष्मादौ पिशाचादौ जन्तौ क्लीवे त्रिषूचिते। प्राप्ते वित्ते समे सत्ये देवयोन्यन्तरे तु न" इति मेदिनी।

पक्षे वने पुनस्तस्या अरण्याः पदवीं विचिन्वन् परिश्रमार्तः वनभ्रमणश्रम-

स तेन पूर्वं कृतविग्रहोऽपि
तद्व्याहृतार्थप्रतिवाक्यदानैः ।
भृशं धिनोतिस्म मनस्तदीय
न याति को नाम वशं गुणानाम् ॥४७॥
ततो वधाविष्कृतदिव्यदेहतो
हितोपदेशं प्रतिपद्य धर्मतः ।

जनितपिपासया क्लान्तः स युधिष्ठिरः निजानुजानां भीमादीनां प्राणभयोद्यतेन प्रश्नापूरणेन जलपानाद्विनाशकेनेत्यर्थः तथा कस्य जलस्य जलपानस्येत्यर्थः बन्धभूतेन प्रतिबन्धकरूपेण केनापि भूतेन प्रथमं वकरूपेण पश्चाद्यक्षरूपेण धर्मेणेत्यर्थः सङ्गतोऽभूत् पिपासार्तेन युधिष्ठिरेण जलानयनार्थं क्रमेण प्रेरिता नकुलादयः वकरूपिधर्मवचनमुल्लङ्घ्य जलं पीत्वा मृतास्ततस्तदनुसन्धानपरो युधिष्ठिरोऽपि तत्र गतस्तेन मिलित इत्यर्थः ॥४६॥

स इति । स कबन्धः पूर्वं तेन रामेण सह कृतविग्रहोऽपि भक्षणोद्यमात्कृतविरोधः सन्नपि तेन रामेण व्याहृतः कथितोयोऽर्थः प्रयोजनम् । "स त्वं सीतां समाचक्ष्व यत्र वा येन वा हृताम्" इत्यादिरूपस्तस्य प्रतिवाक्यदानैः । "शृणु राघव तत्त्वेन" इत्यादिरूपप्रत्युत्तरप्रदानैः करणैस्तदीयं रामसम्बन्धि मनो भृशं धिनोतिस्म अप्रीणयत् । उक्तमर्थं समर्थयति कोनाम जनः गुणानां वशं वश्यतां न याति सर्वे गुणैः सन्तोषं प्राप्नुवन्तीत्यर्थः ।

पक्षे स युधिष्ठिरः तेन वकरूपिणा धर्मेण पूर्वं कृताविग्रहोभ्रातृवधरूपविप्रियं यस्य तादृशः सन्नपि तेन धर्मेण व्याहृतः पृष्टोयोऽर्थः । "किं स्विदादित्यमुन्नयति के च तस्याभितश्चरा" इत्यादि रूपस्तस्य प्रतिवाक्यदानैः "ब्रह्मादित्यमुन्नयति देवास्तस्याभितश्चरा" इत्यादि प्रत्युत्तरप्रदानैः कृत्वा तदीयं धर्मसम्बन्धि मनो भृशं धिनोति स्म शेषं तुल्यम् । अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासालङ्कारः ॥ ४७ ॥

तत इति । असौ रामः ततस्तस्मादनन्तरं वधेन तदनुमत्या तदीयराक्षसशरीरस्य दाहेन आविष्कृतः प्रकाशितोदिव्यदेहः प्राक्तनस्वर्गीयशरीरं येन स

निजानुजापत्प्रतिमोचणादसौ
विपत्पयोधिं मनुतेस्म गोष्पदम् ॥४८॥
ततः समुद्दीपितमत्स्यमण्डलं
समुल्लसत्कीचकवंशदुर्गमम् ।
परैरचिन्त्याचरणः समुच्चल-
न्नराधिपम्पावनमाससाद सः ॥४९॥

तथा तस्मात् तथा निजानुजयोः स्वलक्ष्मणयोरापदः तद्दुःखरूपविपत्तेः प्रतिमोचणं यस्मात् स तथा तस्मात् कबन्धात् धर्मतो धर्मेण प्रत्युपकारधर्ममूलकमित्यर्थः हितोपदेशं इतः पम्पाप्रदेशं गच्छ तत्र ऋष्यमूके सुग्रीवेण सह सख्यं कृत्वा तत्सहायः सीतामुद्धरिष्यसीत्येवंरूपं प्रतिपद्य प्राप्य विपत् सीतोद्धरणक्लेशरूपविपत्तिरेवं पयोधिर्दुरधिगम्यत्वात् समुद्रस्तं गोष्पदं मनुतेस्म सुग्रीवसहायोऽचिरमेव सीतामुद्धरिष्यामीति निश्चिकायेत्यर्थः ।

पक्षे ततोऽसौ युधिष्ठिरः बधाय भीमादीनां जीवनाय आविष्कृतो दिव्यदेहोयेन स तथा तस्मात् यक्षरूपमपहाय देवदेहं गृहीतवत इत्यर्थः धर्मतः प्रश्नपूरणसन्तुष्टात् स्वपितुर्धर्मात् हितोपदेशम् इतोविराटनगरं गच्छ तत्र वर्षमेकमज्ञातवासमध्युष्य युद्धे शत्रून् जेष्यसीत्येवमादेशं प्रतिपद्य अनन्तरं निजानुजानां भीमादीनाम् आपदोमरणरूपायाः प्रतिमोचणात् धर्मवचसा तेषां पुनः प्रत्युज्जीवनादित्यर्थः कौरवविजयरूपविपत्पयोधिं गोष्पदं मनुतेस्म अवश्यमेव कौरवान् जेष्यामीति निश्चिकायेत्यर्थः । विपत्पयोधिमिति निरङ्गरूपकम् ॥४८॥

तत इति । परैरन्यैः रावणादिशत्रुभिर्वा अचिन्त्यमप्रतर्क्यमाचरणं कर्म यस्य सः तथा समुत् कबन्धादेशेन सहर्षः स रामः ततः कबन्धोपदेशानन्तरं पम्पा नाम महत्सरस्तस्य वनं जलं तदुपलक्षितदेशमित्यर्थः आससाद प्राप किम्भूतं समुद्दीपितं स्वच्छतया दर्शितं मत्स्यमण्डलम् अन्तःक्रीडन्मीनकुलं येन तत् तथा समुल्लसद्भिः कीचकवंशैः सशब्दवेणुभिः कीचकैश्च विशेषैः वंशैश्चेति वा दुर्गमम् अन्यैर्गन्तुमशक्यं तथा चलन्नपगच्छन् नराणामाधिर्मानसव्यथा यत्र तत्

मातङ्गतेजः क्षपितारिशक्तौ
स वानरेन्द्रं विषये वसन्तम्।
समीरपुत्रेण कृतानुकूल्यः
संप्राप राजाविदितः सखायम् ॥५०॥

यद्वा नराणां विरहिमनुष्याणामाधिर्यस्मात्तत् विरहोद्दीपकमित्यर्थः। अस्मिन् पक्षे चलन्निति कर्तृविशेषणम्।

पक्षे ततो धर्मवचनानन्तरं परैर्दुर्योधनादिभिरचिन्त्याचरणोऽलक्षितप्रचारः समुच्चलन् अज्ञातवासाय तस्माद्देशाद्गच्छन् स युधिष्ठिरः पावनं दोषवर्जितं नराधिपं विराटनृपतिम् आससाद किम्भूतं समुद्दीपितं प्रजारञ्जनादिना उद्भासितं मत्स्यमण्डलं तन्नामकराष्ट्रं येन स तथा तं तथा समुल्लसन् यः कीचकः विराटसेनापतिर्दैत्यविशेषस्तस्य वंशैर्गोत्रैर्दुर्गमं शत्रुभिरनाक्रमणीयम्। "कीचको ध्वनिमद्वंशे दैत्यभेदे द्रुमान्तरे" इत्युभयत्रापि हेमचन्द्रः॥ ४९ ॥

मातङ्गेति। स राजा रामः समीरपुत्रेण वायुतनयेन हनुमता कृतमानुकूल्यं सुग्रीवसमीपनयनरूपोपकारो यस्य सः तथा विदितः हनुमद्वचसा दाशरथित्वेन ज्ञातः सन् मतङ्गस्य मुनेरिदं मातङ्गं यत्तेजस्तपःप्रभावस्तेन क्षपिता कुण्ठिता अरेः सुग्रीवशत्रोर्वालिनः शक्तिः पराक्रमो यत्र स तथा तस्मिन् विषये ऋष्यमुकप्रदेशे वसन्तं चतुर्भिः सहायैः सह निर्भयेन कृतवसतिं वानरेन्द्रं कपिमुख्यं सुग्रीवं सखायं मित्रं संप्राप। मृतदुन्दुभिदानवदेहोत्क्षेपेण रक्तबिन्दुपातनात् क्रुद्धेन मतङ्गमुनिना अत्रागतामरिष्यसीति शापेदत्ते वालिना ऋष्यमूकप्रदेशः परिहृतः।

पक्षे समीरपुत्रेन भीमेन कृतानुकूल्यः कृतरक्षणः सवा। वाशब्दश्चार्थे। सच राजा युधिष्ठिरः अविदितः कैरपि दुर्योधनादिभिरज्ञातः सन्। अज्ञातवासस्यापेक्षितत्वादिति भावः। मातङ्गानां हस्तिसैन्यानां तेजसा क्षपिता अरीणां शक्तिर्यत्र तादृशे विषये मत्स्यप्रदेशे वसन्तं नरेन्द्रं राजानं विराटं सखायं संप्राप मत्स्यदेशं गत्वा विराटस्य सखा बभूवेत्यर्थः॥ ५० ॥

सोऽध्वरन्धनसङ्गीतहरिगोत्रावलम्बनैः ।
तत्कर्मभिः स्वं कृतिनं विभावस्वन्वयोऽस्मरत् ॥५१॥

स व्यञ्जयन्नात्मभुजस्य तेजः
संघृष्टविद्विड्वललोपिमल्लान् ।
बलेन भीमो रघुवीरवर्य-
स्तालान् वने वायुरिवोन्ममाथ ॥५२॥

स इति। विभावसोः सूर्यस्य अन्वयोवंशः पुत्र इत्यर्थः स सुग्रीवः तस्य रामस्य कर्मभिः दुन्दुभिशरीरक्षेपादिभिः कार्यैः अध्वरन् अचलन् स्वाभिप्रेत-वालिवधे किञ्चित् कृतविश्वास इत्यर्थः धनसङ्गिनं राजत्वात् धनिनं वालिनं इतानि प्राप्तानि यानि हरिगोत्राणि वानरकुलानि तेषाम् अवलम्बनैः आश्र-यणैः रामेण वालिनं विनाश्य तदनुगतवानरकुलग्रहणैरित्यर्थः स्वम् आत्मानं कृतिनं रामकार्यसीतोद्धरणसम्पादनात् कृतार्थम् अस्मरत् निश्चिकाय रामोयदि वालिवधरूपं ममोपकारं कुर्यात् तदाहमपि वालिराज्यं प्राप्य तदनुगतवानर-सैन्यावलम्बनेन सीतोद्धाररूपं रामस्य प्रत्युपकारं करिष्यामीति निश्चितवा-नित्यर्थः ।

पक्षे विभा कान्तिर्वसूनि धनानि च तेषामन्वयः सम्बन्धो यत्र तादृशः स विराटः सूर्यवंश इति वा अध्वः पाशकस्तत्क्रीडेत्यर्थः रन्धनं पाकः सङ्गीतं गानं हरयोऽश्वाः गोत्रा गोसमूहः । "गोत्रास्याद्गोसमूहेऽपि" इति विश्वः । तासाम् अवलम्बनैः तद्रूपैः तेषां युधिष्ठिरादीनां कर्मभिः क्रमेण पञ्चभिः कार्यैः कृत्वा स्वं कृतिनम् अस्मरत् धन्योऽहं यस्य अक्षक्रीडादिषु एते योग्याजना नियुक्ता इति मन्यतेस्म । तत्र युधिष्ठिरस्य कर्म अक्षक्रीड़ा भीमस्य रन्धनम् अर्जुनस्य अन्तःपुरे सङ्गीतं नकुलस्याश्वरक्षा सहदेवस्य गोकुलरक्षणमिति ॥५१॥

स इति। बलेन भीमः शत्रूणां भयङ्करः स रघुवीरवर्योरामः आत्मभुजस्य तेजो बलं व्यञ्जयन् प्रकाशयितुम्। हेतौ शतृप्रत्ययः। वने वायुरिव तालान् सप्ततालवृक्षान् शालानिति च क्वचित् पाठः शालान् वृक्षान् उन्ममाथ विभेद सुग्रीवप्रत्ययदार्ढ्यार्थमिति शेषः किम्भूतान् संघृष्टः स्पर्द्धावान् यो विद्विट् शत्रु-

दारोपरोधेन कृतापराधं
रणोद्यतं भ्रातृजनेन सार्द्धम्।
मूर्च्छद्यशोदुन्दुभिशत्रुमेनं
स कीचकं दाव इव व्यमथ्नात्॥ ५३ ॥

वाली तस्य बललोपिनश्च ते मल्ला बलीयांसश्चेति ते तथा तान् पूर्वं वाली सप्त तालान् युगपद्भेत्स्यामीति स्पर्द्धया प्रतिज्ञाय त्रीन् बिभेद न तु सप्त अतस्तस्य बललोपे ते मल्ला इव जाता इत्यर्थः अन्येऽपि मल्लाः स्पर्द्धावतां बलं लुम्पन्ति।

पक्षे वीरवर्यौवीरश्रेष्ठः स भीमः संहृष्टानां विद्विषां बलं लोप्तुं शीलं यस्य तादृशम् आत्मभुजस्य तेजोव्यञ्जयन् व्यञ्जयितुं वने तालान् वायुरिव रघु लघु यथा स्यात्तथा मल्लान् बलीयसो जनान् बलेन उन्ममाथ चोभयामास विराट-तोषणायेति शेषः रघुवीरोरामस्तद्वद्वर्यः श्रेष्ठ इति वा॥५२॥

दारोपरोधेनेति। स रामः दारायाः सुग्रीवपत्न्याः उपरोधेन हरणेन कृता-पराधं कृतदण्डार्हकिल्बिषं तथा भ्रातृजनेन सुग्रीवेण सार्द्धं सह रणोद्यतं युद्धासक्तम् एनं दुन्दुभिशत्रुं दुन्दुभिदानवरिपुं वालिनं मूर्च्छन्ति अपराधिनो योग्यदण्डविधानेन वर्धमानानि यशांसि यत्र क्रियायां तद्यथा स्यात्तथा कीचकं वेणुविशेषं दावोवनाग्निरिव व्यमथ्नात् जघान।

पक्षे स भीमः दावइव वनाग्निरिव ज्वलत्कोपानल इत्यर्थः दारायां द्रौपद्या उपरोधेन जिह्वोषया कृतापराधं तथा रणोद्यतं नेयमभिसारिका सैरिन्ध्री कश्चिद्वीरोऽयमिति मत्वा युद्धाय कृतयत्नम् एनं कीचकं कीचकनामानं विराटश्यालं भ्रातृजनेन सार्द्धं कीचकभ्रातृभिः सह मूर्च्छन् यशोदुन्दुभिरिव समन्तात् प्रसृतत्वाद्वाद्यविशेष इव यत्र तद्यथा स्यात्तथा व्यमथ्नात् हस्तपादाद्य-ङ्गामोटनेन व्यनाशयत्। अत्र विमथनं प्रति दारोपरोधेन कृतापराधत्वस्य विशेषणगत्या हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम्। ततः समुद्दीपितमत्स्य-मण्डलमिति श्लोके कीचकस्योपादानात् अत्र च पुनः कथनात् सति कथितानु-कथने एनमिति प्रयोगः साधुः॥५३॥

भावान्तरं प्राप्य सुरेन्द्रसूनौ
स्वस्थानमासेदुपि वीरवर्य्ये ।
राजानमुज्जृम्भितमत्स्यकेतुं
सुग्रीवमृद्धाङ्गदमाप लक्ष्मीः ॥ ५४ ॥
महीभृतोमाल्यवतस्तदा तं
बृहन्नलाख्ये कटके वसन्तम् ।

भावान्तरमिति । वीरवर्य्ये सुरेन्द्रसूनौ शक्रतनये बालिनि भावान्तरम् अवस्थाविशेषं मरणमित्यर्थः प्राप्य स्वस्थानं स्वर्गरूपं स्थानम् आसेदुषि प्राप्ते सति लक्ष्मीः राज्यश्री उज्जृम्भितः चिरात् प्रियालाभेन उद्दीप्तो मत्स्यकेतुः कामीयस्य स तथा तं तथा ऋद्धः समृद्धिमान् यौवराज्येऽभिषिक्त इत्यर्थः अङ्गदो बालिपुत्रो यस्मात् स तथा तं सुग्रीवं राजानम् आप ।

पक्षे वीरवर्य्ये सुरेन्द्रसूनौ अर्जुने बृहन्नलानामनीति शेषः भावान्तरम् उर्वशीशापात् नपुंसकत्वं प्राप्य स्वस्थानं स्वयोग्यस्थानम् अन्तःपुरमित्यर्थः आसेदुषि नारीणां सङ्गीतादिशिक्षणार्थं प्राप्ते सति लक्ष्मीः शोभा राजानं विराटम् आप महापुरुषस्यार्जुनस्यान्तःपुराधिष्ठानेन विराटः पूर्वापेक्षया अतितरां शुशुभे इत्यर्थः किम्भूतम् उज्जृम्भितस्य समृद्धस्य मत्स्यस्य तन्नामक-स्वदेशस्य केतुम् अत्युन्नतत्वात् पताकामिव तथा सुग्रीवं शोभनकन्धरं तथा ऋद्धं हीरकादिखचितत्वात् महार्घम् अङ्गदं केयूरम् यस्य स तथा तम् ॥५४॥

महीभृत इति । तदा सुग्रीवराज्यप्राप्तेः परं माल्यवतो माल्यवन्नामकस्य महीभृतः पर्वतस्य बृहद्भिर्नलैस्तृणविशेषैराढ्ये युक्ते कटके नितम्बे सानौ वा वसन्तं तं रामं सा अतिदुःसहा परेण रावणेन प्रणीता जनिता स्वकलत्र-पीडा स्वपत्नीसीताविषयकविरहव्यथा कं कम् आर्त्तियोगं पीडासम्बन्धं न अलम्भयत् न प्रापयामास अपितु सर्वाएव अङ्गासौष्ठवतापाद्यवस्था अलम्भय-दित्यर्थः ताश्च यथा "अङ्गेष्वसौष्ठवं तापः पाण्डुता कृशतारुचिः । अधृतिः स्यादनालम्बस्तन्मयोन्मादमूर्च्छनाः । मृतिश्चेति क्रमाज्ज्ञेया दश स्मरदशा इह" इति । तमिति लभिरूपूपकर्म्मीभूतगत्यर्थत्वात् प्रयोज्यकर्म ।

परप्रणीता स्वकलत्रपीडा

कङ्कं न सालम्भयदार्तियोगम् ॥ ५५ ॥

अथ घननिकुरम्बैरम्बुसम्भारनम्रै:

स्थगितगगनगर्भा विद्युदुद्योतहृद्या ।

नृपकुलजययात्राकेलिदीर्घान्तराय:

पथिकमिथुनमृत्यु: प्रावृडुज्जृम्भते स्म ॥५६॥

शीकरच्छरणशीतमारुता-

स्नातकप्रकरकौतुकावहा: ।

पक्षे तदा कीचकेन द्रौपद्युपरोधात् परं माल्यवतोऽधृतमाल्यस्य निश्चिन्ततया स्रगाद्युपभोगिन इत्यर्थ: मद्दोभृतो राज्ञो विराटस्य बृहन्नलाख्ये बृहन्नलानाम-कार्जुनयुक्ते कटके राजधान्यां वसन्तं कङ्कं गोपनार्थं कङ्केति नामधारिणं तं युधिष्ठिरं सा परप्रणीता कीचकेन जनिता स्वकलत्रस्य द्रौपद्या: पीड़ा उपरोध: आर्तियोगं न अलम्भयत् भीमेन कीचकस्य विनाशादिति भाव: न अलम्भयत् अपितु अलम्भयदिति केचित्। "कटकं वलये सानौ राजधानीनितम्बयो:" इति विश्व: ॥ ५५ ॥

अथ षोड़शभि: श्लोकैर्वर्षर्तुं वर्णयति अथेति। अथ रामस्य माल्यमत्पर्वत-प्रवेशानन्तरं पक्षे कीचकवधानन्तरं प्रावृट् वर्षर्तु: उज्जृम्भतेस्म उदियाय किम्भूता अम्बुसम्भारेण जलभरेण नम्रैर्लम्बमानैर्घननिकुरम्बैर्मेघसमूहै: स्थगित: पिहितो गगनस्य गर्भोमध्यं यत्र सा तथा विद्युताम् उद्योतेन प्रकाशेन हृद्या मनोज्ञा तथा नृपकुलस्य राजवृन्दस्य जयार्थं या यात्रा प्रयाणं तद्रूपा या केली क्रीड़ा तस्या दीर्घान्तराय: अतिविघ्नं प्रावृषि यात्राभावात् तथा पथिकमिथुनानां प्रोषितद्वन्द्वानां मृत्यु: कामोद्दीपकत्वात् यम इव अतिदु:ख-देत्यर्थ:। अत्र प्रावृट्स्वभाववर्णनात् स्वभावोक्तिरलङ्कार: उत्तरार्द्धे च रूप-कमित्यनयोरनपेक्षितत्वेनावस्थानात् संसृष्टि:। मालिनीवृत्तम् ॥५६॥

शीकरेति। शीकराणां नि:सृताम्बुकणानां क्षरणेन शीतोहिमोमारुतो-

बभ्रमुः कृतवियोगिदिग्भ्रमा
वारिवाहनिवहा विहायसि ॥ ५७ ॥
द्राक्तडित्कनककोणताडिते
र्दध्वने घनघटामहानकैः ।
ताण्डवं तदनुवृत्तिपेषलं
मण्डलेन विदधे शिखण्डिनाम् ॥५८॥
याचितेन बहुचातकद्विजै-
रम्बुदेन जलदानपूर्वकम् ।

वायुर्येभ्यस्ते तथा चातकप्रकरस्य चातकसमूहस्य कौतुकं हर्षम् आवहन्ति जलदानेन जनयन्तीति ते तथा कृतोवियोगिनां विरहिनां दिग्भ्रमोदिङ्मो-होयैस्ते ईदृशा वारिवाहनिवहा मेघसमूहाः विहायसि आकाशे बभ्रमुः गतागतं चक्रुः । स्वभावोक्तिः । रथोद्धतावृत्तम् ॥५७॥

द्रागिति । घनानां मेघानां घटाः समूहाएव महानकाः वृहत्-पटहास्तैः तड़िदेव कनककोणः स्वर्णमयवादनदण्डस्तेन ताड़ितैर्वादितैरिव तादृशैः सद्भि-द्राक् झटिति दध्वने शब्दितम् । भावे लिट् । तथा शिखण्डिनां मयूराणां मण्डलेन समूहेन तेषां घनानाम् अनुवृत्तौ उपासनायां पेषलं मनोज्ञं यथा भवति तथा । यद्वा तदनुवृत्त्या घनध्वनितानुसारेण पेषलं ताण्डवं नृत्यं विदधे कृतम् । कर्मणि लिट् । अन्येपि वाद्यानुसारेण नृत्यन्ति । "कोणो वीणादिवादनम्" इति "आनकः पटहोऽस्त्री स्यात्" इति "ताण्डवं नटनं नाट्यम्" इति चामरः । अत्र पूर्वार्द्धे रूपकप्रतीयमानोत्प्रेक्षयोः सङ्करः उत्तरार्द्धे च शिखण्डिषु वाद्यानुसारिनटनकर्तृ व्यवहारप्रतीतेः समासोक्तिः ॥५८॥

याचितेनेति । बहवश्चातकाएव द्विजा पक्षिणः अथच ब्राह्मणा इवेति तैर्याचितेन देहि देहीति प्रार्थितेन । बहु यथास्यात्तथेति वा । अम्बुदेन मेघेन कर्त्रा जलदानपूर्वकं जलवर्षणपूर्वकम् अथच "मनसा पात्रमुद्दिश्य भूमौ तोयं विनिक्षिपेत्" इत्यादिशास्त्रात् जलप्रक्षेपपूर्वकं दूरमौरिता दूरे प्रक्षिप्ता

हेममुष्टिरिव दूरमीरिता
सञ्चचार रुचिराचिरप्रभा ॥५९॥

प्रावृषा जलदपङ्क्तिबाहुना
चण्डधाम्नि विहितोपगूहने।
केलिभिन्नमिव रत्नकङ्कणं
खण्डमिन्द्रधनुषः स्म शोभते ॥६०॥

केकिनां कलितकेकमुच्चकै-
र्बर्हभारमवतत्य नृत्यताम्।
चन्द्रकैर्विचकसेऽभ्रमण्डलं
द्रष्टुमक्षिनिकरैरिवोर्द्ध्वगैः ॥६१॥

हेममुष्टिरिव रुचिरा अचिरप्रभा विद्युत् सञ्चचार विललास अन्येऽपि द्विजैः प्रार्थिता वदान्याः जलप्रक्षेपपूर्वकं सुवर्णमुष्टिं प्रक्षिपन्ति। अत्र हेममुष्टिरिवेति वाच्योपमा अम्बुदे वदान्योपमामार्थीमपेक्षत इति एकदेशविवर्तिन्युपमा सा च द्विजेति जलदानपूर्वकेति च श्लिष्टमिति श्लेषमूलातिशयोक्त्या अङ्गाङ्गितया सङ्कीर्यते चतुर्थपादे च वृत्त्यनुप्रासः ॥ ५९ ॥

प्रावृषेति। चण्डधाम्नि सूर्ये नायक इवेति शेषः प्रावृषा कर्त्र्या नायिकयेवेति शेषः जलदपङ्क्तिर्बाहुरिवेति तेन कृत्वा विहितोपगूहने कृताच्छादने अथच कृतालिङ्गने सति केलिभिः सुरतक्रीडाभिर्भिन्नं भग्नं रत्नकङ्कणमिव इन्द्रधनुषः खण्डं शोभते स्म अत्रापि पूर्ववदेकदेशविवर्तिन्युपमा औपम्यगर्भसमासोक्तिरिति केचित् ॥ ६० ॥

केकिनामिति। बर्हभारं पिच्छसमूहम् उच्चकैरवतत्य प्रसार्य कलिता हर्षेणोच्चरिता केका तद्रूपा वाणी यत्र तद्यथा स्यात्तथा नृत्यतां नृत्यं कुर्वतां केकिनां मयूराणाम् अभ्रमण्डलं मेघवृन्दं द्रष्टुम् ऊर्द्ध्वगैरक्षिनिकरैरिव चक्षुःसमूहैरिव चन्द्रकैर्मेचकैर्विचकसे विकसितम्। भावे लिट्। उत्प्रेक्षालङ्कारः ॥६१॥

व्योम्नि खेलदचिरांशुनर्तकी
हारयष्टिनिभयाम्बुधारया ।
पर्यसारि निपतद्घनोपल-
व्याजनायकमणिप्रकीर्णया ॥ ६२ ॥

लोकमुन्मदयितुं प्रसाधिता
चूर्णमुष्टिरिव मीनकेतुना ।
दिङ्मुखेषु नवनीपजं रजो
वार्षिकेण मरुता विचिक्षिपे ॥ ६३ ॥

स्पर्शसौख्यमनिलेन लम्भिताः
कामिनेव वनराजियोषितः ।

व्योम्नीति । व्योम्नि आकाशाङ्गने खेलन्ती नृत्यन्ती अचिरांशुर्विद्युत् नर्तकीव नटीव तस्या हारयष्टिनिभया मुक्तामयहारगुच्छतुल्यया तथा निपतन्तो ये घनोपलाः करकास्तएव व्याजेन छलेन नायकमणयः हारमध्यगतमणिविशेषास्तैः प्रकीर्णया युक्तया अम्बुधारया पर्यसारि परिसृतं भूमौ पतितमित्यर्थः । भावे लुङ् । अत्र घनोपलत्वनिषेधेन नायकमणित्वस्थापनात् अपह्नुतिः पूर्वार्द्धे चोपमा इत्यनयोः सङ्करः ॥ ६२ ॥

लोकमिति । वार्षिकेण वर्षाकालोत्पन्नेन मरुता कामसाहाय्यकारिणा वायुना लोकं जनं विरहिणमित्यर्थः उन्मदयितुम् उन्मत्तं कर्तुं मीनकेतुना कामेन प्रसाधिता मन्त्रतन्त्रादिना संपादिता चूर्णमुष्टिरिव चूर्णमुष्टिमितं सिद्धचूर्णमिवेत्युत्प्रेक्षा नवनीपजं नवीनकदम्बपुष्पजातं रजः परागः दिङ्मुखेषु दिक्प्रान्तेषु विचिक्षिपे विक्षिप्तम् । अन्योऽपि लोकोन्मादाय केनापि साधितं सिद्धचूर्णं दिक्षु विक्षिपति । अत्रोत्प्रेक्षया कदम्बपरागसंपृक्तवार्षिकवातस्यात्यन्तमुद्दीपकत्वं व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः ॥६३॥

स्पर्शेति । कामिनेव कामुकेनेव अनिलेन वायुना कर्त्रा स्पर्शसौख्यम् अङ्गस्पर्शजनितसुखं लम्भिताः नीताः तथा उच्छ्सन्तः उद्गच्छन्तो नवकदम्बानां

उच्छ्वसन्नवकदम्बकेशरा
रेजिरे सपुलकोद्गमा इव॥ ६४ ॥
मारुतेन निजवाहनोचितं
नूनमिन्दुहरिणं जिघृक्षता।
आततैर्जलदवागुराशतैः
ऋक्षमण्डलमपि न्यरुध्यत ॥ ६५ ॥
शाद्वलेषु रचिताः परिस्फुर-
द्वारिविन्दुषु सुरेन्द्रगोपकाः

केशराः किञ्जल्का यासु ताः वनराजयोऽरण्यश्रेणयोयोषितः कामिन्य इव वनराजियोषितः। पुरुषव्याघ्रवत् कर्मधारयः। सपुलकोद्गमा इव सरोमाञ्चा इवेत्युत्प्रेक्षा रेजिरे शुशुभिरे। अन्या अपि कामिन्यः कामिनालिङ्गिताः स्पर्शसुखेन पुलकं धारयन्ति। अत्र पूर्वार्द्धे श्रौतीलुप्तोपमयोः सङ्करस्तेन च कदम्बकेशरेषु वनराजिपुलकत्वस्य सम्भाव्यमानत्वादुत्प्रेक्षा अङ्गाङ्गितया सङ्कीर्यते ॥६४॥

मारुतेनेति। नूनमुत्प्रेक्षायां निजवाहनोचितं स्ववाहनयोग्यम्। "पवनो-मृगवाहनः" इति पौराणिकोक्तेरिति भावः। इन्दुहरिणं चन्द्रमण्डलस्थमृगं जिघृक्षता नूनं ग्रहीतुमिच्छतेवेत्युत्प्रेक्षा मारुतेन वार्षिकवातेन आततैर्गगना-रण्यभूम्यां प्रसारितैः जलदा मेघा एव वागुरा मृगबन्धन्यस्तासां शतैः कृत्वा मेघानां मारुतवश्यत्वादित्यर्थः ऋक्षमण्डलमपि नक्षत्रसमूहोऽपि अथच भल्लूक-समूहोऽपि न्यरुध्यत पिहितम् अथच निरुध्य गृहीतम्। "ऋक्षः पर्वतभेदे स्याद्भल्लूके शोणके पुमान्। कृतवेधनेऽन्यलिङ्गं नक्षत्रे पुंनपुंसकम्" इति मेदिनी। हरिणग्रहणार्थं यतमानस्य ऋक्षनिरोधः प्रासङ्गिक इत्यर्थः। अत्र जलदे वागुरारोपं प्रति ऋक्षमण्डले ऋक्षनिमण्डलारोपस्य हेतुत्वात् श्लिष्टपरम्परित-रूपकं तच्च पूर्वार्द्धगतयोत्प्रेक्षयाङ्गाङ्गितया सङ्कीर्णम् ॥ ६५ ॥

शाद्वलेष्विति। परिस्फुरन्तो वारिविन्दवो यत्र ते तथा तेषु शाद्वलेषु घास-

मौक्तिकव्यतिकरातिसुन्दरैः
पद्मरागमणिभिः समं बभुः ॥६६॥
उत्तरीयमिव केतकावलिः
केशरौघमनिले विधुन्वति ।
भृङ्गलोलसुमनोदलच्छलात्
प्राहिणोदिव कटाक्षमायतम् ॥६७॥
चञ्चुचुम्बितमनोज्ञमालती
कुटमलाः प्रतिपदं मधुव्रताः ।
दध्रिरे रजतसूचिकोटिभिः
सीव्यमानहरिनीलविभ्रमम् ॥६८॥

हरितप्रदेशेषु । "शाद्वलः शादहरिते" इत्यमरः । रचिता निवेशिता वर्षर्तुनेति शेषः सुरेन्द्रगोपकाः रक्तवर्णकीटभेदा मौक्तिकानां व्यतिकरेण सम्पर्केण अति-सुन्दरैः पद्मरागमणिभिः समं सदृशं यथा तथा बभुः शुशुभिरे। आर्थीय-मुपमा ॥ ६६ ॥

उत्तरीयमिति । अनिले वार्षिकपवने हठकामुक इवेति शेषः उत्तरीय-मिव उत्तरासङ्गवस्त्रमिव केशरौघं किञ्जल्कसमूहं विधुन्वति चालयति सति केतकावलिः केतकश्रेणी कामिनीवेति शेषः भृङ्गेण लोलं चञ्चलं यत्सुमनोदलं पुष्पपत्रं तस्य छलात् आयतं दीर्घं कटाक्षमिव प्राहिणोत् विचिक्षेप तं प्रतीति शेषः। अन्यापि हठादुत्तरीयं चालयन्तं कामुकं प्रति कटाक्षं विक्षिपति। अत्र पूर्वार्द्धे एकदेशविवर्तिन्युपमा तथा च उत्तराङ्गता अपह्नुत्यनुप्राणि-तोत्प्रेक्षाङ्गाङ्गितया सङ्कीर्णा ॥६७॥

चञ्च्विति । मधुव्रता भ्रमराः प्रतिपदं प्रतिस्थलं चञ्चुभिश्चुम्बिताः मनोज्ञाः सुन्दराः मालतीनां जातीनां कुड्मलाः कोरका यैस्तादृशाः सन्तः रजतसूचीनां रौप्यनिर्मितशलाकाभेदानां कोटिभिरग्रैः सीव्यमानाः संग्रथ्यमाना ये हरि-

अप्रकाशितनिशाकरानना-
मेघनीलवसनावगुण्ठनाः ।
रागिणां रजनयोवितेनिरे
चित्ततोषमभिसारिका इव ॥६९॥

उच्छ्वसत्कुटजगुच्छपाण्डरा
भृङ्गसङ्गतशिलीन्ध्रबन्धुराः ।
कन्दलीदलसुवाससो बभुः
प्रावृषैव ककुभः प्रसाधिताः ॥७०॥

नीला इन्द्रनीलमणयस्तेषां विभ्रमं विलासं दध्रिरे जगृहुः । अत्रान्यविभ्रमस्या-न्यकर्तृकधारणमसम्भवत् मालतीकुड्मलचुम्बिमधुव्रतरजतसूत्रोस्यूतहरिनीलयो-र्विम्बप्रतिविम्बतां बोधयतीति असम्भवद्वस्तुसम्बन्धनिबन्धना निदर्शना ॥६८॥

अप्रकाशितेति । अप्रकाशितं मेघावृतत्वादलक्षितं पक्षे अभिज्ञानभीत्या वसनाञ्चलेनावृतं निशाकरश्चन्द्र आननमिव तत् यासु पक्षे निशाकरवदाह्लाद-कमाननं यासां ताः तथा मेघा नीलवसनानीव मेघनीलवसनानि पक्षे मेघवन्नीलवसनानि तैरवगुण्ठनं यासां तादृश्योरजनयोरात्रयः अभिसारिका इव नायकमभिसरन्त्यः कामिन्य इव । अत्र नीलवसनावगुण्ठनत्वप्रतिपाद-नात् कृष्णाभिसारोबोध्यः । रागिणाम् अनुरक्तजनानां चित्ततोषं मनःप्रमोदं वितेनिरे चक्रुः अभिसारिका हि रागिपुरुषांस्तोषयन्तीत्युपमा । "अभिसारयते कान्तं या मन्मथवशंवदा । स्वयंवाभिसरत्येषा धीरैरुक्ताभिसारिका" इति दर्पणः ॥६९॥

उच्छ्वसदिति । उच्छ्वसद्भिः कुटजगुच्छैर्गिरिमल्लिकास्तवकैः पाण्डरा धवलाः तथा भृङ्गसङ्गतैः शिलीन्ध्रैः कन्दलीपुष्पैर्बन्धुरा उन्नतानता दन्तुरा इत्यर्थः तथा कन्दलीदलानि कन्दलीवृक्षपल्लवा एव सुवासांसि सुष्ठुवस्त्राणि यासां ताः ककुभोदिशः प्रावृषैव वर्षाभिरेव प्रसाधिता अलङ्कृताः सत्यो बभुः शुशुभिरे वर्षास्वेव कुटजगुच्छादीनामाविर्भावात् । "शिलीन्ध्रं कन्दलीपुष्पे कवकत्रि-

ततस्तडिच्चञ्चलसम्पदस्ते
वियोगिरामाशयदत्तशोकाः
दशाविशेषा इव शात्रवाणां
क्रमेण वर्षादिवसाः प्रशेमुः ॥७१॥

अथोडुमालोज्ज्वलतारहारा
ज्योत्स्नास्मितोल्लासिशशाङ्कवक्त्रा ।
उदूढफुल्लाम्बुरुहा शरच्छ्रीः
प्रावृट्पयोधेरुदियाय रम्या ॥७२॥

पुटाख्ययोः" इति हेमचन्द्रः। कन्दलीदलेत्यनेन कन्दलीवृक्षपल्लवबोधनात् शिलीन्ध्रशब्देन च कन्दलीपुष्पबोधनान्न पौनरुक्त्यम्। अत्र प्रावृषि प्रसाधिकायाः ककुभु प्रसाध्यमाननायिकायाश्च व्यवहारसमारोपात् समासोक्तिः सा च तृतीयपादगतेन रूपकेणाङ्गाङ्गितया सङ्कीर्यते ॥ ७० ॥

तत इति। ततोऽनन्तरं शात्रवाणां विजिगीषुपराभूतरिपूणां दशाविशेषा अवस्थाभेदा इव ते वर्षादिवसाः क्रमेण प्रशेमुः निवृत्ताः यथा पराभूतशात्रवाणां दुर्दशाः क्रमेण विजिगीषुकारुण्योदयात् निवर्तन्ते तथेत्यर्थः किम्भूताः तडितां चञ्चला सम्पत्समृद्धिर्येषु ते पक्षे तडिदिव चञ्चला अस्थिरा सम्पत् श्रीर्यत्र ते तथा वियोगिन्यो विरहिण्यो रामाः कामिन्यस्तासाम् आशयेषु मनःसु दत्तोजनितः शोकोयैस्ते उभयत्र तुल्यं रामायणपक्षे वियोगिनो रामस्येति वा। उपमेयं श्रौती ॥ ७१ ॥

अथ सर्गसमाप्तिपर्यन्तं त्रयोदशभिः श्लोकैः शरदं वर्णयति।

अथेति। अथ वर्षापगमानन्तरं शरच्छ्रीः शरदेव लक्ष्मीः प्रावृट् वर्षर्तुरेव पयोधिर्दुग्धाम्बुधिस्तस्मादुदियाय उदगच्छत् शरदः प्रावृडवयवत्वादिति भावः श्रीरपि पयोधेरुदिता। किम्भूता उडुमाला नक्षत्रपरम्परैव उज्ज्वल उद्दीप्तस्तारो विशुद्धमुक्तानिर्मितो हारो यस्याः सा। "तारोवानरभिन्मुक्ता-विशुद्धोः शुद्धमौक्तिक" इति मेदिनी। तथा ज्योत्स्ना चन्द्रिकैव स्मितमीषद्धा-

पद्मेषु हंसानसनेषु भृङ्गान्
मनःसु रागं मृगलोचनानाम्।
प्रायुङ्क्त पाथःसु च सुप्रसादं
संप्रत्यनेकेषु गुणान् घनान्तः ॥७३॥

कुवेरगुप्तात् सरसं सरस्तः
सरोजरेणूत्करगौरपक्षाः।
गताम्बुवाहं गगनान्तरालं
जगाहिरे राजमरालमालाः ॥७४॥

हस्तेन उल्लासि शोभमानं शशाङ्कश्चन्द्र एव वक्त्रं यस्याः सा तथा उद्गूढं गृहीतं विकाशितमित्यर्थः पक्षे हस्तेन धृतं फुल्लम् अम्बुरुहं पद्मं यया सा अतएव रम्या मनोज्ञा। अत्र साङ्गस्याङ्गिनोरूपणात् साङ्गरूपकम् ॥ ७२ ॥

पद्मेष्विति। संप्रति घनस्य घनकालस्यान्तः शरत् अनेकेषु वस्तुषु गुणान् उत्कर्षजनकधर्मान् प्रायुङ्क्त अर्पितवान्। कुत्र कानित्याह पद्मेषु हंसान् प्रायुङ्क्त प्रायेण हंसानां पद्मवनेषु भ्रमणादिति भावः तथा असनेषु जीवकद्रुम-कुसुमेषु भृङ्गान् भ्रमरान् तथा मृगलोचनानां कामिनीनां मनःसु रागम् अनु-रागं तथा पाथःसु जलेषु सुप्रसादं स्वच्छताम्। अत्र पद्मादिमनोज्ञवस्तुषु तद्योग्यहंसादिसम्बन्धवर्णनेन वैचित्र्याधिक्यात् समालङ्कारः। "समं स्यादा-नुरूप्येण श्लाघायोग्यस्य वस्तुनः" इतिलक्षणात् ॥ ७३ ॥

कुवेरेति। राजमरालमालाः राजहंसपङ्क्तयः सरोजानां मानसविक-सितपद्मानां रेणूत्करैः परागसमूहैर्गौराः पीताः पक्षा येषां तादृशाः सन्तः कुवेरगुप्तात् कुवेरेण पालितात् तद्दिगधिष्ठितत्वादिति भावः सरस्तो मानसात् सरसः गता अम्बुवाहा मेघा यस्मात् तादृशं गगनान्तरालं सरसं वर्षापगमेन सानुरागं यथा तथा जगाहिरे भेजिरे। हंसाहि प्रावृषि मानसं यान्ति शरदि च तत आगच्छन्तीति कविसमयः। द्वितीयपादे हंसानां स्वभावस्य-

निरस्य धाराधरशैवलौघं
सलीलमालम्बितरश्मिसूत्रम् ।
भूषामणिं भ्रष्टमिवार्कबिम्बं
प्रावृट्सरस्तः शरदुज्जहार ॥७५॥

प्रबोधभाजः परमस्य पुंसो
विलोचने द्वे किल मुक्तनिद्रे ।
व्यपेतपाथोधरपक्ष्मरोधे
व्यराजतां व्योमनि पुष्पवन्तौ ॥७६॥

परित्यागेन पद्मपरागाणां प्रीतिमग्रहणात् तद्गुणालङ्कारः उत्तरार्द्धे च काव्यलिङ्गमित्यनयोः संसृष्टिः ॥ ७४ ॥

निरस्येति । शरत् कर्त्री प्रावृट् सर इव तस्मात् । पञ्चम्याः सार्वविभक्तिकस्तसिः । धाराधरा मेघाः शैवला इव ते तथा तेषाम् ओघं परम्परां निरस्य दूरतो निक्षिप्य आलम्बितं रश्मयः किरणाः सूत्रं बन्धनगुण इव तत् येन तं भ्रष्टं पूर्वं कस्या अपि जलविहारिण्याः अङ्गात् च्युतं भूषामणिमिव अलङ्काररत्नमिव अर्कबिम्बं सूर्यमण्डलं सलीलं सहेलं झटित्येवेत्यर्थः यथा तथा उज्जहार उद्धृतवती । शरदि मेघापगमेन सूर्यबिम्बस्य प्रकाशनादिति भावः । अन्यापि सरसि भ्रष्टं भूषामणिं शैवलापसारणेन झटित्युद्धरति । अत्र मेघादिषु शैवलादिसाम्यं शाब्दं शरदि कस्याश्चिद्दारिकाया आर्थं साम्यमपेक्षत इत्येकदेशविवर्त्युपमा । वस्तुतस्तु उपमावाचकस्येवशब्दस्य उपमानोत्तरत्वनियमादत्र तदभावादुत्प्रेक्षैवेयम् ॥ ७५ ॥

प्रबोधेति । पुष्पवन्तौ दिवाकरनिशाकरौ । "एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ" इत्यमरः । व्योमनि आकाशे व्यराजतां मेघापगमेन अशोभेताम् । अत्रोत्प्रेक्षते प्रबोधभाजः वर्षापगमात् प्रबुद्धस्य परमस्य पुंसो नारायणस्य मुक्तनिद्रे परित्यक्तनिद्राजाड्ये अतएव व्यपेतोऽपगतः पाथोधरैर्मेघरूपैः पक्ष्मभिः परस्परश्लिष्टैर्नयनलोमभिः कृत्वा रोध आवरणं ययोस्ते द्वे विलोचने

मौनं मयूरीषु नदीषु कार्श्यं
विपाण्डरत्वञ्च वलाहकेषु ।
शरद्यभीष्टागमनिर्वृताभि-
र्न्यासीकृतानीव वियोगिनीभिः ॥७७॥

आसाद्य वर्षारजनीविरामं
प्रबोधहेतोर्मकरध्वजस्य ।
पठद्भिरुच्चैरिव मङ्गलानि
कुलैः शुकानामुदकूजि हृद्यम् ॥७८॥

किल नयने इव किलोत्प्रेक्षायाम्। सूर्याचन्द्रमसौ हि परमार्थतः परमपुरुषस्य नयने तथापि आकाशदृश्यमानयोस्तयोस्तथात्वाप्रतीतेरुत्प्रेक्षा सा च पाथोधरपक्ष्मेति रूपकोज्जीविता ॥ ७६ ॥

मौनमिति। वियोगिनीभिः पूर्वं प्रियप्रवासजनितविरहिणीभिः संप्रति शरदि अभीष्टानां प्रोषितप्रियाणाम् आगमेन गृहागमनेन निर्वृताभिर्विरहापगमेन सुखिनीभिः सतीभिः एतानि विरहचिह्नानि न्यासीकृतानीव न्यस्तानीव। किं किं कुत्र कुत्र न्यस्तमित्याह मयूरीषु मौनं मूकत्वं न्यासीकृतं शरदि मयूराणां मूकत्वात्। तथा नदीषु कार्श्यं कृशत्वं तदा नदीनां क्षीणजलत्वात्। तथा वलाहकेषु मेघेषु। वारिवाहकस्य वहाहकनिपातः। विपाण्डरत्वं पाण्डुत्वञ्च न्यासीकृतं तदा मेघानां जलापगमेन पाण्डुत्वात्। न्यासीकृतानीत्यनेन शरदपगमे पुनरपि विरहसद्भावः सूचितः। क्रियोत्प्रेक्षेयम् ॥ ७७ ॥

आसाद्येति। वर्षा एव रजन्यः देवानां शयनकालत्वाद्रात्रयः तासां विरामम् अवसानम् आसाद्य प्राप्य मकरध्वजस्य देवत्वान्निद्रितस्य कामस्य प्रबोधहेतोर्जागरणार्थं मङ्गलानि मङ्गलालापान् उच्चैः पठद्भिरिव शुकानां कुलैः हृद्यं मनोज्ञं यथा तथा उदकूजि उच्चैः शब्दितम्। भावे लुङ्। शरदि शुकालापाः कामोद्दीपका इति भावः। उत्प्रेक्षा ॥ ७८ ॥

विशीर्णसंक्रन्दनचापलेश-
च्छवीनि कीर्णानि तरुस्थलीषु ।
सलीलमादाय मयूरवर्हा-
ण्युत्तंसयन्तिस्म किरातनार्यः ॥७८॥

पयोदकालेन समुद्रगाणां
सम्भोगमुत्पाद्य समुज्झितानाम् ।
नवा नखाङ्का इव रेजुरुच्णां
शृङ्गाग्ररेखास्तटसीम्नि लग्नाः ॥८०॥

विशीर्णेति। किरातनार्यः शवर्यः विशीर्णः संपूर्णमेघाभावेन जर्जरप्रायो यः संक्रन्दनचापः इन्द्रधनुस्तस्य लेशः खण्डं तद्वत् छविर्दीप्तिर्येषां तानि। "संक्रन्दनो दुश्च्यवनस्तुराषाण्मेघवाहन" इत्यमरः। तथा तरूणां स्थलीषु वनेषु कीर्णानि पतितानि। शरदि मयूराणां वर्हपतनादिति भावः। मयूराणां वर्हाणि पिच्छानि आदाय सलीलं सविलासं यथा तथा उत्तंसयन्तिस्म कर्णालङ्कारान् शिरोऽलङ्कारान् वा अकुर्वन्। अयं किरातीनां स्वभावः प्रथमपादगतोपमया संसृष्टः॥ ७८ ॥

पयोदेति। पयोदकालेन वार्षिकसमयेन पुंसेवेति शेषः नखाङ्का इवेति लिङ्गात्। सम्भोगम् आभोगं विस्तारमित्यर्थः अथच सुरतम् उत्पाद्य कृत्वा समुज्झितानां परित्यक्तानां एकत्र वर्षापगमात् अन्यत्र समुद्रगत्वेन परकीयत्वात् सुरतविरामाद्वा। समुद्रगाणां नदीनां नायिकानामिवेति शेषः तटसीम्नि तीरभुवि अन्यत्र स्तनतटे लग्ना नवाः प्रत्यग्रा नखाङ्का इव नखक्षतानीव उच्णां वृषाणां शृङ्गाग्ररेखाः विषाणाग्रकृतोत्खातचिह्नानि रेजुः शुशुभिरे। अत्र शृङ्गाग्ररेखासु नखाङ्कसाम्यस्य वाच्यत्वात् पयोदकाले नायकसाम्यस्य नदीषु च नायिकासाम्यस्यार्थत्वादेकदेशविवर्तिन्युपमा सा च सम्भोगादिशब्दश्लेषमूलातिशयोक्त्युज्जीविता। औपम्यगर्भसमासोक्तिरियमिति केचित् ॥ ८० ॥

समुद्रपानोत्थितवक्त्रजाड्य-
निवृत्तये कुम्भभवेन सद्यः।
उद्गच्छता पीतजला इवाच्छाः
पत्न्यः पयोधेः कृशतामवापुः ॥८१॥

व्यपेतनृत्याः परिमन्दनादा-
निरस्तबर्हाः शिखिनो न रेजुः।
लयं गते लास्यगुरौ पयोदे
तत्कालदीक्षामिव धारयन्तः ॥८२॥

विनिद्रनीलोत्पललोचनानि
प्रफुल्लबन्धूकललामभाञ्जि।

समुद्रेति। अच्छाः स्वच्छजलाः पयोधेः समुद्रस्य पत्न्यो नद्यः उद्गच्छता शरद्युदितेन कुम्भभवेनागस्त्येन कर्त्रा समुद्रपानेन उत्थितं जातं यद्वक्त्रस्य मुखस्य जाड्यं वैरस्यं तस्य निवृत्तये नाशाय पीतं जलं यासां तादृश्य इवेत्युत्प्रेक्षा कृशतां क्षीणतामवापुः प्रापुः। अन्योऽपि विरसक्वाथादिपानकृतवक्त्रवैरस्यनाशाय स्वच्छजलं पिबति ॥ ८१ ॥

व्यपेतेति। व्यपेतं विगतं नृत्यं येषां ते तथा परिमन्दनादाः कर्कशकेकाः तथा निरस्तबर्हा गलितपुच्छाः ईदृशाः शिखिनो मयूराः लास्यगुरौ नृत्योपदेष्टरि पयोदे मेघे लयं गते वर्षाविगमात् विलीने अथच मृते सति तत्कालदीक्षाम् आचार्यवियोगसमयविहितनियमं धारयन्त इव पालयन्त इव न रेजुः शुशुभिरे। गुरुवियोगे हर्षाभावात् नृत्यादयो न कर्तुमुचिता इति भावः। अत्र शरत्स्वभावकृतनृत्यादिविगमे पयोदगुरुलयकृतदीक्षाधारणजन्यत्वस्य सम्भाव्यमानत्वादुत्प्रेक्षा ॥ ८२ ॥

विनिद्रेति। विनिद्राणि विकचानि यानि नीलोत्पलानि तानि लोचनानीव येषां तानि तथा प्रफुल्लानि बन्धूकानि बन्धजीवकपुष्पाणि ललामानीव

मुखानि रम्याणि दिगङ्गनानां
भान्तिस्म हासैरिव हंसयूथैः ॥८३॥
निशा निशीथिनीकान्तकान्तिसन्ततिसन्तताः ।
विरेजुः कामदेवस्य यशोभिरिव शोभिताः ॥८४॥

इति राघवपाण्डवीये महाकाव्ये
पञ्चमः सर्गः ।

रक्तत्वात् सैन्दूरभूषणानीव तानि भजन्त इति तानि । "भूषाराजप्रवारेषु ललामञ्च ललाम च" इति शाश्वतः । अतएव रम्याणि मनोज्ञानि दिशोऽङ्गना इव दिगङ्गनास्तासां मुखानि साम्मुख्यानि आभोगा इत्यर्थः अथच वदनानि हासैर्हास्यैरिव हंसयूथैः राजहंसमण्डलैर्भान्ति स्म शुशुभिरे । लुप्तवाच्योपमानां सङ्करः मुखानीति श्लेषमूलातिशयोक्त्युज्जीवितः ॥ ८३ ॥

निशाइति । निशाः शरद्रात्रयः निशीथिनीकान्तस्य चन्द्रस्य कान्तिसन्ततिभिः करजालैः सन्तताव्याप्ताः सत्यः कामदेवस्य शरद्रजनीविजृम्भणेन वशीकृतसकलभुवनस्य कन्दर्पस्य अथच एतत्काव्यकारयितुः कामदेवनृपतेर्यशोभिः शोभिता धवलिता इव विरेजुः । अत्रानुप्रासोत्प्रेक्षयोः शब्दार्थालङ्कारयोरेकाश्रयानुप्रवेशः सङ्करः ॥८४॥

इति श्रीप्रेमचन्द्रतर्कवागीशभट्टाचार्यविरचितायां राघवपाण्डवीयमहाकाव्यटीकायां कपाटविपाटिकाख्यायां पञ्चमः सर्गः ।

---

# षष्ठः सर्गः ।

समग्रवैकर्तनशक्तिरग्रे
प्रोद्यत्सुशर्माथ स धार्तराष्ट्रः ।
तदा शरत्काल इवैत्य राज्ञो
विनिष्पतज्जीवधनं रुरोध ॥१॥

समग्रेति । अथ प्रयाणप्रतिबन्धकवर्षापगमानन्तरं शरत्कालः एत्यागत्य राज्ञो रामस्य तदा विनिष्पतत् सीतावियोगवेदनां सोढुमशक्ततया वहिर्गन्तुमिच्छत् जीवोजीवनमेव धनं तत् रुरोधेव आवृणोदिवेत्युत्प्रेक्षा शरदः प्रयाणयोग्यत्वात् प्रयाणेन च रावणमाक्रम्य सीतालाभस्य सम्भाव्यमानत्वात् रामस्य जीवनं किञ्चित् स्थिरं जातमिति भावः । किम्भूतः अग्रे प्रथमतः समग्रा मेघापगमेन संपूर्णा वैकर्तनी विकर्तनः सूर्यस्तत्सम्बन्धिनो शक्तिस्तेजोयत्र सः समग्रसुग्रीवशक्तिरिति वा तस्यापि सूर्यपुत्रत्वात् । तथा प्रोद्यत् जिगीषुणां जायमानं सुशोभनं शर्म सुखं यस्मात् सः तथा सधार्तराष्ट्रः राजहंसविशेषैः सहितः । अत्र इवेत्युत्प्रेक्षायां रुरोधेति क्रियया तस्य सम्बन्धः उत्प्रेक्षावाचकस्यास्य व्यवहितयोजना न दोषायेति ध्येयम् ।

पक्षे अथ कीचकवधप्रोत्साहितस्य पूर्वपराजितस्य सुशर्मन्नृपतेः प्रेरणानन्तरं स प्रसिद्धो धार्तराष्ट्रो दुर्योधनः तदा युधिष्ठिरादीनां विराटपुरवासकाले शरत्काल इव एत्यागत्य राज्ञोविराटस्य विनिष्पतत् गोष्ठान्निर्गच्छदेव जीवाः प्राणिनः सामान्यशब्दस्य विशेषलक्षणया गाव इत्यर्थः तद्रूपं धनं विराटस्य गोधनानां बाहुल्यादिति भावः रुरोध जग्राह किम्भूतः समेग्रा उद्रिक्ता वैकर्तनेन विकर्तनपुत्रेण कर्णेन शक्तिः प्रभावजादिसामर्थ्यं यस्य सः तथा अग्रे प्रोद्यन् दक्षिणगोग्रहार्थं प्रथमं गच्छन् सुशर्मा तन्नामन्नृपतिर्यस्य यस्माद्वा सः शरत्कालोऽपि पूर्वोक्तव्याख्यानुसारेण पूर्वोक्तविशेषणत्रयवान् भवति ।

द्विषा तदागोग्रहणे निबद्धे
राज्ञा प्रतीकारपरेण नुन्नम् ।
सद्यः प्रसर्पद्धरिसैन्यमुद्यद्-
गजप्रचारोज्ज्वलमुच्चचाल ॥२॥
गतेषु सैन्येषु सुशर्महेतोः
स लब्धचिह्नः सुनयोत्तरश्रीः ।

"धार्तराष्ट्रः कौरवेऽह्नौ कृष्णास्याङ्घ्रिसितच्छदे" इत्युभयत्रापि हेमचन्द्रः। अत्रेव-शब्दस्य सादृश्यवाचकत्वादुपमालङ्कारः ॥१॥

द्विषेति। द्विषा शत्रुणा रावणेन तस्मिन् रामे आगसोऽपराधस्य पत्नी-हरणरूपस्य ग्रहणं धातूनां स्वतोऽनेकार्थत्वात् करणमित्यर्थः तस्मिन् निबद्धे निश्चिते सति सीताहरणे रावणकृतत्वेन सुग्रीवेण निश्चिते सतीत्यर्थः प्रतीकारो वैरनिर्यातनम्। प्रादेर्घञि बहुलमिति दीर्घः। तत्परेण तदर्थमुद्युक्तेन राज्ञा सुग्रीवेण नुन्नं सीतान्वेषणाय प्रेरितं सद्यस्तत्क्षणमेव प्रसर्पत् उत्तिष्ठत् तथा उद्यत् वर्द्धमानं सोत्साहमित्यर्थः तथा गजस्य तन्नामकवानरविशेषस्य प्रचारेण उज्ज्वलं हरिसैन्यं वानरसैन्यम् उच्चचाल सीतान्वेषणार्थं समन्तात् प्रतस्थे।

पक्षे तदा द्विषा सुशर्मणा गवां ग्रहणे हरणे निबद्धे कृते सति दक्षिणस्यां दिशीति शेषः प्रतीकारपरेण राज्ञा विराटेन सद्यस्तत्क्षणात् नुन्नं सैन्यम् उच्चचाल किम्भूतं प्रसर्पन्तो हरयोऽश्वा यत्र तत् तथा उद्यत् रथैः शोभमानं तथा गजानां हस्तिसैन्यानां प्रचारेण उज्ज्वलम् उद्भटं हस्त्यश्वरथपादातात्मकं चतुरङ्गसैन्यं जगामेत्यर्थः। "यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु। शुकाहि-कपिभेकेषु हरिर्ना कपिले त्रिषु" इत्यमरः॥ २ ॥

गतेष्विति। सैन्येषु वानरबलेषु सुशर्महेतोः सीतावार्तानयनेन रामस्य अतिसुखार्थं गतेषु तासु तासु दिक्षु प्रयातेषु सत्सु स प्रसिद्धबलवान् हरेर्वायो-स्तनूजः पुत्रो हनूमान् लब्धचिह्नः गृहीतरामाङ्गुरीयकरूपाभिज्ञानः अतएव

हरेस्तनूजः प्रतिपन्नकालं
नृपप्रियान्वेषणतत्परोऽभूत् ॥३॥
समृद्धतेजाः सगृहीतहेतिः
शमीं समासाद्य यथा कृशानुः।
नरेन्द्रसूनोरवधूय शङ्कां
कुर्वन् प्रतस्थे विजयप्रतीतिम् ॥४॥

सुनयोत्तरा सुनीतिप्रधाना श्रीर्मतिर्यस्य सः साभिज्ञानप्रस्थानस्य सुनीतिमद्दूतकार्यत्वादिति भावः। "श्रीर्लक्ष्म्यां सरलद्रुमे। वेशोपकरणे वेशरचनायां मतौ गिरि" इति हेमचन्द्रः। तादृशश्च सन् प्रतिपन्नकालं प्राप्तकालं यथा तथा भर्तुरुपकारकालोऽयमिति मत्वेत्यर्थः नृपस्य रामस्य प्रियायाः सीताया अन्वेषणे तत्परोऽभूत् उद्युक्तोबभूव।

पक्षे सुशर्महेतोः सुशर्मन्नृपतेः प्रतीकाराय सैन्येषु विराटभीमादिसहितेष्विति शेषः गतेषु दक्षिणगोग्रहस्थानं प्रयातेषु सत्सु सं हरेरिन्द्रस्य तनूजोऽर्जुनः लब्धचिह्नः गृहीतगाण्डीवादिचिह्नः तथा सुनयः सुनीतिमान् य उत्तरः विराटतनयस्तेन श्रीः शोभा यस्य सः उत्तरसहित इत्यर्थः तादृशः सन् प्रतिपन्नोनिश्चितः कालस्त्रयोदशवर्षाधिकसमयो यत्र तद्यथा तथा द्वादशवर्षान् वने वासः एकञ्च वर्षमज्ञातवासः पूर्वं प्रतिज्ञातस्तदधिकोऽयं कालो नास्माकं प्रकाशे हानिरिति निश्चित्येत्यर्थः नृपस्य विराटस्य यत्प्रियम् उत्तरगोग्रहस्थाने दुर्योधनादीन् निर्जित्य गवामानयनरूपं तस्य अन्वेषणे साधने तत्परोऽभूत् उत्तरगोग्रहस्थानं जगामेत्यर्थः ॥ ३ ॥

समृद्धेति। स हनूमान् नरेन्द्रसूनोरामस्य विजयस्य प्रतीतिं निश्चयं कुर्वन् अतिबलवानयं रामोऽवश्यमेव सीतापहारकं विजेष्यत इति निश्चयं कुर्वन्नित्यर्थः अतएव शङ्काम् अवधूय वृथायमस्माकं श्रमः आनीतायामपि सीतावार्तायां रामोऽपहारकस्य प्रतिकर्तुं शक्ष्यति नवेति वितर्कं परित्यज्येत्यर्थः प्रतस्थे जगाम दाक्षिणां दिशमिति शेषः किम्भूतः शमीं शमीवृक्षं समासाद्य

गच्छन् विलङ्घ्य नगरोपवनान्तराणि
सम्पातिपत्त्ररथसूचितकार्यसिद्धिः।
वीरो ददर्श करिनक्रकरालमग्रे
घोषोद्धतं सलिलराशिमिवारिसैन्यम् ॥५॥

प्राप्य गृहीतहेतिः प्राप्तज्वालः शम्यां वह्निप्रादुर्भावस्य प्रसिद्धेरिति भावः कृशानुर्यथा वह्निरिव समृद्धं संवृद्धं तेजोबलं यस्य सः।

पक्षे सोऽर्जुनः शमीं पूर्वसंस्थापितबाणायस्त्रकं श्मशानप्रदेशस्थं शमीवृक्षं समासाद्य गृहीतहेतिर्गृहीतबाणायस्त्रः। "हेतिः स्यादायुधज्वालासूर्यतेजः-सूर्योषिति" इति मेदिनी। अतएव कृशानुर्यथा वह्निरिव समृद्धतेजाः सन् नरेन्द्रसूनोर्विराटपुत्रस्योत्तरस्य विजयप्रतीतिं तत्तत्परिचयेन सत्यं विजयोऽर्जुनोऽयमिति निश्चयं कुर्वन् कृत्वा। "विजयोजये पार्थे विमाने" इति हेमचन्द्रः। शङ्कां त्रासम् अवधूय निराकृत्य प्रतस्थे कौरवसैन्यं प्रति जगाम। पूर्वार्द्धे उपमा ॥४॥

गच्छन्निति। नगराणि उपवनानि अन्तराणि प्रान्तराणि च विलङ्घ्यातिक्रम्य गच्छन् वीरः शूरः। धीर इति पाठे धैर्ययुक्तो हनूमान् सम्पातिनामा यः पत्त्ररथः पक्षी जटायुभ्राता तेन सूचिता व्यक्तीकृता कार्यस्य सीतानुसन्धानस्य सिद्धिर्यस्य तादृशः सन्। सीतामनुपलभ्य प्रायोपवेशेन मरणोद्यतेषु वानरेषु सम्पातिनागत्य वृत्तान्तमवगत्य सीता रावणेन लङ्कामानीता यूयं तत्र गच्छतेत्यादि कथितमिति रामायणस्वरसः। करिभिर्जलकुञ्जरैर्नक्रैः कुम्भीरैश्च करालं भयङ्करं तथा घोषैस्तरङ्गशब्दैरुद्धतमुद्भटम् अरिसैन्यमिव साक्षात् शत्रुबलमिवेत्युत्प्रेक्षा अग्रे सम्मुखे वर्तमानं प्रथमं वा सलिलराशिं समुद्रं ददर्श। अत्र इवशब्दस्योपमानोत्तरत्वाभावान्नोपमा किन्तूत्प्रेक्षैवेति ध्येयम्।

पक्षे नगरस्य विराटपुरस्य उपवनानाम् अन्तराणि अवकाशान् वहिः-प्रदेशान् वा। "अन्तरमवकाशावधिपरिधानभेदतादर्थ्ये छिद्रात्मीयविनावहि-रवसरमध्येऽन्तरात्मनि च" इत्यमरः। विलङ्घ्य गच्छन् तथा सम्पातीनि सम्यग्गमनवन्ति पत्त्राणि वाहनानि। "पत्त्रन्तु वाहने पर्णे" इति मेदिनी।

पुरा समाक्रान्तमहेन्द्रभूभृत्
ससिन्धुराजं गुरुभीष्मदुर्गम्।
व्यलङ्घयत्तं मनसा समान-
प्रवृत्तिरभ्रान्तगतिः परौघम् ॥६॥
शैलेऽप्यसावस्खलितप्रवृत्ति-
र्गच्छन्नदीनोत्प्लवनप्रगल्भः।

अथवा इत्यर्थः यत्र तादृशो यो रथस्तेन सूचिता कार्यस्य विजयस्य सिद्धिर्यस्य सः। प्रयाणकाले हि वाहनस्याविक्लवगत्या कार्यसिद्धिः सूच्यते। सम्पातिभिरुड्डयमानैः पत्ररथैः शुभशकुनैः सूचितकार्यसिद्धिरिति वा तादृशो वीरोऽर्जुनः करिणो नक्रा इव तैः पक्षे करिसदृशैर्नक्रैः करालं तथा घोषैः सिंहनादादिभिः पक्षे तरङ्गशब्दैरुद्धतं सलिलराशिमिव अरिसैन्यं कौरवबलम् अग्रे ददर्श के केऽत्रागता इति प्रथमं दृष्टवान्। उपमा ॥ ५ ॥

पुरेति। मनसा समाना प्रवृत्तिर्गमनयत्नो यस्य सः अतिवेगवानित्यर्थः तथा अभ्रान्तगतिः सुरसादिभिरप्यव्याहतगमनः सः हनुमान् पुरा प्रथमं समाक्रान्त आरूढो महेन्द्रभूभृत् महेन्द्रपर्वतो येन तादृशः सन् गुरुर्महान् शतयोजनविस्तीर्ण इत्यर्थः तथा भीष्मस्तरङ्गादिभिर्भयङ्करः अतएव दुःखेन गच्छत्यस्मिन् दुर्गः। सुदुरोऽधिकरणे इत्यधिकरणे डः। सच सच सचेति परस्य विशेष्यत्वकल्पनया कर्मधारयः। तादृशं तथा परौघं प्रबलजलवेगं तं लङ्कोत्तरदिग्वर्तिनं सिन्धूनां नदीनां राजा प्रभुः पतिरित्यर्थः। "राजा प्रभौ च नृपतौ" इति मेदिनी। तं समुद्रं व्यलङ्घयत् लङ्घितवान्।

पक्षे मनसा समानप्रवृत्तिः क्षिप्रकारी तथा अभ्रान्तगतिरमोघशरजयोऽर्जुनः पुरा प्रथमं समाक्रान्तो महेन्द्रभूभृत् महेन्द्रः शक्रस्तत्सदृशोभूभृद्राजा दुर्योधन इत्यर्थः येन तादृशः सन् अर्जुनोऽयमिति मत्वा भीतेन भीष्मादिना स्वनगराय प्रस्थापितं दुर्योधनं प्रथमं समाक्रम्येत्यर्थः ससिन्धुराजं जयद्रथसहितं तथा गुरुणा द्रोणेन भीष्मेण च दुर्गं तं परौघं शत्रुवृन्दम्। "ओघोवेगे जलस्य च। वृन्दे परम्परायाञ्च" इति मेदिनी। व्यलङ्घयत् विवेश ॥ ६ ॥

प्राप्योपकण्ठं परमण्डलस्य
दहर्श संस्थानविशेषशोभाम् ॥७॥
परचक्रं परिक्रामन्नशोकगहनं गतः ।
क्षणादिव कृतार्थोऽभून्माहेयीदर्शनेन सः ॥८॥

शैल इति । शैलेऽपि विश्रामार्थमभ्यर्थनपरे मैनाकाचलेऽपि अस्खलितप्रवृत्तिरवारितगमनप्रयत्नः सन् गच्छन् तथा नदीनाम् इनः पतिः समुद्रस्तस्योत्प्लवने उल्लङ्घने प्रगल्भः प्रतिभान्वितस्तत्पर इत्यर्थः असौ हनूमान् परमण्डलस्य शत्रुदेशस्य लङ्कायाः इत्यर्थः उपकण्ठं समीपं प्राप्य संस्थानविशेषाणां पुरसन्निवेशभेदानां शोभां दहर्श संस्थानस्य चतुष्पथस्य विशेषशोभामिति वा। "संस्थानमाकृतौ मृत्यौ सन्निवेशे चतुष्पथे" इति मेदिनी ।

पक्षे शैलेऽपि शैलोत्पाटनेऽपि अस्खलितप्रवृत्तिरसङ्कोचितप्रयत्नः शैले इन्द्रकीले इन्द्रकीलाधिकृतकैरातयुद्धेऽपीत्यर्थः इति वा यस्य कैरातयुद्धे प्रवृत्तिरासीत् तस्य कौरवयुद्धं कियदित्यर्थापत्तिः । तथा अदीनम् अक्षीणं वीर्योदग्रमित्यर्थः यत् उत्प्लवनम् आक्रमणं तत्र प्रगल्भः यद्वा नद्यां गङ्गायां भवो नदीनो भीष्मः । भवार्थे ईनः । तस्य उत्प्लवने प्रगल्भः सन् गच्छन् धावन् असावर्जुनः परमण्डलस्य शत्रुनिवहस्य उपकण्ठं प्राप्य संस्थानविशेषस्य व्यूहरचनायाः शोभां दहर्श । "मण्डलं परिधौ कोठे देशे द्वादशराजसु । क्लीवे तु निवहे बिम्बे त्रिषु पुंसि तु कुक्कुरे" इति मेदिनी ॥ ७ ॥

परेति । स हनूमान् परस्य शत्रोश्चक्रं राष्ट्रं लङ्कां परिक्रामन् सीतान्वेषणाय परिभ्रमन् अनन्तरम् अशोकगहनम् अशोकवनं गतः सन् मह्याः पृथिव्या उत्पन्ना माहेयी सीता तस्या दर्शनेन क्षणादिव क्षणेनैव । एवार्थे इवशब्दः । यद्वा क्षणात् कृतार्थ इव निष्पादितप्रयोजन इव अभूत् रामाय सीतावार्तार्पणं प्रयोजनं तच्च सीतादर्शनमात्रेणैव कृतप्रायं सम्भावयामासेत्युत्प्रेक्षा ।

पक्षे परचक्रं शत्रुसैन्यं परिक्रामन्नाक्रामन् मर्दयन्नित्यर्थः तथा शोकगहन शोकरूपं शोकजनितं वा गहनं दुःखं न गतः वीरत्वान्न प्राप्तः । यद्वा शोकेन गहनं काननं व्याप्तमित्यर्थः । "गहनं वनदुर्गयोः । गह्वरेकलिले च" इति हेमचन्द्रः । तन्न भवतीत्यशोकगहनं यथा स्यात्तथा परचक्रं गतः सोऽर्जुनः

दृष्ट्वैव तां भासुरराजगोत्रां
दीनामनाथां क्षितिरेणुकीर्णाम्।
परोपरोधव्यसनातिभारा-
दमोचयल्लङ्घितगोप्रचारः ॥९॥
तस्याश्च गोपालसमागमाशां
सम्पाद्य सन्दर्शितराजचिह्नः।

परिक्रामन् सन् माहेयीनां गवां दर्शनेन। "माहेयी सौरभेयी गौः" इत्यमरः। क्षणादिव कृतार्थोऽभूत् गवां प्रत्याहरणस्य विराटकार्यस्य सिद्धप्रायत्वं मन्यमानो बभूव ॥ ८ ॥

दृष्ट्वैवेति। गावोजलानि प्रचरन्त्यस्मिन् स गोप्रचारः समुद्रः लङ्घितो गोप्रचारोयेन सः। यद्वा लङ्घितोऽतिक्रान्तो गवां लोकचक्षुषां प्रचारः सन्निकर्षोयेन सः जनैरदृष्ट इत्यर्थः। "स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले। लक्ष्यदृष्ट्या स्त्रियां पुंसि गौः" इत्यमरः। तादृशोहनूमान् भासुरं दीप्तं राजगोत्रं राजकुलं यस्यास्तां प्रशस्तराजवंश्यामित्यर्थः। "सन्ततिर्गोत्रजनन-कुलान्यभिजनान्वयौ" इत्यमरः। तथा अनाथां पतिवियुक्ताम् अतएव दीनां दुःखितां तथा क्षितिरेणुभिः कीर्णां भूमिलुण्ठनेन धूलिधूसरां तां सीतां दृष्ट्वैव परस्य शत्रो रावणस्य य उपरोधोऽवरोधनं तद्रूपात् व्यसनाति-भारात् विपदतिशयादमोचयत् रामवृत्तान्तकथनेन किञ्चित् सुस्थां चकारेत्यर्थः।

पक्षे लङ्घितगोप्रचारः प्राप्तगोप्रचरणस्थानोऽर्जुनः अनाथां पालरहिताम् अतएव दीनां तथा क्षितिरेणुकीर्णां भासुरस्य तेजस्विनो राज्ञो विराटस्य गोत्रां गोगणाम्। "गोत्रा गवां गणे" इति हेमचन्द्रः। दृष्ट्वैव नतु विलम्बेन शत्रूणां झटिति पराभूतत्वादिति भावः परोपरोधव्यसनातिभारात् दुर्योधन-कृतहरणजनितदुःखातिशयादमोचयत् ॥ ९ ॥

तस्याश्चेति। स हनूमान् सन्दर्शितं राज्ञो रामस्य चिह्नम् अङ्गुरीयकरूपा-भिज्ञानं येन तादृशः सन् तस्याः सीतायाः। चकारः पूर्वापेक्षया समुच्चये व्यञ्जनक्रिययान्वेति। गां पृथिवीं पालयतीति गोपालो राजा रामस्तस्य

स व्यञ्जयामास हरेस्तनूज-
मात्मानमर्कात्मजशासनस्थम् ॥१०॥
प्रयत्नवानुत्तरकीर्तिसिद्धये
प्रदर्शयिष्यन् बहुशक्तिसम्पदम् ।
स तालबाणासनकर्षणं द्विषां
पुरः स्फुरत्केतु वनं बभञ्ज ॥११॥

समागमाशां पुनः प्राप्ताशंसां संपाद्य आत्मानम् अर्कात्मजस्य सूर्यपुत्रस्य सुग्रीवस्य शासनस्थम् आज्ञावर्तिनं तथा हरेर्वायोस्तनूजं पुत्रं व्यञ्जयामास च वायुपुत्रो हनूमानहं रामभित्रस्य सुग्रीवस्याज्ञया त्वदन्वेषणार्थमवागत इति कथयामासेत्यर्थः ।

पक्षे सोऽर्जुनः तस्या गोत्राया गोपालानां गोरक्षकाणां समागमो यत्र तादृशीम् आशां दिशं सम्पाद्य गोत्रां गोपालाधिष्ठितायां दिशि प्रस्थाप्येत्यर्थः सन्दर्शितं राज्ञः क्षत्रियस्य चिह्नं युद्धनैपुण्यं राज्ञः शक्रस्य चिह्नं तद्दत्तबाणादिकं वा येन तादृशः सन् । "राजा प्रभौ च नृपतौ क्षत्रिये रजनीपतौ यक्षे शक्रे च पुंसि स्यात्" इति मेदिनी । हरेरिन्द्रस्य तनूजम् आत्मानम् अर्कात्मजस्य सूर्यपुत्रस्य कर्णस्य शासने शास्तौ इत्यर्थः तिष्ठतीति तादृशं व्यञ्जयामास । "शासनं नृपदत्तोर्व्यां शास्त्राज्ञालेखशास्तिषु" इति हेमचन्द्रः । सर्वान् परित्यज्य अस्मत्क्लेशप्रधानहेतोः कर्णस्य शासनं करिष्यामीति वारम्बारतदाक्रमणेन सूचयामासेत्यर्थः ॥१०॥

प्रयत्नेति । स हनूमान् उत्तरकालीना या कीर्तिः राक्षससैन्यवधादिजन्यं यशस्तस्याः सिद्धये बह्वी या शक्तिसम्पत् सामर्थ्यातिशयस्तां प्रदर्शयिष्यन् प्रकर्षेण राक्षसान् दर्शयितुम् । हेतौ शतृप्रत्ययः । प्रयत्नवान् सन् पुरः प्रथमं द्विषां राक्षसानां वनम् उपवनं बभञ्ज किम्भूतं तालानां बाणानां नीलझिण्टीनाम् असनानां जीवकवृक्षाणाञ्च कर्षणं प्रथमत उत्पाटनं यत्र तत् तथा स्फुरन् शोभमानः केतुश्चिह्नविशेषः पताका वा यत्र तत् । "केतुर्ना रुक् पताकादिग्रहोत्पातेषु लक्ष्मणि" इति मेदिनी ।

संभ्रान्तद्रोणमुद्यच्छकुनिकलकलं विह्वलोलूकसार्थं
सद्यो विच्छिन्नगुल्मं क्षपितनृपतरु क्षुण्णपुन्नागपूगम्।
अद्धानुन्नाश्वकर्णं प्रमथितविपुलश्रीफलं धूतधात्री-
चक्रं चक्रे सशोकास्पदमरिगहनं प्रागशोकाभिरामम्

॥१२॥

पक्षे सोऽर्जुनः उत्तरस्य विराटतनयस्य कीर्तिसिद्धये प्रयत्नवान् तथा बहुशक्तिसम्पदं दुर्योधनादीन् प्रदर्शयिष्यन् सन् तालवत् दीर्घं यद्बाणासनं धनुस्तालवाणासनं तस्य कर्षणं यत्र क्रियायां तद्यथा स्यात्तथा तालेन करतलेन वाणासनस्य कर्षणं यत्रेति वा। "तालः करतले" इति मेदिनी। पुरोऽग्रे स्फुरत् द्विषां केतुवनं पताकासमूहं बभञ्ज चिच्छेद ॥११॥

सम्भ्रान्तेति। स हनूमान् प्राक् प्रथमम् अशोकैर्वञ्जुलवृक्षैः अभिरामं मनोज्ञम् अरेरावणस्य गहनम् उपवनं तदानीं शोकास्पदं भङ्गेन गतश्रीकत्वात् शोच्यं चक्रे किम्भूतं सम्भ्रान्ताः आश्रयवृक्षभङ्गाच्चकिताद्रोणाः काकभेदा यत्र तत् तथा उद्यन् उत्तिष्ठन् शकुनीनां पक्षिणां कलकलः कोलाहलो यस्मात् तत् तथा विह्वलः सम्भ्रान्त उलूकसार्थः पेचकसमूहो यत्र तत् तथा सद्यस्तत्क्षणात् विच्छिन्ना उत्पाटिता गुल्माः स्तम्बा यत्र तथा क्षपिताः क्षयं नीता नृपतरवो राजवृक्षा यत्र तत्। "आरग्वधे राजवृक्षसम्पाकचतुरङ्गुला" इत्यमरः। तथा क्षुण्णाश्चूर्णिताः पुन्नागा देववल्लभवृक्षाः पूगाः क्रमुकाश्च यत्र तत् तथा अद्धा झटिति नुन्नाश्चालिता अश्वकर्णावृक्षभेदा यत्र तत् तथा प्रमथिता रुग्ना विपुला महान्तः श्रीफलामालूरा यत्र तत् तथा धूतं कम्पितं धात्रीचक्रम् आमलकीसमूहो यत्र तत्।

पक्षे सोऽर्जुनः प्राक् अशोकेन शोकाभावेन गोरत्नलाभहर्षेणेत्यर्थः अभिरामम् अरयोगहनमिव अरिगहनं दुर्विगाह्यत्वादरण्यतुल्यानरीनित्यर्थः शोकास्पदं कर्णभ्रात्रादिवीरगणविनाशनेन शोकयुक्तं चक्रे किम्भूतं सम्भ्रान्तो व्याकुलोद्रोणो भारताचार्यो यत्र तत्। "द्रोणः काके कृपीपतौ" इति विश्वः। तथा उद्यन् शकुनेः सौवलस्य कलकलो यस्मात्तत्। "शकुनिः पुंसि विहगे

परामवात्परिकुपितेन भूभृता
प्रदेशिताः प्रचुरबला बलाधिपा ।
समुद्ययुस्तमुपरितोरणस्थितं
शरावलीविरचितदूरदुर्दिनाः ॥ ॥१३॥

सौवले करणान्तरे" इति मेदिनी । तथा विह्वलो य उलूको भारतयोद्धविशेष-स्तद्रूपः सार्थः सयालो यत्र तत् । "उलूकः स्यात्तु काकारविन्द्रे भारतयोधिनि" इति हेमचन्द्रः । तथा सद्योविच्छिन्ना विद्राविता गुल्माः सेना सैन्यरक्षणं वा यत्र तत् । "गुल्मः सेनाघट्टभिदोः सैन्यरक्षणरुग्भिदोः" इति मेदिनी । तथा क्षपिता नृपास्तरव इव यत्र तत् अन्यस्मिन् गहने तरवस्तिष्ठन्ति । तथा क्षुस्तः क्षुद्रतां नीतः पुन्नागानां पुरुषश्रेष्ठानां पूगः समूहो यत्र तत् । "स्युरुत्त-रपदे व्याघ्रपुङ्गवर्षभकुञ्जराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थवाचकाः" इत्यमरः । तथा अद्धा झटिति नुन्नाः पातिता अश्वा यस्य तादृशः कर्णो राधेयो यत्र तत् । तथा प्रमथितं विपुलं महत् श्रियः सम्पत्तेः फलं सौन्दर्यरूपं यत्र तत् । तथा धूतं पूर्वं सगर्वविक्रमेण कम्पितं धात्रीचक्रं भूमण्डलं येन तत् । "धात्री जनन्यामलकीवसुमत्युपमातरि" इति मेदिनी । अस्मिन् पक्षे अरि-गहनमिति लुप्तोपमा । स्रग्धरावृत्तम् ॥ १२ ॥

परामवादिति । पराभवात् वाटिकाभङ्गरूपात् धर्षणात् परिकुपितेन अत्यन्तक्रुद्धेन भूभृता राज्ञा रावणेन प्रदेशिताः प्रेरिताः तथा प्रचुरं प्रभूतं बलं सामर्थ्यं सैन्यं वा येषां ते बलाधिपा राक्षससेनापतयः शरावल्या बाण-परम्परया विरचितं दूरमत्यन्तं दुर्दिनं दुर्दिनवदन्धकारं यैस्तादृशाः सन्तः उपरि तोरणस्थितं वहिर्द्वारोपरितिष्ठन्तम् । "तोरणोऽस्त्री वहिर्द्वारम्" इत्यमरः । तं हनूमन्तं समुद्ययुः प्रापुः समुत्सहर्षं यथा तथा ययुरिति वा ।

पक्षे पराभवात् सेनाविनाशरूपात् परिकुपितेन भूभृता दुर्योधनेन प्रदेशिता बलाधिपा भीष्मादयः उ इति पादपूरणे रोषोक्तौ वा । "उ सम्बोधनरोषोक्त्यो-रनुकम्पानियोगयोः पदपूरणे च पादपूरणेऽपि च दृश्यते" इति मेदिनी । परितः समन्तात् रणस्थितं लघुहस्तत्वात् रणस्थैः सर्वैः सह युद्धान्तमित्यर्थः तमर्जुनं समुद्ययुः अन्यत् समानम् । रुचिरावृत्तं लक्षणमुक्तं प्राक् ॥१३॥

उदायुधैर्व्यरुचदसौ पताकिभि-
र्विरोधिभिर्मृधभुवि कोष्ठकीकृतः।
तडिच्छटाद्युतिजटिलैर्बलाहकै-
र्बलाकिभिर्वृत इव विन्ध्यभूधरः ॥१४॥

परोज्झितानपि परमर्मभेदिनः
सपत्रिणस्तृणमिव चिन्तयन् चणात्।
व्यलोड़यद्रणभुवि वैरिमण्डलं
मदोत्कटो गज इव पल्वलं बली ॥१५॥

उदायुधैरिति। असौ हनूमान् पक्षेऽर्जुनः मृधभुवि युद्धभूम्याम् उदायुधैरुल्लासितप्रहरणैः तथा पताकिभिः सध्वजैर्विरोधिभिः शत्रुभिः कोष्ठकीकृतः मध्यगतीकृतः वेष्टित इत्यर्थः। "कोष्ठः कुसूले चात्मीये मध्ये कुक्षौ गृहस्य च" इति मेदिनी। ततः स्वार्थिकः कप्रत्ययः। तादृशः सन् तडिच्छटानां विद्युद्दाम्नां द्युतिभिः कान्तिभिर्जटिलैः जटायुक्तैरिव व्याप्तैरित्यर्थः। इदम् उदायुधैरित्यस्य प्रतिविम्बनम्। तथा बलाकिभिर्वकपङ्क्तिसहितैः। इदं पताकिभिरित्यस्य प्रतिविम्बनम्। "बलाका वकपङ्क्तिः स्याद्बलाका विसकण्ठिका। बलाका कामुकीमाहुर्बलाकास्तु वको मतः" इति शाश्वतः। तादृशैर्बलाहकैर्मेघैर्वृतो विन्ध्यभूधर इव व्यरुचत् शुशुभे। अत्रेवशब्दस्योपमानोत्तरत्वाभावान्नोपमा किन्तूत्प्रेक्षा तथा च शत्रवस्तस्य किञ्चिदप्यपकर्तुं न शक्ता इति वस्तु ध्वन्यते ॥ १४ ॥

परोज्झितानिति। स बली बलवान् हनूमान् पक्षेऽर्जुनः परैः शत्रुभिरुज्झितान् क्षिप्तान्। अपिर्भिन्नक्रमे। परस्य मर्मभेदिनोऽपि पत्रिणो बाणान् तृणमिव चिन्तयन् तृणवदसारान् मन्वानः सन् रणभुवि युद्धभूम्यां मदोत्कटो मदकलो गजः पल्वलमल्पसर इव वैरिमण्डलं रिपुकुलं चणात् उत्सवात् न तु भयात्। "चण उद्धव उत्सवः" इत्यमरः। व्यलोड़यत् विगाहितवान्। उपमा ॥ १५ ॥

निरन्तरशरव्रातंतिरोहितदिगन्तरः ।
ससैन्यपूरः परितः प्रापदक्षस्तमाहवे ॥१६॥
विकलितरथवंशं मङ्क्षुभग्नाक्षभावात्
प्रमथितबलनाथं रुद्धभीष्मप्रभावम् ।
क्षपितकृपकृपाणं तत्तदाकर्णकृष्ट-
स्फुरितविपुलचापं सप्तसैन्यं धुनोति ॥१७॥

निरन्तरेति। परितः समन्तात् निरन्तरशरव्रातैः लघुहस्ततया अनवरतक्षिप्तबाणपरम्पराभिस्तिरोहितं दिशामन्तरमवकाशो येन सः तथा सैन्यानां पूरेण प्रवाहेण समूहेनेत्यर्थः सह वर्तमानः ससैन्यपूरः यद्वा परितः सैन्यैः पूरयतीति सैन्यपूरः स प्रसिद्धः अक्षः तन्नामा रावणपुत्रः आहवे युद्धे तं हनूमन्तं प्रापत्।

पक्षे दक्षो युद्धकुशलः स पूर्वं पराभूतः सैन्यपूरः सैन्यसमुदायः आहवे तमर्जुनं परितश्चतुर्दिक्षु प्राप अवेष्टत द्वन्द्वयुद्धेनाजेयं तं मत्वा सर्वे मिलित्वा परितोऽवरुध्य युयुधुरित्यर्थः शेषं तुल्यम् ॥ १६ ॥

विकलितेति। स हनूमान् तदा क्षपिता त्यक्ता कृपा दया यैस्तादृशाः कृपाणाः खड्गा यत्र तादृशमपि तथा आकर्णकृष्टाः कर्णसमीपपर्यन्तमाकृष्टाः स्फुरिताश्चलिता विपुलाश्चापा धनूंषि यत्र तथाविधमपि। एतद्विशेषणद्वये अपिकारो बोध्यः सङ्गतत्वात् भीषणकृपाणचापादिभिरतितरां युद्धादपीत्यर्थः तत्सैन्यं राक्षसबलं धुनोतिस्म क्षोभयामास। क्षोभप्रकारं विशेषणैर्दर्शयति किम्भूतं मङ्क्षु झटिति भग्नः पराजितः विनाशित इत्यर्थः अक्षस्तन्नामा रावणपुत्रो यत्र तत्तथा तस्य भावो मङ्क्षुभग्नाक्षभावस्तस्मात् विनाशिताक्षकुमारत्वादित्यर्थः विकलिता विकलतां नीताः भग्ना इत्यर्थः रथानां वंशाः केतवो यत्र तत् तथा प्रमथिता वृक्षमुष्टिशिलादिभिर्विनाशिता बलनाथाः सेनापतयः प्रहस्तपुत्रादयो यत्र तत् तथा रुद्धो निवारितो भीष्मो भयङ्करः प्रभावो राक्षसानां प्रतापो यत्र तत्। भग्नाक्षभावादित्यत्र भग्नाक्षमारादिति भीष्मप्रभावमित्यत्र भीष्मप्रचारमिति क्वचित् पाठः, अर्थः सुगमः।

निबद्धवैरं सृजता शिलीमुखान्
प्रवर्तितानल्पतरास्त्रतेजसा ।
स राजपुत्रेण जितेन्द्रतेजसा
न्यरोधि दुर्योधन उद्यतोऽपि सन् ॥१८॥
विपक्षवीरैः समितिं प्रवेशितः
समीक्ष्य राजानमसौ सुरद्विषाम् ।

पक्षे सोऽर्जुनः तदा कर्णेन राधेयेन कृष्टः स्फुरितो विपुलश्चापो यत्र तादृशमपि युद्धतत्परकर्णसनाथमपीत्यर्थः तत्सैन्यं दुर्योधनबलं धुनोतिस्म यतः मङ्क्षु तत्क्षणात् मग्नोरुग्नोऽक्षोरथावयवविशेषो यत्र तस्य भावात् । "अक्षो रथस्यावयवे पाशकेऽप्यक्षमिन्द्रियम्" इति शाश्वतः । विकलितरथवंशं तथा प्रमथितबलनाथं तथा रुद्धः सङ्कोचितो भीष्मस्य गाङ्गेयस्य प्रभावो यत्र तत् तथा क्षपितो भग्नः कृपस्य हताश्वसारथेरथादवप्लुत्य खड्गेन योद्धुकामस्य शारत्वतस्य कृपाणो यत्र तत् ॥ १७ ॥

निबद्धेति । निबद्धं भ्रातृवधामर्षाद्गाढं वैरं यत्र तद्यथा तथा शिलीमुखान् वाणान् सृजता विक्षिपता तथा प्रवर्तितम् अनल्पतरं बहुतरम् अस्त्राणां तेजो बलं येन स तथा तेन तथा जित इन्द्रो येन तादृशं तेजः सामर्थ्यं यस्य स तथा तेन इन्द्रजिन्नाम्नेत्यर्थः राज्ञो रावणस्य पुत्रेण मेघनादेन दुर्दृष्टं प्रभो-रनादिष्टत्वान्निन्दितमित्यर्थः यत् योधनं युद्धं तत्र उद्यतः उद्युक्तः सन्नपि । अपि-भिन्नक्रमे वा क्रिययान्वेति । स हनूमान् न्यरोधि अपि ब्रह्मदत्तपाशास्त्रेण निरुद्धोऽपि युद्धेन समस्तराक्षसजयसमर्थोऽपि ब्रह्मदत्तपाशास्त्रमर्यादारक्षणार्थं रावणदर्शनार्थञ्च बद्धोऽपि बभूवेत्यर्थः । दुर्योधनो दुष्टयोद्धा इति प्रथमान्तो वा ।

पक्षे जितेन्द्रतेजसा खाण्डवदाहे सङ्कोचितेन्द्रप्रभावेण राजपुत्रेणार्जुनेन उद्यतः सन्नपि साटोपं युद्धं कुर्वन्नपि दुर्योधनोन्यरोधि पराजितः । शेषं तुल्यम् ॥ १८ ॥

विपक्षेति । असौ हनूमान् विपक्षवीरैरिन्द्रजित्प्रभृतिभिः समितिं सभां

धरात्मजानिग्रहणप्रतिक्रिया
निवेदितार्थैर्वचनैरकोपयत् ॥१९॥
ततो हनूमान् विजयाङ्गभूतः
स्वरेण घोरेण नदन् परेषाम् ।
लाङ्गूललग्नेन हुताशनेन
ददाह लङ्कामिव चित्तवृत्तिम् ॥२०॥

प्रवेशितः पाशास्त्रेण बद्धा सभां नीतः सन् सुरद्विषां राक्षसानां राजानं समीक्ष्य तं धरात्मजायाः भूमिपुत्र्याः सीतायाः यत् निग्रहणं रावणकृतो निग्रहः तस्य या प्रतिक्रिया प्रतीकारस्तत्र विषये निवेदितो बोधितोऽर्थो येषां तादृशैर्वचनैरकोपयत् रामदूतो हनूमानहं सीतान्वेषणार्थमत्रागतः सीता चाशोकवनिकायां रुद्धा दृष्टा तत्प्रतिक्रियार्थं मया वनभङ्गादिकं किञ्चित् कृतं संप्रति सीता रामाय विसर्ज्यतां नचेद्रामः स्वयमागत्य समस्तराक्षसविनाशं करिष्यतीत्यादिवाक्यै रावणं कुपितं चकारेत्यर्थः ।

पक्षे समितिं युद्धम् असौ अर्जुनः सुरद्विषाम् असुरांशसम्भूतानां धरात्मजा यज्ञवेदिसम्भवा द्रौपदी निग्रहणं केशाम्बराकर्षणादिरूपम् । अन्यत् समानम् । "समितिः समवेतार्थे सभायामपि सङ्गरे" इति विश्वः ॥ १९ ॥

तत इति । ततोऽनन्तरं दूतत्वादवध्यस्याप्यस्य लाङ्गूलदाहरूपो दण्डो विधेय इति रावणादेशानन्तरमित्यर्थः विजयस्य रामकर्तृकराक्षसकुलपराजयस्य अङ्गभूतश्चिह्नभूतः राक्षससैन्यवधादिना अवश्यम्भाविरामविजयसूचक इत्यर्थः हनूमान् घोरेण भयङ्करेण स्वरेण नदन् सन् सिंहनादं कुर्वन्नित्यर्थः लाङ्गूललग्नेन राक्षसैर्दत्तेन पुच्छस्थितेन हुताशनेन वह्निना परेषां राक्षसानां चित्तवृत्तिमिव मनोरथमिवेत्युत्प्रेक्षा लङ्कां ददाह भस्मीचकार ।

पक्षे विजयस्यार्जुनस्य अङ्गभूतः अस्य कपिध्वजत्वात् केतुरूपो हनूमान् घोरेण स्वरेण नदन् सन् पूर्वं लाङ्गूललग्नेन हुताशनेन लङ्कामिव परेषां दुर्योधनादीनां चित्तवृत्तिं जयमनोरथं ददाह विनाशयामास हनूमतो घोरस्वरं श्रुत्वा भीतैः शत्रुभिर्जयाशा परित्यक्तेत्यर्थः । उपमा ॥ २० ॥

एवं प्रकाशीकृतवीर्यसम्प-
द्धरेः कुमारो हरिदश्वकल्पः ।
विरोधिनां मूर्द्ध्नि निधाय पादं
यशोऽच्छमुष्णीषमिव व्यमुष्णात् ॥२१॥
प्रभाविनोदी प्रबलाम्बुराशे-
र्विलङ्घनाल्लब्धजयोत्तरश्रीः ।
नृपप्रियोपायनरत्नहारी
पुनः समेयाय तदात्मवर्गैः ॥२२॥

एवमिति । एवं पूर्वोक्तप्रकारेण प्रकाशीकृता वीर्यसम्पत् सामर्थ्यातिशयो येन सः तथा हरिदश्वकल्पः सूर्यवत् तेजस्वीत्युपमा । "भास्वद्विवस्वत्सप्ताश्व-हरिदश्वोष्णरश्मयः" इत्यमरः । हरेर्वायोः कुमारो हनूमान् विरोधिनां राक्षसानां मूर्द्ध्नि शिरसि पादं निधाय चरणमिवार्पयित्वा । प्रतीय-मानोत्प्रेक्षा । उष्णीषहरणस्य नितान्तापमानसूचकत्वादिति भावः तेषां अच्छं निर्मलं यशो व्यमुष्णात् विशेषेणापजहार । काकाक्षिन्यायादनुषङ्गाद्वा विरोधिनामित्यस्य यश इत्यनेनाप्यन्वयः । अत्रोपमाप्रतीयमानोत्प्रेक्षावाच्योत्-प्रेक्षाणां निरपेक्षतया स्थितत्वात् संसृष्टिः ।

पक्षे हरेरिन्द्रस्य कुमारो विरोधिनां दुर्योधनादीनां अच्छं यश इव उष्णीषं व्यमुष्णात् मदर्थं शत्रूणां वसनमानयनीयमित्युत्तरावाक्यमनुस्मृत्य गान्धर्वा-स्त्रेण मोहितानां शत्रूणां विचित्रवसनरचितमुष्णीषं जहारेत्यर्थः उष्णीषमिति जात्याश्रयणादेकवचनम् । शेषंतुल्यं यश इवेत्युत्प्रेक्षा ॥ २१ ॥

प्रभेति । प्रभायाः स्वलाङ्गूलस्थवह्निज्वालाया विनोदी समुद्रजले मज्जनेन निर्वापकः तथा लब्धो ये जयस्तेन उत्तरा उत्कृष्टा जयोत्तरा जयप्रधाना वा श्रीर्यस्य सः तथा नृपप्रिया सीता तस्या यत् उपायनरत्नं तद्दत्तं रामाय देयं शिरोमणिरूपं तद्धरतीति ताद्दशो हनूमान् प्रबलो महान्

ततः समृद्धाङ्गदहेमकुण्डलाः
समेत्य सर्वे कृतमन्त्रनिश्चयाः ।
कृतार्थभावान्मधुरोचितश्रियः
क्षमापतेस्ते पुरतोऽवतस्थिरे ॥२३॥

उपकारगुणज्ञेन राज्ञा तद्विहितस्तदा ।

योऽम्बुराशिः समुद्रस्तस्य विलङ्घनात् विलङ्घनं प्राप्य । यज्ञगर्भत्वात् पक्षतौ । तद्वालवर्गैस्तैरालीयसमूहै रङ्गदादिभिरित्यर्थः पुनः समेयाय सङ्गतोबभूव ।

पक्षे प्रभाविनः प्रतापयुक्तस्यापि दीप्तं अस्त्रपरिच्छदादिभिरुज्ज्वलं बलं शत्रुसैन्यमेव अम्बुराशिः अन्यैरलङ्घ्यत्वात् समुद्रस्तस्य विलङ्घनात् अतिक्रमणाद्धेतोः लब्धो जयो येन तादृशस्य उत्तरस्य विराटतनयस्य श्रीर्जयलक्ष्मीर्यस्मात् सः तथा नृपस्य विराटस्य यत् प्रियोपायनं शत्रुपराजयरूपाभीष्टलाभस्तदेव आह्लादकत्वाद्रत्नं तद्धारो तन्निवेदक इत्यर्थः अर्जुनः तैरालवर्गैर्युधिष्ठिरादिभिः पुनः समेयाय ॥ २२ ॥

तत इति । ततो हनूमदागमनानन्तरं ते सर्वे वानराः समेत्य मिलित्वा कृतोमन्त्रस्य मन्त्रणाया निश्चयो यैस्तादृशाः सन्तः । मन्त्रस्तु रावणादिकं हत्वा सीतां गृहीत्वा श्रीरामसमीपे गन्तव्यमिति बहुभिरस्तै सीतान्वेषणे नियुक्तानामस्माकं न सीतानयनेऽधिकारस्तस्माच्चद्वार्तैव सम्प्रति प्रापणीयेति जाम्बवता कथितं तदेव सर्वैः स्थिरीकृतमिति । क्षमापते रामस्य पुरतोऽग्रे ऽवतस्थिरे उपस्थिताः किम्भूताः कृतार्थभावात् विहितसीतान्वेषणरूपप्रयोजनत्वात् समृद्धः सप्रतिभः अङ्गदो वालिपुत्रः हेमकुण्डलो वानरविशेषश्च येषां ते तथा मधु राति ददातीति मधुरं मधुवनं तत्रोचिता श्रीर्येषां ते अङ्गदादेशात् रक्षकदधिमुखमवज्ञाय विहितमधुपानादिका इत्यर्थः ।

पक्षे ततोऽर्जुनागमनानन्तरं ते सर्वे युधिष्ठिरादयः समृद्धानि महार्घाणि अङ्गदानि केयूराणि हेमकुण्डलानि च येषां ते तथा कृतमन्त्रनिश्चयाः इतःपरमेवं कर्तव्यमिति विहितमन्त्रणावधारणाः तथा कृतार्थभावात् मधुरा मनोज्ञा उचिता योग्या च श्रीर्येषां तादृशाः सन्तः समेत्य क्षमापतेर्विराटस्य पुरतोऽवतस्थिरे ॥ २३ ॥

केलीकलहसंवृत्तप्रहारोऽपि स चक्षमे ॥२४॥

दृष्ट्वैव चूड़ामणिशोभिनस्तां-
स्तच्छक्तिसम्पादितभूरिकार्यः।
सम्भावयामास चिरं नरेन्द्रः
श्रुतप्रियोदन्तनितान्तहृष्टः ॥२५॥

उपकारेति। उपकारः सीतावार्तानयनरूपो यो गुणस्तं जानातीति तेन राज्ञा सुग्रीवेण तैर्हनूमदादिभिर्विहितः कृतः सः केलीकलहेन क्रीड़ाविवादेन संवृत्तः प्रसक्तः प्रहारोऽपि मधुवनरक्षकदधिमुखादिवानरेष्वाघातोऽपि तदा चक्षमे क्षान्तः।

पक्षे उपकारगुणज्ञेन वर्षमेकमाश्रयदानरूपगुणं स्मरता राज्ञा युधिष्ठिरेण तदा उत्तरविजयवार्ताश्रवणकाले तेन विराटेन विहितः सः केल्यां पाश-क्रीड़ायां यः कलहस्तेन संवृत्तः प्रहारोऽपि अक्षेण ललाटे ताड़नमपि चक्षमे अहो मत्पुत्रेणोत्तरेण कौरवसैन्यान्यपि जितानीति मुहुर्मुहुः कथयता विराटेन बृहन्नला यस्य यन्ता स कथं न विजेष्यत इति कथयन् युधिष्ठिरः क्रोधात् पाशकेन ललाटे ताड़ितस्तस्य ताड़नं पतद्रक्तमपि उपकारस्मरणात्तेन सोढ़-मित्यर्थः। अत्र प्रहारक्षमां प्रति उपकारगुणज्ञत्वस्य विशेषणगत्या हेतुत्वात् काव्यलिङ्गम् ॥ २४ ॥

दृष्ट्वैवेति। नरेन्द्रोरामः चूड़ामण्या सीतायाः शिरोरत्नेन शोभन्त इति तादृशान् प्रत्ययार्थमानीतसीताशिरोरत्नरूपाभिज्ञानानित्यर्थः तान् हनूमदा-दीन् दृष्ट्वैव चिरं सम्भावयामास अहो महत् कार्यं युष्माभिः कृतमिति सम्मा-नयामास किम्भूतः तेषां शक्त्या सम्पादितं भूरि महत् कार्यं सीतावार्तानयन-रूपं यस्य सः तथा श्रुतो यः प्रियायाः सीताया उदन्तो वृत्तान्तस्तेन नितान्त-हृष्टः अतिसन्तुष्टः।

पक्षे तेषां युधिष्ठिरादीनां शक्त्या सम्पादितानि भूरीणि बहूनि कार्याणि शत्रुजयगोप्रत्याहरणादीनि यस्य तादृशो नरेन्द्रो विराटः श्रुत उत्तरमुखात् ज्ञातो यः प्रियः उदन्तः नैते कङ्कादिनामकाः सामान्याः किन्तु अज्ञातवास-स्थिताः पाण्डवा एवेति वृत्तान्तस्तेन नितान्तहृष्टः सन् चूड़ामणिभिः शोभिनः

प्रभञ्जनस्य द्विपतां जिष्णोरात्मोद्भवस्तदा।
सत्कृत्य सुहृदां मध्ये राज्ञा दत्तोत्तरो बभौ ॥२६॥
सद्दुत्तरोदारगुणः सन्तोषितहरीश्वरः।
रेजे सौभद्रताविष्टः कामदेव इव श्रिया ॥२७॥

## इति राघवपाण्डवीये महाकाव्ये षष्ठः सर्गः।

शोभमानान् एतदुपलक्षणं प्रभाते स्नातानलङ्कृतान् नृपासनमधिरूढांश्च तान् युधिष्ठिरादीन् दृष्ट्वैव चिरं सम्भावयामास अहो महत् भाग्यं मे यत् पाण्डवा भवन्तोऽत्राज्ञातवासमुषिता इत्यादिना सन्तोषयामासेत्यर्थः ॥ २५ ॥

प्रभञ्जनस्येति। द्विषतां जिष्णोः प्रभञ्जनस्य वायोरात्मोद्भवः पुत्रो हनूमान् तदा राज्ञा रामेण सुग्रीवेण वा सुहृदामङ्गदादीनां मध्ये सत्कृत्य दत्तम् उत्तरं साधु साधु धन्योऽसि येन त्वयातिदुःसाध्यमप्येतत् कर्म कृतमिति प्रतिवचनं यस्मै तादृशः सन् बभौ।

पक्षे द्विषतां प्रभञ्जनस्य जेतुर्जिष्णोरर्जुनस्य आत्मोद्भवः पुत्रोऽभिमन्युः तदा यदार्जुनो नाङ्गीचकार तस्मिन् काले इत्यर्थः राज्ञा विराटेन सुहृदां मध्ये सत्कृत्य दत्ता उत्तरा तन्नाम्नी स्वकन्या यस्मै तादृशः सन् बभौ ॥ २६ ॥

सद्दुत्तर इति। सन् शोभमानो विद्यमानोवा उत्तर उत्कृष्टः उदारोमहान् गुणो यस्य सः। एकार्थेन सदादिविशेषणत्रयेण गुणस्यात्युत्कृष्टत्वं प्रतिपादितम् तथा सीतावार्तानयनेन सन्तोषितो हरीश्वरो वानरराजः सुग्रीवोयेन सः तथा भद्रतया आविष्टोयुक्तोऽसौ हनूमान् श्रिया सम्पादितप्रभुकृत्यत्वात् सौमनस्यसम्पत्त्या अथच शोभया कामदेव इव कन्दर्प इव एतत्काव्यकारयितृ-कामदेवनृप इव वा रेजे शुशुभे।

पक्षे सन् सदृशत्वात् शोभमान उत्तरायाः स्वपत्न्या उदारो गुणो यस्मिन् सः तथा सन्तोषितो हरिर्मातुलः ईश्वरो राजा युधिष्ठिरश्च येन सः तादृशः सौभद्रताविष्टः सुभद्रातनयत्वं प्राप्तोऽभिमन्युः श्रिया कामदेव इव रेजे। उपमालङ्कारः ॥ २७ ॥

इति श्रीप्रेमचन्द्रतर्कवागीशभट्टाचार्यविरचितायां कपाटविपाटिका-ख्यायां राघवपाण्डवीयमहाकाव्यटीकायां षष्ठः सर्गः।

## सप्तमः सर्गः ।

अथ नृपतिरुपेत्य मित्रवर्गै-
र्हरिबलभद्रमुखैः प्रणीतमन्त्रः ।
अवगतरिपुरात्मचक्रवृद्ध्या
निजविजयोचितयत्नमन्वतिष्ठत् ॥१॥
ततो युगान्तक्षुभिताब्धिकल्पाः
स्वभारभुग्नोरगराजकण्ठाः ।

अथेति । अथ सीतावार्ताप्राप्त्यनन्तरं नृपतीरामः हरिषु वानरेषु मध्ये ये बलभद्रा बलेन श्रेष्ठा बलाधिका इत्यर्थः तन्मुखैस्तत्प्रभृतिभिर्मित्रवर्गैः सुग्रीवादिबन्धुसमूहैः सह प्रणीतः कृतो मन्त्रः कथं समुद्रमुत्तीर्य रावणं हत्वा सीता प्राप्येत्येवंरूपा मन्त्रणा येन तादृशः सन् अनन्तरञ्च आत्मचक्रस्य सुग्रीव-कथितस्वसैन्यस्य वृद्ध्या आधिक्येन अवगतो जेतव्यत्वेन निश्चितो रिपूरावणो येन तादृशश्च सन् । "चक्रं प्रहरणे कुलालाद्युपकरणे राष्ट्रे सैन्यरथाङ्गयोः इति हैमचन्द्रः । निजविजये उचितं यत्नमुद्यमम् अन्वतिष्ठत् कर्तुमारेभे ।

पक्षे अथ अभिमन्युविवाहानन्तरं नृपतिर्युधिष्ठिरः हरिः कृष्णः बलभद्रो बलदेवस्तन्मुखैर्मित्रवर्गैरभिमन्युविवाहे समागतैः श्रीकृष्णप्रभृतियादवैर्द्रुपद-प्रभृतिपञ्चालैश्चेत्यर्थः प्रणीतमन्त्रः प्रथमं दुर्योधनाय दूतः प्रेष्यतां ससैन्याः नृप-तयश्चाहूयन्तामित्येवं विहितमन्त्रणः सन् तथा आत्मचक्रवृद्ध्या अवगतो यात-व्यत्वेन निश्चितो रिपुर्दुर्योधनो येन तादृशश्च सन् स्वशक्त्युपचयं विना रिपुर्न यातव्य इति निश्चिन्वन्नित्यर्थः निजविजयोचितं यत्नमुद्योगमन्वतिष्ठत् । पुष्पि-ताग्रा वृत्तम् । अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा इति लक्षणात् ॥ १ ॥

तत इति । ततोऽनन्तरं युगान्ते प्रलये क्षुभितः क्षोभं गतो योऽब्धिः

स्फुरत्प्रभावानरपुङ्गवानां
दिगन्तरेभ्यः पृतनाः समीयुः ॥ २॥
सन्नद्धसैन्येषु बलाधिपेषु
ततस्ततो भूपतिमाश्रयत्सु ।
विरोधिचक्रं बहुधार्तराष्ट्रं
चिन्ताभिरन्तर्गतशल्यमासीत् ॥ ३॥

समुद्रस्तत्कल्पास्तस्मादीषदूनास्तत्सदृश्य इत्यर्थः । मनागूने कल्पदेश्यदेशीया इति कल्पप्रत्ययः । तथा स्वभारेण स्वेषां गौरवेन भुग्नो वक्रतां नीत उरगराजस्य पृथ्वीधारयितुरनन्तस्य कणवीयाभिस्ताः तथा स्फुरन्ती प्रभा शोभा यासां तथाविधा वानरपुङ्गवानां कपिश्रेष्ठानां पृतनाः सेनाः दिगन्तरेभ्यो दिगवकाशेभ्यः समीयुः समाजग्मुः । अत्र पूर्वार्द्धे प्रथमपादे कल्पप्रत्ययस्योपमावाचकत्वात् श्रौत्युपमा द्वितीयपादे च उरगराजकण्ठस्य पृतनाभारभुग्नत्वासम्बन्धेऽपि तत्सम्बन्धकल्पनात् अतिशयोक्तिः तयोश्च परस्परं निरपेक्षतया वर्तनात् संसृष्टिः ।

पक्षे नरपुङ्गवानां राज्ञां स्फुरत्प्रभावा विलसत्प्रतापाः पृतनाः समीयुः शेषं समानम् ॥ २ ॥

सन्नद्धेति । सन्नद्धानि युद्धोद्युक्तानि सैन्यानि येषां ते तथा तेषु बलाधिपेषु वानरसेनापतिषु ततस्ततस्तस्मात्तस्माद्दिगन्तरादित्य भूपतिं रामं सुग्रीवं वा आश्रयत्सु सत्सु बहुधा बहुभिः प्रकारैर्वनभङ्गपुरदाहादिभिरार्तं हनूमता पीड़ितं राष्ट्रं राज्यं यस्य तादृशं विरोधिनः शत्रोरावणस्य चक्रं सैन्यं चिन्ताभिः रामदूतैर्मद्दशी दुरवस्था कृता रामः स्वयमागत्य न जाने किं विधास्यतीत्येवं रूपाभिरन्तर्गतशल्यमासीत् हृदयमग्नशल्यमिव बभूव । अन्तः सपीडं बभूवेत्यर्थः । प्रतीयमानोत्प्रेक्षा ।

पक्षे सन्नद्धानि वर्मितानि सैन्यानि येषां ते तथा तेषु बलाधिपेषु युयुधानद्रुपदादिषु भूपतिं युधिष्ठिरम् आश्रयत्सु सत्सु धार्तराष्ट्रस्य दुर्योधनस्येदं धार्तराष्ट्रं चक्रं बहु असंख्यातमपीत्यपिकारोऽत्र बोध्यः एकादशाक्षौहिणीगणितमपीत्यर्थः चिन्ताभिर्विरोधि विरुद्धम् आसीत् पाण्डवसैन्यापेक्षया बह्वपि

कृतोद्यमः शत्रुजये यथाव-
द्राजा सराष्ट्राणि वनानि तीर्त्वा।
महाविपद्वारिनिधिं तितीर्षु-
र्वेलावनान्तं प्रतिपद्य तस्थौ ॥४॥
सा सह्यभूभृत्कटकान्तशक्ता
धीरा महेन्द्रस्य विलङ्घनेऽपि।
सर्मं समुद्रस्य पयःसमृद्धा
नरेन्द्रसेना प्रतिगच्छतिस्म ॥५॥

कौरवसैन्यं भीमार्ज्जुनबलमनुस्मृत्य सभयं बभूवेत्यर्थः। अत्र विरोधशब्दस्य भयबोधकत्वे लक्षणा। किम्भूतं अन्तर्गतः वरदानपारवश्यादन्तःप्रविष्टः शल्यो मद्राधिपोयस्य तत्। मातुलत्वाद्युधिष्ठिरमभ्यागच्छन् शल्यः पथि दुर्योधनेन शुश्रूषितस्तुष्टोदत्तवरश्च दुर्योधनपक्षं प्रविष्ट इति भारतम् ॥ ३ ॥

कृतोद्यम इति। यथावत् यथाविधि शत्रुजये कृतोद्यमः कृतयत्नो राजा रामः सराष्ट्रानि सराज्यानि वनानि राज्यानि वनानि च इत्यर्थः तीर्त्वा अतिक्रम्य महती विपद्दुःखं यत्र तद्यथा तथा वारिनिधिं लवणार्णवं तितीर्षुस्तरीतुमिच्छुः सन् वेलावनस्य तीरजातारण्यस्य अन्तं समीपं प्रतिपद्य प्राप्य तस्थौ।

पक्षे राजा युधिष्ठिरः सराष्ट्रानि वनानि द्वादश वर्षान् वनवासान् एकञ्च वर्षं विराटनगरेऽज्ञातवासञ्च यथावत्तीर्त्वा निर्वाह्य वेलायास्त्रयोदशवर्षात्मककालस्य अवनं पालनं तस्यान्तं प्रतिपद्य महाविपदेव दुरवगाहत्वाद्वारिनिधिस्तं तितीर्षुः सन् शत्रुजये कृतोद्यमस्तस्थौ सयत्नो बभूव। महाविपद्वारिनिधिमिति निरङ्गरूपकम् ॥ ४ ॥

सेति। सह्यभूभृतः सह्यनामकपर्वतस्य कटकस्य नितम्बस्य अन्ते समाप्तौ लङ्घने इत्यर्थः शक्ता समर्था तथा महेन्द्रस्यापि अत्युच्चमहेन्द्रनामकपर्वतस्यापि विलङ्घने धीरा धैर्यवती अव्यग्रेत्यर्थः सा नरेन्द्रस्य रामस्य सेना समुद्रस्य

**अथ नृपमनुवेलं सेव्यमानं बलौघै-**
**रगणितदशकण्ठोद्दण्डदोर्दण्डशक्तिः ।**
**अनिलसुतनिबद्धप्रीतिरागत्य दूरात्**
**क्षितिघटितकिरीटं राक्षसेन्द्रो ववन्दे ॥६॥**

पुरोवर्तिनो लवणार्णवस्य पयःसमृद्ध्या जलपूरस्य समं साम्यं प्रतिगच्छतिस्म प्राप समुद्रतरङ्गपरम्परेव रामसेना शुशुभे इत्यर्थः, इत्युपमया इयं रामसेना वा तरङ्गपरम्परा वा इति सन्देहालङ्कारः समुद्रसान्निध्याद्व्यज्यते ।

पक्षे सह्याः सोढव्याः स्वयुद्धयोग्या इत्यर्थः ये भूभृतो विपक्षभूपालास्तेषां कटकस्य सेनाया अन्ते मृतौ मारणे इत्यर्थः शक्ता क्षमा । "सह्यमारोग्य-सोढव्ये सह्योऽद्रौ" इति । "कटकस्त्वद्रिनितम्बे वाहुभूषणे सेनायां राजधान्याञ्च" इति च हेमचन्द्रः । "मृताववसिते रम्ये समाप्तावन्त इष्यत" इति शब्दार्णवः । महेन्द्रस्य शक्रस्य । "महेन्द्रः पर्वते शक्रे" इति मेदिनी । नरेन्द्रसेना युधिष्ठिरबलम् । शेषं तुल्यम् ॥ ५ ॥

अथेति । अथानन्तरं राक्षसेन्द्रो विभीषणः रावणावमानितश्चतुर्भिः सचिवैः सहेति शेषः अनुवेलं वेलायां समुद्रतीरे इत्यर्थः । सप्तम्यर्थेऽव्ययीभावः । बलौघैर्वानरसैन्यसमूहैः सेव्यमानं नृपं रामं आगत्य शिवकुवेरवचनादिति शेषः क्षितिघटितकिरीटं भूमिलग्नमुकुटं यथा तथा दूराद्ववन्दे प्रणनाम किम्भूतः अगणितः पादप्रहारादिना तिरस्कारकरणात् परित्यक्तो दशकण्ठो रावणो येन सः तथा उद्दण्डा उद्भटा दोर्दण्डयोर्बाहुदण्डयोः शक्तिर्बलं यस्य सः अनन्तरं सच सचेति विशेषणयोः कर्मधारयः । तथा अनिलसुते हनुमति निबद्धा लङ्कादाहकाले जाता प्रीतिर्यस्य सः । मातुरादेशात् रामाय सीता दीयतामिति मुहुरभ्यर्थयन् क्रुद्धेन रावणेन पादप्रहारादिनावमानितस्तमपहाय शिवकुवेरयोर्वचनादागत्य विभीषणो रामं शरणं जगामेत्यर्थः ।

पक्षे अगणितोऽवज्ञातो दशकण्ठो यया तादृशी उद्दण्डा दोर्दण्डशक्तिर्यस्य सः रावणादप्यतिवीर्यशालीत्यर्थः तथा अनिलसुते भीमे जनकत्वान्निबद्धा प्रीतिर्यस्य सः तादृशो राक्षसेन्द्रो घटोत्कचः अनुवेलम् अनुक्षणं बलौघैः सेव्यमानं नृपं युधिष्ठिरम् आगत्य दूरात् क्षितिघटितकिरीटं ववन्दे । मालिनीवृत्तम् ॥ ६ ॥

तं भीमतेजःप्रभवं प्रभावी
विपक्षशक्तिप्रतिघातहेतुम् ।
विभीषणं भूमिपतिः स्वकीय-
प्रसादलक्ष्मीसदनं चकार ॥७॥

जवेन जिष्णुर्नृपनन्दनोऽथ
द्विषो जिगीषुर्हरिसंश्रयेण ।
दुर्योधनेन द्विषताऽवगाढं
मध्ये पयोराशिमुपाससाद ॥८॥

तमिति। प्रभावी तेजस्वी। "स प्रतापः प्रभावश्च यत्तेजः कोषदण्डजम्" इत्यमरः। भूमिपतीरामः भीमस्य भयङ्करस्य तेजसः प्रभवं उत्पत्तिस्थानं तथा विपक्षस्य रावणस्य शक्तेः पराक्रमस्य यः प्रतिघातो नाशनं तस्य हेतुं कारणं चेतोभिमतं तं विभीषणं तन्नामकं रावणभ्रातरं स्वकीयप्रसादेन स्वस्य प्रसन्नतया लक्ष्म्या रावणश्रिया सदनम् आश्रयं चकार राक्षसराज्ये तम् अभिषिषेचेत्यर्थः।

पक्षे प्रभावी भूमिपतिर्युधिष्ठिरः भीमस्य वृकोदरस्य तेजसा शुक्रेण प्रभवः हिडिम्बीगर्भे उत्पत्तिर्यस्य तम्; "शुक्रं तेजोरेतसी च" इत्यमरः। तथा विपक्षस्य कर्णस्य या इन्द्रदत्ता एकपुरुषघातिनी शक्तिस्तस्याः प्रतिघाते हेतुं तं प्रत्येव कर्णेन तस्याः प्रक्षेप्यमाणत्वादिति भावः तथा विभीषणं शत्रूणां भयङ्करं तं घटोत्कचं स्वकीयप्रसादरूपायास्तज्जनिताया वा लक्ष्म्याः श्रियाः सदनम् आश्रयं चकार स्वप्रसादेन तं सम्मानयामासेत्यर्थः। अत्र चतुर्थपादार्थं प्रति विशेषणत्रयस्य हेतुत्वात् पदार्थहेतुक काव्यलिङ्गमलङ्कारः॥ ७ ॥

जवेनेति। अथानन्तरं जिष्णुर्जयशीलो नृपनन्दनो रामः हरिसंश्रयेण वानराणामाश्रयेण द्विषः शत्रून् रावणादीन् जिगीषुर्जेतुमिच्छुः सन् जवेन त्वरया सीताप्रत्युद्धरणस्य विलम्बासहत्वादिति भावः दुर्योधनेन दुष्टयोद्धा द्विषता

तुङ्गोद्वल्गत्तरङ्गावलिमिलितमहानक्रमावर्तचक्र-
भ्राम्यद्डिण्डीरपिण्डप्रतिगणितसितच्छत्रविस्तारशोभ।
अम्भः सम्भारभारालसजलदघटादुर्द्दिनीभूतदिक्कं
दिग्दन्तिप्रौढ़शुण्डाशकलितसलिलं सागरं सोऽभ्य-
पश्यत् ॥९॥

प्रत्युष्णा रावणेन मध्ये अवगाढ़ं कृतावगाहनं कृतवसतिमित्यर्थः लङ्कानगर्याः समुद्रमध्येऽवस्थानादिति भावः पयोराशिं समुद्रं उपाससाद प्रतस्थे।

पक्षे नृपनन्दनो जिष्णु रर्जुनः। "जिष्णुर्ना वासवेऽर्जुने" इति मेदिनी। हरिसंश्रयेण कृष्णावलम्बनेन द्विषोजिगिषुः सन् मध्ये अवगाढ़ं हरिणा कृतवसतिं द्वारकापुर्याः समुद्रमध्ये हरिणा विहितत्वादिति भावः पयोराशिं द्विषता दुर्योधनेन सह। गम्यमानेश्च सहार्थैरिति तृतीया। जवेन उपाससाद दुर्योधनोऽर्जुनश्च द्वावपि साहाय्यार्थं हरिमाश्रयितुं समुद्रमध्यकृतास्पदां द्वारकापुरीं प्रतस्थे इत्यर्थः ॥ ८ ॥

तुङ्ग इति। स रामः पक्षेऽर्जुनश्च सागरं लङ्कापरिखाभूतं पक्षे द्वारकापरिखाभूतं समुद्रम् अभ्यपश्यत् आभिमुख्येन ददर्श किम्भूतं तुङ्गाः स्थूला उद्वल्गन्त्य ऊर्द्धमुच्छलन्त्यः। उत्तुङ्गदिति पाठेऽयमेवार्थः। यास्तरङ्गावलय ऊर्मिसमूहास्तासु मिलिताः सङ्गताः महानक्रा वृहत्कुम्भीरा यत्र तं तथा आवर्तचक्रे जलभ्रमसमूहे भ्राम्यद्भिस्तरङ्गवशाच्चलद्भिर्डिण्डीरपिण्डैः फेनपटलैः प्रतिगणिता सदृशीकृता। प्रतिगलितेति पाठे न्यकृता। सितच्छत्राणां श्वेतातपत्राणां विस्तारस्याभोगस्य शोभा यत्र तम्। "स्यादावर्तोऽम्भसांभ्रम" इति "डिण्डीरोऽब्धिकफः फेन" इति चामरः। तथा अम्भःसम्भारस्य अन्तर्गतपयःपूरस्य भारेण गौरवेण अलसा मन्दगमना या जलदघटा मेघसमूहास्ताभिर्दुर्द्दिनीभूता अप्रकाशमाना दिशो यत्र तं तथा दिग्दन्तिनां दिग्गजानां याः प्रौढ़ाः स्थूलाः शुण्डास्ताभिः शकलितं सीमन्तितं सलिलं यत्र तम्। स्रग्धराबृत्तम् ॥९॥

सरसं बहुयोजनाधिवासं
धृतगाम्भीर्यमनुज्झितप्रसादम्।
स महार्थमुपासदत् समुद्रं
ध्वनिभाजं सुकवेरिव प्रबन्धम् ॥१०॥

सरसमिति। सरामः पक्षेऽर्जुनः सुकवेः सुष्ठु वर्णयितुः प्रबन्धमिव काव्यमिव समुद्रम् उपासदत् प्राप किम्भूतं सरसं लवणरससहितं तस्य लवणमयत्वात्। सरसं सजलमिति बहवः तन्न मनोरमं समुद्रस्य जलमयत्वात् समुद्रपदेन तल्लाभात् अन्यत्र शृङ्गारादिसहितं शृङ्गारादिव्यञ्जकमित्यर्थः। "रसो गन्धरसे जले शृङ्गारादौ विषे वीर्ये तिक्तादौ द्रवरागयोः" इति मेदिनी। तथा बहूनि योजनानि चतुःक्रोशैरधिवसतीति स तथा तम्। अत्र रामायणपक्षे बहुपदं शतसंख्यापरं शतयोजनविस्तीर्णं समुद्रं मकरालयमित्युक्तेः। भारतपक्षे लक्षपरम्। जम्बूद्वीपसमुद्रस्य लक्षयोजनपरिमितत्वात्। अन्यत्र बह्व्यो योजनाः पदार्थानां परस्परमन्वयास्तासामधिवासो यत्र तं तथा धृतं गाम्भीर्यं गभीरता अन्यत्र अर्थगौरवं येन स तथा तं तथा अनुज्झितः सर्वदैवापरित्यक्तः प्रसादः स्वच्छता अन्यत्र गुणविशेषो येन स तथा तम्। "चित्तं व्याप्नोति यः क्षिप्रं शुष्केन्धनमिवानलः। स प्रसादः समस्तेषु रसेषु रचनासु च। शब्दास्तद्व्यञ्जका अर्थबोधकाः श्रुतिमात्रत" इति दर्पणः। तथा महान्तोबहवोऽर्था रत्नादिधनानि अन्यत्र सुकविकृतकाव्यस्य प्रायेण श्लिष्टत्वात् अभिधेया यत्र स तथा तम्। "अर्थोऽभिधेयरैवस्तु" इत्यमरः। तथा ध्वनिं तरङ्गशब्दम् अन्यत्र ध्वन्यते वाच्यार्थापेक्षयाधिकचमत्कारित्वेन व्यज्यत इति ध्वनिर्विलक्षणव्यङ्ग्यं तं भजतीति स तथा तम्। भजोद्दीर्घश्चेति क्विप् दीर्घश्च। अष्टमश्लोके पयोराशिमुपाससादेत्यत्र सदधातोः प्रस्थानार्थकत्वात् अत्र च प्राप्त्यर्थकत्वान्न पौनरुक्त्यम्। उपमेयं श्लेषानुप्राणिता। वृत्तमिदम् औपच्छन्दसकं वैतालीयभेदः। "षड्विषमेऽष्टौ समे कला इत्युपक्रम्य तत्रैवान्तेऽधिके गुरौ स्यादौपच्छन्दसकं कवीन्द्रहृद्यम्" इति लक्षणात् ॥ १० ॥

स वारिपूरस्फुटदारणाय
धृतप्रतिज्ञं प्रति दर्शितात्मा ।
तमर्चयद्वारिधिरूर्मिबाहु
प्रगुन्नरत्नावलिरञ्जिताङ्घ्रिम् ॥११॥

वेलादरीदुन्दुभिवाददक्षै-
स्तरङ्गहस्तैः कृतमङ्गलश्च ।
उदन्वतोऽभ्यागमनानुकूल्या-
दमंस्त स क्रान्तमिवारिचक्रम् ॥१२॥

स इति । स वारिधिः समुद्रः वारिपूराणां जलौघानां यत् स्फुटं दारणं वाणैः क्षोभणं तस्मै धृता कृता प्रतिज्ञा । 'अद्याक्षोभ्यमिमं क्रुद्धः क्षोभयिष्यामि सागरम्' इत्येवंरूपा येन तादृशं तं रामं प्रतिदर्शित आत्मा येन तादृशः सन् ऊर्मिबाहुभ्यां तरङ्गवद्दीर्घाभ्यां बाहुभ्यां मूर्तिमत्स्वभुजाभ्यां प्रगुन्नया प्रक्षिप्तया रत्नावल्या रञ्जितौ अङ्घ्री यस्य तादृशं कृत्वा तमर्चयत् पूजितवान् विभीषणादिवचसा समुद्रं शरणमभिगम्य तीरे सुप्तस्य रामस्य यदा तिस्रो निशा व्यतीताः न च समुद्र आयातस्तदा वाणैः क्षोभणाय कृतप्रतिज्ञं तथा कर्तुमारभमाणञ्च तं समुद्रः सभयमागत्य पूजितवानित्यर्थः ।

पक्षे प्रतिदर्शित आत्मा जलमयं स्वरूपं येन तादृशः सवा वाशब्दश्चार्थे सच वारिधिः रिपूणां शत्रूणाम् उरसां वक्षसां स्फुटदारणाय शत्रुविनाशनायेत्यर्थः धृतप्रतिज्ञं तं स्वतीरे उपस्थितम् अर्जुनम् ऊर्मय एव बाहवस्तैः प्रगुन्नया रत्नावल्या रञ्जितावङ्घ्री यस्य तादृशं कृत्वा अर्चयत् देवांशभूतः समुद्रः असुरांशभूतकौरवसैन्यविनाशनरूपदेवकार्यकरणाय कृतप्रतिज्ञमर्जुनं पूजयामासेत्यर्थः यद्वा वाशब्द इवार्थे उत्प्रेक्षाद्योतकः क्रियान्वितश्च अर्चयदिवेत्यर्थः । भारतादतिरिक्तोऽयमर्थः पक्षान्तरानुरोधाद्वर्णित इति ध्येयम् ॥११॥

वेलेति । वेलायां तीरे या दर्यः कन्दराः । 'दरीतु कन्दरोवा स्त्री' इत्यमरः । ता एव दुन्दुभयो वाद्यभेदास्तासां वादने दक्षैर्निपुणैः तरङ्गा एव हस्तास्तैः कृत

दिशानयागच्छ निजेष्टसिद्धये
हरिप्रभावार्पितसेतुबन्धया।
इतीव तस्मै स्फुटमाह सागरः
स्वरैर्गभीरैः प्रतिनादयन् दिशः ॥१३॥
असौ निसृष्टाशनितीव्रवेग-
हरिप्रभावोच्चलितान् पुरस्तात्।

मङ्गलं येन स तथा तस्य प्रयाणे दुन्दुभिध्वनिश्रवणस्य कार्यसिद्धिसूचकत्वेन माङ्गल्यत्वादिति भावः। उदन्वतः समुद्रस्य अभ्यागमनम् आभिमुख्येनागमनरूपं यत् आनूकूल्यं कार्यसिद्धिसूचकत्वेन प्रियाचरणं तस्मात् स रामः पक्षेऽर्जुनः अरिचक्रं रिपुसैन्यं क्रान्तमिव आक्रान्तमिव निर्जितमिवेत्यर्थः अमंस्त बुबुधे। अत्र पूर्वार्द्धगतेन रूपकेण उत्तरार्द्धगतोत्प्रेक्षाङ्गाङ्गितया सङ्कीर्यते ॥१२॥

दिशेति। हे राम हरिर्वानरः विश्वकर्मतनयो नलस्तस्य प्रभावेण अलौकिकसामर्थ्येन अर्पितः मदुपरि विन्यस्तः सेतुबन्धो यस्यां सा तथा तया अनया दक्षिणयेत्यर्थः दिशा निजेष्टसिद्धये रावणादिविनाशनपूर्वकसीताप्रत्युद्धरणरूपस्वकार्यसाधनार्थं गच्छ लङ्कामिति शेषः। इवोत्प्रेक्षायां तस्य प्रतिनादयन्नित्यनेनान्वयः। गभीरैः स्वरैर्दिशः प्रतिनादयन्निव प्रतिध्वनियुक्ताः कुर्वन्निव सागरः मूर्तिमान् समुद्रः इति पूर्वोक्तं तस्मै रामाय राममुद्दिश्येत्यर्थः। यदभिप्रेत्यधात्वर्थ इति संप्रदानसंज्ञायां चतुर्थी। स्फुटं सुव्यक्तम् आह उवाच। क्वचिद्भूतेऽपि वर्तमानप्रयोगः साधुः। सागरपदेन त्वत्पूर्वपुरुषसगरकृतोऽस्मि अतस्त्वदुपरोधः सोढव्य एवेति सूचितम्।

पक्षे हे अर्जुन हरिः कृष्णस्तत्प्रभावार्पितसेतुबन्धया अनया पश्चिमया दिशा निजेष्टसिद्धये हरिं स्वपक्षीकर्तुं गच्छ द्वारकां प्रयाहि गभीरैः स्वरैस्तरङ्गध्वनिभिः दिशः प्रतिनादयन् सागरः तस्मै अर्जुनाय इतीव स्फुटम् आह। अत्र तरङ्गध्वनौ तादृशकथनस्य सम्भाव्यमानत्वादुत्प्रेक्षा ॥ १३ ॥

असाविति। असौ रामः पुरस्तात् प्रथमं निसृष्टाशनिवत् निक्षिप्तवज्रवत् तीव्रोवेगो येषां तादृशा ये हरयो वानरास्तेषां प्रभावेन सामर्थ्येन उच्चलितान्

क्षताभिपातान् जलधौ ददर्श
विचित्रधातुस्फुरितान् महीध्रान् ॥१४॥
स विश्वकर्मोद्भवशिल्पसिद्धं
सुदूरसीमन्तितवारिपूरम्।
मणिप्रभाभासुरमभ्रवीथ्या-
मृज्वायताखण्डलचापकल्पम् ॥१५॥

उन्नतान् वानरैरुत्पाटितानित्यर्थः अनन्तरञ्च जलधौ सेतुनिर्माणाय क्षतः अभिपातः पातनं येषां तान् अतएव समुद्रजलसंसर्गेण विचित्रैर्बहुविधैर्धातुभिर्गलद्भिर्गैरिकादिभिः स्फुरितान् आक्रान् महीध्रान् पर्वतान् ददर्श समुद्रवचनानन्तरमेव पर्वतादिना वानरैरारभ्यमाणं सेतुं ददर्शेत्यर्थः।

पक्षे असावर्जुनः पुरस्तादग्रे निसृष्टाशनिवत् यो हरेः कृष्णस्य प्रभावोऽनुभावस्तेन उच्चलितान् द्वारकासेतुसम्पादनाय स्वयमागतान् तथा जलधौ क्षताभिपातान् पतित्वा स्थितान् तथा विचित्रधातुभिः स्फुरितान् महीध्रान् पर्वतान् ददर्श। निसृष्टाशनौ अशनि निक्षेपे तीव्रो वेगो यस्य तादृशो हरिरिन्द्रस्तस्य प्रभावात् उच्चलितान् पक्षच्छेदभयेन पलायितान् तथा जलधौ क्षताभिपातान् निमज्ज्य स्थितान् महीध्रान् पर्वतान् ददर्शेति वा। महीध्रान् राज्ञ इति केचित् तन्न युक्तं महीध्रशब्दस्य राजनि केनाप्यप्रयुक्तत्वात् अन्यविशेषणद्वयासङ्गतेश्च ॥१४॥

स इति। स हरिवंशकेतुः हरेः सूर्यस्य वंशे गोत्रे केतुरिव सूर्यवंशश्रेष्ठ इत्यर्थः पक्षे हरिर्वानरो हनूमान् तद्युक्तो वंशकेतुर्वंशध्वजो यस्य सोऽर्जुनः हरिवंशस्य इन्द्रवंशस्य चन्द्रवंशस्य वा केतुरिवेति वा। "यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु। शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु" इत्यमरः। सेतुं ददर्शेति उत्तरश्लोकेनान्वयः। किम्भूतं विश्वकर्मा देवतष्टा तस्मादुद्भवो जन्म यस्य स विश्वकर्मोद्भवो नलस्तस्य शिल्पेन सिद्धं निष्पन्नं पक्षे विश्वकर्मणा उद्भवो यस्य तादृशं शिल्पं तेन सिद्धं द्वारकाप्रवेशसेतोर्विश्वकर्मणा कृतत्वादिति भावः। तथा सुदूरम् अतिदूरपर्यन्तं सीमन्तितः सीमन्तवद्विभाजितो वारिपूरो येन तं

हरिप्रभावोपचितक्ष्माभृ-
न्निवेशनैश्चायततां प्रपन्नम्।
महीमहाम्भोरुहनालकल्पं
ददर्श सेतुं हरिवंशकेतुः ॥१६॥
स द्वारकान्तां नगरीं गरिष्ठां
संप्रस्थितस्तेन पथा नृवीरः।
ददर्श धीरो हरिवाहिनीभि-
र्निरन्तरालानि ककुम्मुखानि ॥१७॥

तथा मणीनां पर्वतस्थरत्नानां तरङ्गानीतसंलग्नसमुद्ररत्नानां वा प्रभाभिर्भासुरं दीप्रम् अतएव अभ्रवीथ्याम् आकाशमार्गे ऋजुः सरलः आयतो दीर्घो य आखण्डलचाप इन्द्रधनुः रोहितमित्यर्थः। "तदेव ऋजुरोहितम्" इत्यमरः। तत्कल्पं तस्मादीषदूनं तत्सदृशमित्यर्थः अतएवोपमा तत्कल्पनं प्रति च मणिप्रभा-भासुरत्वस्य विशेषणगत्या हेतुत्वात् काव्यलिङ्गंतस्मादनयोरङ्गाङ्गित्वेन सङ्करः ॥ १५॥

हरीति। पुनः किम्भूतं हरीणां वानराणां पक्षे हरेः श्रीकृष्णस्य प्रभावेण सामर्थ्येन पक्षे अनुभावेन उपचिताः प्रथमं तीरे आनीय उपचयं राशित्वं गमिताः अन्तर्भाविण्यर्थत्वादयमर्थः। ये क्ष्माभृतः पर्वतास्तेषां निवेशनैरा-रोपणैश्च आयतताम् आयामम्। अयनतामिति पाठे अयनतां वर्त्मत्वं प्रपन्नं प्राप्तम्। तथा मही पृथिवी महाम्भोरुहमिव वृहत्पद्ममिव महीमहाम्भोरुहम्। पुरुषव्याघ्रवदुपमितिसमासः। तस्य नालकल्पम् वृन्तसदृशम्। जम्बूद्वीपभूमेः पद्माकारतया पुराणेषु वर्णितत्वात्तन्नालदण्डस्य चावश्यमपेक्षितत्वादयं सेतुस्त-न्नालमिवेत्युपमा ॥ युग्मकम् ॥ १६ ॥

स इति। स नृवीरो मनुष्येषु शूरः धीरो धैर्यवान् रामः तेन नलकृतेन सेतुमयेन पथा द्वारैश्चतुर्भिः सिंहद्वारैः कान्तां मनोज्ञां तथा गरिष्ठाम् अति-गुर्वीं नगरीं लङ्कां संप्रस्थितः सन् हरिवाहिनीभिर्वानरसेनाभिर्निरन्तरालानि

पश्यन् मनोज्ञान् कटकप्रदेशान्
विलङ्घ्य पन्थानमलङ्घ्यतेजाः ।
विरोधिनाधिष्ठितपूर्वभागं
स तं धरित्रीधरमाससाद ॥१८॥

विचारमूढस्य बलानुकूल्यं
द्विषोऽपि कुर्वन् जगतीधरोऽसौ ।
अमुष्य पादान्तजुषस्तदानीं
निर्व्याजमात्मार्चनमाचचार ॥१९॥

निरवकाशीकृतानि व्याप्तानीत्यर्थः ककुम्मुखानि दिङ्मुखानि ददर्श । "दिशस्तु ककुभः काष्ठा" इत्यमरः ।

पक्षे स न्नवीरो नरनामा वीरोऽर्जुनः तस्य नरावतारत्वादिति भावः । तेन पथा गरिष्ठां समृद्धां तां प्रसिद्धां द्वारकां नगरीं संप्रस्थितः सन् हरेः कृष्णस्य वाहिनीभिः सेनाभिः अश्वसेनाभिरिति केचित् निरन्तरालानि ककुम्मुखानि ददर्श ॥ १७ ॥

पश्यन्निति । अलङ्घ्यमनभिभवनीयं तेजो यस्य तादृशः स रामः पन्थानं सेतुमयं मार्गं विलङ्घ्य अतिक्रम्य मनोज्ञान् कटकप्रदेशान् नितम्बदेशान् पश्यन् सन् तं प्रसिद्धं धरित्रीधरं सुवेलनामानं लङ्कापर्वतम् आससाद प्राप किम्भूतं विरोधिना रावणेन अधिष्ठितः पूर्वभागो यस्य स तथा तं सुवेलस्य पूर्वभागे लङ्काया निवेशादिति भावः ।

पक्षे सोऽर्जुनः कटकप्रदेशान् कृष्णसेनानिवेशान् पश्यन् सन् विरोधिना दुर्योधनेन पूर्वमागतेनेति शेषः अधिष्ठितः पूर्वभागः शिरोनिधानप्रदेशो यस्य तादृशं तं धरित्रीधरं कूर्ममूर्त्या धृतधरित्रीकं कृष्णम् आससाद । धरित्रीधरम् अनन्तावतारं बलदेवम् आससाद शिष्यत्वात् प्रथमं बलदेवं प्रापेति केचित् ॥ १८ ॥

विचारेति । असौ जगतीधरो भूधरः सुवेलः विचारमूढस्य विवेकशून्यस्य

बलोपलम्भादवलेपभाजा
दैवाद्विपक्षेण पुरोनिरस्तः।
विभीषणो विद्विषतामसाध्यः
प्रीत्यान्वयासीत् पुरुषोत्तमस्तम् ॥२०॥

रामविरुद्धाचरणादिति भावः द्विषोरावणस्य बलानां सैन्यानाम् आनुकूल्यं फलजलस्थलादिदानेनोपकारं कुर्वन्नपि पादान्तजुषः प्रत्यन्तपर्वतप्रान्ताश्रयिणः। "पादाः प्रत्यन्तपर्वता" इत्यमरः। अमुष्य रामस्य तदानीं निर्व्याजं निष्कपटं यथा तथा आत्मार्चनं वासार्थमात्मप्रदानेन पूजनम् आचचार चकार अन्योऽपि सुजनः शत्रुपक्षीयोऽपि समीपमुपस्थितस्य भद्रजनस्यात्मार्पणेनाप्यानुकूल्यमाचरति।

पक्षे असौ जगतीधरः कृष्णः विचारमूढ़स्य पादान्तप्रदेशमपहाय कृष्णस्य शिरःप्रदेशाश्रयणान्मूर्खस्य द्विषोऽपि निरन्तरं द्विषतो दुर्योधनस्यापि बलानुकूल्यं स्वीयगोपसैन्यप्रदानेनोपकारं कुर्वन् सन् पादान्तजुषश्चरणप्रान्तदेशाश्रयिणः अमुष्यार्जुनस्य तदानीं निर्व्याजं यथा तथा आत्मार्चनम् आत्मप्रदानेन पूजनम् आचचार। आत्मार्पणमेव क्वचित् पाठः तत्र उभयत्राप्यर्थः सुगमः। साहाय्यप्रार्थनया दुर्योधनार्जुनौ द्वावप्यागतौ दृष्टा एकत्रैयमतियुध्यन्तौ मदीयाक्षौहिणी अपरत्रायुध्यन्नहमेकस्तद्यथेच्छं युवाभ्यां व्रियतामिति कृष्णेनोक्ते दुर्योधनेनाक्षौहिणी वृता अर्जुनेन तु अयुध्यन्नपि कृष्ण इति भारती कथा ॥ १९ ॥

बलेपिति। बलस्य तपःप्रभावजनितसामर्थ्यस्य उपलम्भात् प्राप्तेर्हेतोः अवलेपभाजा गर्वितेन विपक्षेण रामशत्रुणा रावणेन दैवात् रामस्यैव भागधेयात्। विपक्षभेदस्य विजिगीषोर्भाग्यजन्यत्वादिति भावः। पुरः सभ्यानामग्रे निरस्तः प्रदीयतां दाशरथाय मैथिलीत्यादि वदन् पादेन ताड़ितः सन्नित्यर्थः विभीषणोरावणभ्राता तं रामं प्रीत्या अन्वयासीत् अनुगतो बभूव पादताड़नावमानेन रामपक्षो बभूवेत्यर्थः। किम्भूतः विद्विषतां शत्रूणाम् असाध्यः अजेयः। अच्छार्य इतिपाठे अभेदनीयः तथा पुरुषेषु उत्तमः श्रेष्ठः अधार्मिकं विहाय धार्मिकपक्षावलम्बनात् तस्य पुरुषोत्तमत्वमिति भावः।

मनुष्यमूर्तेः परमस्य पुंसः
सौहार्दमासाद्य स दैवयोगात् ।
पौलस्त्यसम्पत्तिमपि स्वकीय-
भ्रूभङ्गलीलासुलभाममंस्त ॥२१॥
ससैन्यसुग्रीवसमग्रयान-
प्रभावसम्पन्नरनाथजन्मा ।

पक्षे दैवात् अर्जुनस्यैव भाग्यात् पुरः प्रथमं बलस्य कृष्णदत्तसैन्यस्य उपलम्भात् लाभात् अवलेपभाजा अतिचतुरोऽस्मि येनायुद्धान्तमेकं कृष्णं विहाय रणप्रौढयमक्षौहिणी वृतेति गर्वं भजता विपक्षेण दुर्योधनेन निरस्तः परित्यक्तः सन् पुरुषोत्तमः कृष्णस्तमर्जुनं प्रीत्या स्नेहेन अन्वयासीत् किम्भूतः विद्विषतां विभीषणः अयुद्धानपि केवलं सारथ्यावलम्बनेन भयङ्करः तथा असाध्यः । अत्र काकाक्षिन्यायाद्विद्विषतामित्युभयत्रान्वेति ॥ २० ॥

मनुष्येति । स विभीषणः दैवयोगात् शुभादृष्टसम्बन्धात् मनुष्यमूर्तेर्मनुष्यरूपधारिणः वस्तुतः परमस्य पुंसः परमात्मनः श्रीरामस्य सौहार्दं मैत्रं सौहार्दकृतराक्षसाधिपत्याभिषेकमित्यर्थः आसाद्य प्राप्य अपिर्निश्चये पौलस्त्यस्य रावणस्य सम्पत्तिमाधिपत्यं स्वकीयभ्रूभङ्गस्य लीलया विलासेन सुलभां सुप्रापाम् अनायासलभ्यामित्यर्थः अमंस्त मेने ।

पक्षे सोऽर्जुनः दैवयोगात् मनुष्यमूर्तेः परमस्य पुंसः कृष्णस्य सौहार्दं सौहार्देनाङ्गीकृतसारथ्यरूपसाहाय्यमित्यर्थः आसाद्य पौलस्त्यसम्पत्तिमपि कुवेरस्यैश्वर्यमपि स्वकीयभ्रूभङ्गलीलासुलभाम् अमंस्त के इमे दुर्योधनादयः कीटाः कुवेरमपि अनायासेन जित्वा तस्य सम्पत्तिं लब्धुं शक्नोमीति सम्भावयामासेत्यर्थः । "पौलस्त्यस्तु कुवेरे स्याद्दशग्रीवेऽपि पुंस्ययम्" इति मेदिनी ॥२१॥

ससैन्येति । ससैन्यः वानरसैन्यैः सह वर्तमानो यः सुग्रीवो वानरराजस्तस्य यत् समग्रं सम्पूर्णम् उद्भटमित्यर्थः यानं यात्रा तेन प्रभावसम्पत् प्रतापातिशयो यस्य सः तथा मनस्वी मानी प्रशस्तमनस्कोवा स नरनाथजन्मा राजतनयो

स भूमिभर्त्तुः कटकं मनस्वी
जवादुपप्लव्यमुपेत्य तस्थौ ॥२२॥
तदाशुकोऽपि प्रतिपक्षवाचा
वचोहरः प्राप्य सुयन्त्रितात्मा।
तमुन्नतांसञ्जयशब्दपात्रं
श्रियं दधानं नृपतिं निदध्यौ ॥२३॥

रामः उपप्लव्यम् उपद्रवणीयं सेनानिवासादिति भावः भूमिभर्तुः सुवेलपर्वतस्य कटकं नितम्बं जवाद्वेगादुपेत्य तस्थौ सुवेलनितम्बं गत्वा तत्र शिविरं संस्थाप्य युद्धाशया तस्थावित्यर्थः।

पक्षे ससैन्यं रथरक्षकसैन्यसहितं सुग्रीवाः कृष्णस्याश्वाः। "सुग्रीवोवासुदेवस्य हये शाखामृगेश्वरे" इति मेदिनी। तैः समग्रं संयुक्तञ्च यत् यानं कृष्णस्य रथस्तेन प्रभावसम्पत् यस्य सः कृष्णसहितः कृष्णरथमारुह्याधिकतरप्रभावशालीत्यर्थः तथा मनस्वी स नरनाथजन्मा अर्जुनः उपप्लव्यम्। प्लुङ्गत्यर्थः पठ्यते। गन्तव्यमित्यर्थः भूमिभर्तुर्युधिष्ठिरस्य कटकं शिविरं जवात् कृष्णलाभहर्षेणातिवेगादुपेत्य तस्थौ ॥ २२ ॥

तदेति। तदा तस्मिन् काले शुकोऽपि शुकनामा राक्षसोऽपि अपिना शारणस्य परिग्रहः। "सबले सागरं तीर्णे रामे दशरथात्मजे। अमात्यौ रावणः श्रीमानब्रवीच्छुकशारणौ" इत्युपक्रम्य "तथेति प्रतिप्रत्याद्य जग्मतुर्यत्र तद्बलम्" इति लङ्काकाण्डात्। प्रतिपक्षवाचा कियन्ति रामसैन्यानि दृष्ट्वागन्तव्यमिति रावणस्य वाक्येन वचोहरोदूतः सन् तथा सुयन्त्रितः सुगोपितः आत्मा शरीरं येन सः वानररूपप्रतिच्छन्नशरीर इत्यर्थः यद्वा वानररूपेण परिभ्रमन् विभीषणेन ज्ञात्वा संयतशरीर इत्यर्थः ईदृशश्च सन् प्राप्यागत्य रामशिविरमिति शेषः तम् उन्नतांसं वृषस्कन्धं तथा श्रियं वीरत्वशोभां दधानम् अतएव जयशब्दस्य पात्रम् आधारं नृपतिं रामं सुग्रीवं वा निदध्यौ ददर्श।

पक्षे सञ्जयशब्दस्य पात्रं वाच्यः सञ्जयनामेत्यर्थः तथा सुयन्त्रितात्मा अवहितबुद्धिः कोऽपि वचोहरो दूतः तदा प्रतिपक्षवाचा धृतराष्ट्रस्य वचसा आशु शीघ्रं प्राप्य उन्नतामुज्ज्वलन्तीं श्रियं दधानं तं नृपतिं युधिष्ठिरं निदध्यौ ॥२३॥

तदाज्ञयासौ गतभीतिरेनं
हरिप्रणेतारमिदं जगाद ।
प्रज्ञेक्षणस्त्वामिदमाह राजा
मुखेन मे दूतधुरि स्थितस्य ॥२४॥
त्वया हि मत्प्रीतिपरायणत्वा-
दङ्गीकृता साधुजनप्रवृत्तिः ।
अतः स्वयोग्ये पथि वर्तितव्यं
न ते मुधेलाक्रमणेन सिद्धिः ॥२५॥

तदेति। तस्य रामस्य आज्ञया दूतोऽयं मा बध्यतामित्यनुमत्या गतभीतिर्निर्भयोऽसौ शुकः एनं हरीणां वानराणां प्रणेतारं नायकं सुग्रीवम् इदं वक्ष्यमाणं जगाद। किं तदित्याह प्रज्ञाबुद्धिरीक्षणं ज्ञानसाधनं यस्य स बुद्धिपूर्वकं कार्याकार्यविचारी नतु यथादृष्टानुसारी मूर्ख इत्यर्थः राजा रावणः दूतानां धुरि भारे स्थितस्य। ते चानित्या इति समासान्तविधेरनित्यत्वात् ऋगादेरत् सर्वत्रेति नात्समासान्तः। मे मम मुखेन त्वाम् इदं वक्ष्यमाणम् आह।

पक्षे तस्य युधिष्ठिरस्य आज्ञया अहो सञ्जयागम्यतामत्रोपविश्यतामित्यनुमत्या गतभीतिरसौ सञ्जयः हरिः कृष्णः प्रणेता नाथो यस्य स तथा तम् एनं युधिष्ठिरम् इदं जगाद किं तदित्याह हे युधिष्ठिर प्रज्ञैव ईक्षणं चक्षुर्यस्य सः अन्ध इत्यर्थः राजा धृतराष्ट्रः मे मुखेन त्वामिदमाह शेषं तुल्यम् ॥ २४ ॥

इदंपदप्रतिपाद्यमाह।

त्वयेति। हे सुग्रीव हि निश्चितं त्वया परेति विपरिवर्तते इतिपरायणः प्रतिकूलः मम रावणस्य प्रीतेः परायणो मत्प्रीतिपरायणस्तस्य भावस्तत्त्वं तस्माद्धेतोः असाधुजनस्य मूर्खलोकस्येव प्रवृत्तिरङ्गीकृता कर्तुमारब्धा विजितसमुरासुरत्रिभुवनस्य ममाप्रीतिकरं तवैतद्युद्धोद्योगरूपकार्यं मूर्खत्वं व्यञ्जयतीत्यर्थः अतोहेतोः स्वयोग्ये वानरजात्युचिते पथि वनफलभक्षणपूर्वका-

आत्मोचितं प्रोह्य वनान्तवासं
युद्धाय मा चापलमत्यकार्षीः।
अनात्मनीने पथि वर्तमानात्
पुंसो हि लोका भृशमुद्विजन्ते ॥२६॥

विरोधावस्थानरूपे मार्गे वर्तितव्यं स्थातव्यं नतु वीरकार्ये युद्धादाविति भावः। ननु सुवेलपर्यन्तमपि ससैन्येन मयाक्रान्तं तव पराजयस्तु नातिदूरे तिष्ठतीत्यत्राह सुवेलस्य तदाख्यलङ्कापर्वतस्य आक्रमणेन ते तव न सिद्धिर्नसीताप्रत्याहरणरूपकार्यलाभः राक्षसवीराणामजेयत्वादिति भावः।

पक्षे हे युधिष्ठिर त्वया मम धृतराष्ट्रस्य या प्रीतिस्तत्परायणत्वात् तदधीनत्वात् मत्प्रीतिमेवानुरुध्येत्यर्थः साधुजनप्रवृत्तिः सज्जनाचरणं राज्यं विहाय वने वास इत्यर्थः अङ्गीकृता अतः मत्प्रीत्यनुरोधेन प्रथमदर्शितसाधुत्वाद्धेतोः स्वयोग्ये साधोः स्वस्य उचिते पथि सन्मार्गे इत्यर्थः वर्तितव्यं सुवेलायाः सन्मर्यादाया आक्रमणेनोल्लङ्घनेन ते तव न सिद्धिर्नेष्टलाभः धनजनक्षयादिदोषबहुले विग्रहे मा मनः कार्षीरिति भावः ॥ २५ ॥

आत्मोचितमिति। हे सुग्रीव आत्मोचितं स्वयोग्यं वनान्तवासं वनसीमास्ववस्थानं प्रोह्य त्यक्त्वा युद्धाय युद्धं कर्तुं रणशूरैः राक्षसैः सहेति शेषः अतिशयेन चापलं चपलतां मा कार्षीर्माकुरु वानराणां वनवासमात्राधिकारात् युद्धचापलं विहाय वन एव स्थीयतामित्यर्थः। ननु सत्यं वनविहारिणो वानरा वयं युद्धानुष्ठानेऽस्माकं का हानिरित्यत्राह हि यतः अनात्मनीने आत्मनोऽहिते पथि स्वानधिकृतकार्ये इत्यर्थः वर्तमानात् पुंसः पुरुषात् लोका भृशं उद्विजन्ते उद्वेगं गच्छन्ति स्वानधिकृतकर्माधिकारे पुरुषस्य सिद्धिलाभः सुदूरपराहतः केवलं लोकोद्वेगः फलमित्यर्थः।

पक्षे हे युधिष्ठिर आत्मोचितं धार्मिकस्य स्वस्य उचितं वनान्तवासं प्रोह्य युद्धाय चापलं मात्यकार्षीः चिरकालं वन एव स्थीयतां धार्मिकस्य तव जनक्षयकरं युद्धानुष्ठानमनुचितमित्यर्थः तथात्वे दोषमाह अनात्मनीने इति। अत्रोत्तरार्द्धेन हेतुना कार्यस्य पूर्वार्द्धार्थस्य समर्थनात् कार्यकारणभावेनार्थान्तरन्यासः ॥ २६ ॥

यथार्थमेतत् कुरुराजवाक्यं
विचार्य मा लाघवसंश्रयो भूः ।
हितोपदेशेषु पराङ्मुखाना-
मदूरसंस्था विपदो हि पुंसाम् ॥२७॥

एवं विपक्षदूतेन व्याहृता वाक्यसन्ततिः ।
प्रतिजघ्ने सरस्वत्या हरिराजमुखोत्थया ॥२८॥

अहो महन्नैपुणमस्य भूभृतो
निवृत्तये नोदयितुं चिराय नः ।

यथार्थेति । हे सुग्रीव एतत् पूर्वोक्तं यथार्थं सत्यं राज्ञो रावणस्य वाक्यं विचार्य स्वमनसि विविच्य कुरु पालय लाघवसंश्रयो चापलाश्रयी माभूः सर्वथा साहसान्निवर्तस्वेत्यर्थः । अकरणे दोषमाह हि यतः हितोपदेशेषु हितवादिजनस्यादेशेषु हिताः हितजनका ये उपदेशास्तेषु वा पराङ्मुखानांताननङ्गीकुर्वतां पुंसां विपदः अदूरसंस्था निकटवर्तिन्यः झटित्येव राक्षसैर्विग्रह्णन् ससैन्यो मरिष्यसीति भावः ।

पक्षे एतत् यदुक्तं यथार्थं कुरुराजस्य धृतराष्ट्रस्य वाक्यं विचार्य लाघवसंश्रयो माभूः । शेषं तुल्यम् । पूर्वोक्त एवालङ्कारः ॥ २७ ॥

एवमिति । विपक्षस्य रावणस्य दूतेन शुकेन व्याहृता उक्ता एवमुक्तप्रकारा वाक्यसन्ततिर्वचनजातं हरीणां वानराणां राजा हरिराजः सुग्रीवस्तस्य मुखादुत्थया उत्थितया सरस्वत्या वक्ष्यमाणया वाण्या प्रतिजघ्ने प्रतिहता निवारितेत्यर्थः । यद्यपि रामायणादौ शुकसुग्रीवयोरेवमुक्तिप्रत्युक्तिवर्णनं न दृश्यते तथापि सङ्गतत्वात् श्लेषानुरोधाच्च तद्वर्णनं न दूषणमावहतीति ध्येयम्

पक्षे विपक्षस्य धृतराष्ट्रस्य दूतेन सञ्जयेन एवं व्याहृता वाक्यसन्ततिः हरिः कृष्णः राजा युधिष्ठिरश्च तयोर्मुखाभ्यामुत्थया सरस्वत्या प्रतिजघ्ने ॥ २८ ॥

अहो इति । अहो इत्याक्षेपे अस्य भूभृतो रावणस्य नोऽस्माकं चिराय निवृत्तये युद्धात् प्रतिनिवर्तनाय नोदयितुं प्रेरयितुं महत् सातिशयं नैपुणं

भवन्ति सुव्यक्तमनात्मवेदिनः
परोपदेशेषु विशेषपण्डिताः ॥२९॥
सचेद्धि राजा प्रतिदानपूर्वं
शान्तिं न वाञ्छत्युचितां कुलस्य।
दशाननस्यापि दशा न न स्या-
दमुष्य दीना हतबन्धुसूनोः ॥३०॥

कौशलं यतः अनात्मवेदिनः आत्महिताहितानभिज्ञा जनाः परेषामुपदेशेषु सुव्यक्तं स्फुटं यथा तथा विशेषेण पण्डिताः विज्ञाः भवन्ति आत्महितं न जानन्ति परेषां हितवदहितमुपदिशन्ति एतन्मूर्खस्य लक्षणमित्यर्थः।

पक्षे नोऽस्माकं चिराय निवृत्तये निवृत्तिगुणाश्रयणाय आत्मोचितं प्रोज्झ्य वनान्तवासमिति श्लोकेन चिरकालं वनवासायेत्यर्थः नोदयितुम् अस्य राज्ञो धृतराष्ट्रस्य अहो महत्त्वं पुणम्। शेषं समानम्। अत उत्तरार्द्धेन सामान्येन विशेषस्य पूर्वार्द्धस्य समर्थनादर्थान्तरन्यासः ॥२९॥

स इति। स राजा रावणः चेद्यदि प्रतिदानपूर्वं सीताप्रत्यर्पणपूर्वकं कुलस्य राक्षसवंशस्य उचितां कर्तुं योग्यां शान्तिं हि निश्चितं न वाञ्छति नेच्छति तदा दशाननस्यापि दशाननत्वेनातिपराक्रमशालिनोऽपीत्यर्थः अमुष्य दीना दशा दुःखबहुला अवस्था न स्यात् न भवेदिति न अपि तु भवेदेवेत्यर्थः किम्भूतस्य यतः हताः। आशंसायां भूतसामान्यविहिताश्चेति भविष्यति क्तः। अस्माभिर्घानिष्यमाणा इत्यर्थः बन्धवो मित्राणि सूनवः पुत्राश्च यस्य स तथा तस्य। हतबन्धुसूनोर्जनस्य दीना दशा अमुष्य न न स्यादिति वा सीतां न प्रतिदास्यति चेत् सबन्धुपुत्रोमरिष्यतीत्यर्थः।

पक्षे स राजा धृतराष्ट्रः प्रतिदानपूर्वं द्यूतच्छलेन गृहीतस्य राज्यस्य पुनःप्रत्यर्पणपूर्वकं कुलस्य कौरववंशस्य उचितां शान्तिं न वाञ्छति चेत्तदा हतबन्धुसूनोर्दशाननस्य रावणस्य दीना दशा अमुष्यापि धृतराष्ट्रस्यापि न न स्यात् अपि तु स्यादेव यथा दशाननः सीतामप्रदाय हतबन्धुसूनुर्दीनां दशां प्राप्तवान्

शुभाशुभे कर्मणि सन्निविष्टं
धर्मो यथा पश्यति लोकमेकः ।
तथा जनश्चेदखिलोऽपि धर्मं
जगत्यधर्मस्य कुतोऽवकाशः ॥३१॥
स एव तावत् प्रसमीक्ष्य धर्मं
समाचरत्वात्महितं विधेयम् ।
न यावदारोहति हन्त मौर्वी
भीमानुजस्येष्वसनं खरारेः ॥३२॥

अयमपि राज्यमप्रदाय तथा प्राप्स्यतीत्यर्थः । अत्रापेर्व्यवहितयोजनं श्लिष्टकाव्यत्वान्न दोषायेति बोध्यम् ॥ ३० ॥

शुभेति । शुभाशुभे शुभेऽशुभे वा कर्मणि सन्निविष्टं व्यापृतं लोकम् एको धर्मो यथा पश्यति । धर्मश्च जानाति नरस्य वृत्तमिति स्मरणात् । तथा अखिलोऽपि सर्वोऽपि जनश्चेत् धर्मं पश्यति तदा जगति अधर्मस्य अवकाशः अवसरः कुतः सर्वद्रष्टा एको धर्मोऽस्ति इत्यजानन्नेव जनोऽधर्मे प्रवर्तत इत्यर्थः एतेनाधार्मिकस्ते राजा यतः ईदृशमधर्मं कर्तुमुद्यत इति विशेषस्य प्रस्तुतस्य वाच्येनाप्रस्तुतेन सामान्येन बोधनादप्रस्तुतप्रशंसा । उभयत्र समानम् ॥ ३१ ॥

उपसंहरन्नाह

स एवेति । स रावणः धर्मं प्रसमीक्ष्य सदसत्कर्मफलप्रद एको धर्मोऽस्तीत्युद्दिश्य विधेयम् अवश्यकरणीयम् आत्महितं सीताप्रत्यर्पणरूपं तावदेव समाचरतु करोतु । हन्तेति हर्षे वाक्यालङ्कारे वा । भीमो भयङ्करोऽनुजो लक्ष्मणो यस्य स तथा तस्यखरारेः खरराक्षसशत्रो रामस्य मौर्वी ज्या इषवोऽस्यन्ते क्षिप्यन्तेऽनेनेति इष्वसनं धनुर्यावन्नारोहति ततःपरं तस्य प्राणाः संशयं गमिष्यन्तीति भावः ।

पक्षे स धृतराष्ट्रः आत्महितं राज्यप्रत्यर्पणरूपं खराणां तीक्ष्णकर्मणां खलानामित्यर्थः अरेः भीमस्य वृकोदरस्य अनुजः कनिष्ठो भीमानुजस्तस्यार्जुनस्य । शेषं तुल्यम् ॥३२॥

स सौष्ठवव्यञ्जितशौर्यमार्गैः
प्रत्याहतो वानरवर्यवाक्यैः।
सद्यः पुरीं प्राप्य जनेश्वरे त-
द्वचोविषं सर्प इवोत्ससर्ज ॥३३॥
आगामिसंग्रामविपन्निवृत्ता-
वुपायचिन्ताकुलचित्तवृत्तेः।
रक्षाभियुक्तस्य विमोहभाजः
प्रजागरोऽभूद्रजनीषु राज्ञः ॥३४॥

स इति। स शुकः सौष्ठवेन सुष्ठुतया व्यञ्जिता व्यक्तीकृताः शौर्यमार्गा वीर्यपद्धतिर्यैस्तानि तथा तैर्वानरवर्यस्य कपिश्रेष्ठस्य सुग्रीवस्य वाक्यैः प्रत्याहतो निराकृतः सन् सद्यस्तत्क्षणमेव न तु विलम्बात् पुरीं लङ्कां प्राप्य जनेश्वरे राक्षसेश्वरे तत् सुग्रीवसम्बन्धि वचो व्यथकत्वाद्विषमिव वचोविषम्। पुरुषव्याघ्रवदुपमितिसमासः सर्प इव इति लिङ्गात्। सर्प इव उत्ससर्ज उज्जगार उवाचेत्यर्थः। सर्पोऽपि सौष्ठवव्यञ्जिता गरुड़ादीनां शौर्यमार्गा यैस्तादृशैर्नरवर्यस्य नरेन्द्रस्य विषवैद्यस्येत्यर्थः वाक्यैः प्रत्याहत इव विषमुद्गिरति। "नरेन्द्रस्तु महीपाले विषवैद्येऽपि पुंस्ययम्" इति मेदिनी।

पक्षे स सञ्जयः। वा शब्द इवार्थे। नरवर्ययोः कृष्णयुधिष्ठिरयोः वाक्यैः प्रत्याहतोवा ताड़ित इव पुरीं हस्तिनां प्राप्य जनेश्वरे धृतराष्ट्रे तद्वचोविषं उत्ससर्ज। शेषं तुल्यम्। उपमेयम् ॥ ३३ ॥

ततः किं वृत्तमित्याह

आगामीति। आगामी आगमिष्यन् यः संग्रामो युद्धं स एव धनजनक्षयकरत्वाद्विपत् तस्या निवृत्तौ निवारणे उपायानां चिन्तया आकुला चित्तवृत्तिर्यस्य स तथा तस्य तथा रक्षेण रक्षियेण रामेण नन्वितरेण अभियुक्तस्य विरोधितस्य अतएव विमोहभाजः इतिकर्तव्यताविमूढ़स्य राज्ञो रावणस्य रजनीषु प्रजागरो जागरणमभूत्।

अत्रान्तरे भूमिपतेः प्रियार्थं
पयोधिसीमाधिगतोरुसैन्याः ।
हरीश्वरा भूमिभृतोऽध्यरोहं-
स्तुङ्गां प्रतिज्ञामिव तुङ्गभूमिम् ॥३५॥
भूभृच्छिरश्छेदविधानदक्षे
मायाविनि क्षुभ्यति राक्षसौघे ।
वैधव्यचिन्ताचकितैश्चकम्पे
नरेन्द्रदारैर्धरणीसमेतैः ॥३६॥

पक्षे क्षत्ता विदुरेण अभियुक्तस्य सतिरस्कारं बोधितस्य। "क्षत्ता शूद्रात्क्षत्रियजे प्रतीहारे च सारथौ । भुजिष्यातनयेऽपि स्यात्" इति मेदिनी। विदुरस्य भुजिष्यापुत्रत्वात् क्षत्तृशब्दवाच्यत्वम् । राज्ञो धृतराष्ट्रस्य। शेषं समानम्। अत्र प्रजागरं प्रति विशेषणत्रयस्य हेतुत्वात् काव्यलिङ्गम् ॥ ३४ ॥

अत्रेति। अत्रान्तरे एतस्मिन्नवसरे भूमिपतेः रामस्य प्रिया सीता तदर्थं तद्दर्शनार्थं हरीश्वरा वानराधिपा अङ्गदादयः तुङ्गां महतीं प्रतिज्ञामिव भूमिभृतः सुवेलपर्वतस्य तुङ्गभुमिं उच्चप्रदेशम् अध्यरोहन् आरुरुहुः किम्भूताः पयोधिसीमानं समुद्रस्य दक्षिणतीरमधिगतानि प्राप्तानि उरूणि महान्ति सैन्यानि येषान्ते सर्वसैन्यानि समुद्रस्य दक्षिणकूलमागतानि दृष्ट्वा सीतादर्शनार्थं सुवेलशृङ्गाण्यारुरुहुरित्यर्थः ।

पक्षे भूमिपतेर्युधिष्ठिरस्य प्रियार्थं प्रीतये हरीश्वराः कृष्णप्रधाना भूमिभृतो-राजानः पयोधिसीमभ्यः आसमुद्रतीरेभ्य अधिगतानि आगतानि उरूणि सैन्यानि येषां तादृशाः सन्तः तुङ्गभूमिमिव तुङ्गां प्रतिज्ञाम् अहमेवं करिष्या-मीत्यादिरूपाम् अध्यरोहन् उभयत्राप्युत्प्रेक्षालङ्कारः ॥ ३५ ॥

भूभृदिति। मायाविनि मायाकार्यनिपुणे अतएव मायया भूभृतो रामस्य शिरश्छेदविधाने दक्षे राक्षसौघे क्षुभ्यति चलति सति धरण्या पृथिव्या समेतैः सहितैः नरेन्द्रस्य रामस्य दारैः पत्न्या सीतया। आपोदारा इत्यादिना

अथाङ्गदं बिभ्रतमुल्लसन्महः
सुरेन्द्रसूनोर्हृदयैकनन्दनम्।
समीक्ष्य कार्यस्य गतिं नरेश्वरो
हरिं परेषां नगरीमजीगमत् ॥३७॥

दारशब्दस्य नित्यबहुवचनान्तत्वम्। वैधव्यचिन्तया धिगहं विधवा भविष्यामीति भावनया चकितैर्भीतैः सद्भिश्चकम्पे कम्पितम्। अत्र राक्षसीक्षोभकृतं धरण्याः कम्पनमन्यत् चिन्ताभयकृतं सीतायाश्च कम्पनमन्यदिति भिन्नयोः कम्पनयोरेकत्वाध्यवसानादतिशयोक्तिः सा च समेतैरिति सहितार्थस्य कथनात् सहोक्तिमूला।

पक्षे भूभृतां राज्ञां शिरश्छेदविधानदक्षे तथा मायाविनि राक्षसीवे घटोत्कचबलेक्षुभ्यति क्षोभं कुर्वति सति नरेन्द्राणां दुर्योधनादीनां दारैः पत्नीभिश्चकम्पे शेषं तुल्यम्। भूभृच्छिरोच्छेदेति पाठे रामायणपक्षे सएवार्थः पिण्डं दद्यात्त्रयाशिरे इत्यादौ अकारान्तस्यापि शिरशब्दस्य दृष्टचरत्वात्। भारतपक्षे तु भूभृतां पर्वतानां शिराः शिलाः। बालादेर्लीरोवा रश्च ल इति लस्य रः। तासामुच्छेदविधानमुत्पाटनं तत्रापि दक्षः इत्यर्थः ॥ ३६ ॥

अथेति। अथानन्तरं नरेश्वरो रामः। कार्यस्य गतिं समीक्ष्य सीतायाचनमकृत्वा युद्धोद्योगो न विधेय इति विविच्य अङ्गदं अङ्गदनामानं हरिं वानरं परेषां राक्षसानां नगरीं लङ्कां अजीगमत् दूतत्वेन प्रास्थापयत्। किम्भूतम् उल्लसदुद्दीप्तं महस्तेजोबिभ्रतं धारयन्तं तथा सुरेन्द्रसूनोर्वालिनः हृदयैकनन्दनं हृदयाह्लादकरं पुत्रमित्यर्थः सुरेन्द्रसूनोरुल्लसन्महोबिभ्रतं तथा हृदयैकनन्दनं सर्वमनःसन्तोषकमिति वा।

पक्षे नरेश्वरो युधिष्ठिरः कार्यस्य गतिं समीक्ष्य 'सन्ध्यसिद्धौ तु विग्रह' इति नीतिस्तस्मात् सन्ध्यर्थमेव प्रथमं यत्नः करणीय इति विविच्येत्यर्थः हरिं कृष्णं परेषां नगरीं हस्तिनाम् अजीगमत् किम्भूतम् उल्लसन्मह उद्दीप्तकान्ति अङ्गदं केयूरं बिभ्रतं तथा सुरेन्द्रसूनोरर्जुनस्य प्रणयित्वात् हृदयैकनन्दनम् ॥ ३७ ॥

स याननिर्ह्रादमुदीरयन् खे
सुदूरमध्वानमतीत्य वेगात्।
प्रपद्य मध्यं परमण्डलस्य
ददर्श राजानमभीः सभार्यम् ॥३८॥

बलाधिपैर्भीष्ममुखैरुपेतं
प्रसिद्धभूरिश्रवसं हरिस्तम्।
सकर्णशल्यं वच इत्यवोचत्
प्रकाशगम्भीरमहार्थजातम् ॥३९॥

स इति। यानस्य गमनस्य निर्ह्रादं शब्दं खे आकाशे उदीरयन् जनयन् आकाशपथेनैव गच्छन्नित्यर्थः सोऽङ्गदः वेगात् सुदूरमध्वानं पन्थानमतीत्य उल्लङ्घ्य अभीर्निर्भयः सन् परमण्डलस्य शत्रुसमूहस्य मध्यं प्रपद्य प्राप्य सभार्यं सस्त्रीकं मन्दोदरीसहितमित्यर्थः सभायाम् आर्या यस्य तादृशमिति वा राजानं रावणं ददर्श।

पक्षे यानस्य रथस्य निर्ह्रादं चक्रध्वनिं खे उदीरयन्नुत्थापयन् स हरिः सभार्यं गान्धारीसहितं राजानं धृतराष्ट्रं ददर्श। शेषं तुल्यम् ॥ ३८ ॥

बलाधिपैरिति। स हरिर्वानरोऽङ्गदः भीष्माणि भयङ्कराणि मुखानि वदनानि येषां ते तथा तैर्बलाधिपैः सेनापतिभिरुपेतं वेष्टितं तथा प्रसिद्धानि भूरीणि बहूनि विंशतिसंख्यकानीत्यर्थः श्रवांसि श्रवणानि यस्य तादृशं तं रावणं कर्णशल्यं श्रुतिकटु तथा प्रकाशं प्रकाशमानं न तु दुर्बोधं गम्भीरं गौरवान्वितं महत् ओजस्वि अर्थजातं वाच्यसम्पत्तिर्यस्य तादृशम् इति वक्ष्यमाणं वचः अवोचत्।

पक्षे हरिः कृष्णः भीष्ममुखैर्गाङ्गेयप्रभृतिभिर्बलाधिपैरुपेतं तथा प्रसिद्धोऽतिविख्यातो भूरिश्रवा नृपविशेषो यस्य तं तथा कर्णो राधेयः शल्यो मद्राधिपस्ताभ्यां सहितं तं धृतराष्ट्रम् इति वक्ष्यमाणं वचोऽवोचत् शेषं समानम् ॥३९॥

अनात्मवंशोचितमार्यगर्हितं
सबन्धुमित्रस्य कुलस्य घस्मरम्।
त्वमग्रयायी नयपारदृश्वनां
विरोधमीदृग्विधमीहसे कथम् ॥४०॥

तस्मादस्माद्विरम कलहाद्गोप्तुमात्मीयगोत्रं
चौणीभर्त्रे वितरमुषितामात्मपालोमहेलाम्।
नोचेज्जिष्णोरुपहर शरश्रेणये प्राणराशीन्
मोहान्धानां युधि निजसुहृद्बन्धुभृत्यात्मजानाम् ॥४१॥

अनात्मेति। हे रावण पक्षे हे धृतराष्ट्र नयस्य पारम् अवसानं पश्यन्तीति नयपारदृश्वानो नीतिरहस्यज्ञाः। कर्मणीड्ण इति वन्। तेषाम् अग्रयायी प्रथमगण्यस्त्वम् ईदृग्विधम् एवंप्रकारं परपत्नीहरणरूपं पक्षे परराज्याप्रदानरूपं नीतिविरुद्धं विरोधं विवादजनकं कर्म कथम् ईहसे कर्त्तुं चेष्टसे किम्भूतम् अनात्मवंशोचितं न आत्मकुलस्य योग्यं तव कुलोत्पन्नेन केनाप्यनाचरितमित्यर्थः तथा आर्यैर्महाजनैर्गर्हितं तथा बन्धवः आत्मपितृमातृसम्बन्धिनः पितृष्वस्रीयादयः सुहृदो मित्राणि तैः सहितस्य कुलस्य घस्मरंभक्षकं नाशकमित्यर्थः ॥४०॥

तस्मादिति। हे रावण पक्षे धृतराष्ट्र तस्मात् पूर्वोक्ताद्धेतोः अस्मादुपस्थितात् कलहात् विरोधाद्विरम निवृत्तोभव। पर्याङ्विभ्योरम इति परस्मैपदम्। आत्मीयगोत्रं स्ववंशं गोप्तुं रक्षितुं तथा आत्मानं पालयतीत्यात्मपालः आत्मानश्च गोप्तुमित्यर्थः चौणीभर्त्रे राज्ञे रामाय पक्षे युधिष्ठिराय मुषितां छलेनापहृतां पक्षे द्यूतच्छद्मना गृहीतां महे उत्सवे इलति प्रीते सङ्गच्छत इत्यर्थः महिला महिला। उत्सवप्रियाः खलु कामिन्य इति प्रसिद्धेः। इल प्रये गताविति कल्पद्रुमः तस्मादिगुपान्तत्वादत् प्रत्ययः। महती पूज्या मातेत्यर्थः इलाभूर्यस्याः सा महेला भूमितनयेत्यर्थः इति केचित्। तां सीतां पक्षे महती चासौ इला भूश्चेति महेला तां महाराज्यमित्यर्थः। "इलोर्वी वाग्भध्नी-

निशितविशिखसङ्घोत्कृत्तवीरोत्तमाङ्ग-
स्तवकितलहरीभिः शोणिताम्भःसरिद्भिः।
नयनिपुण न यावत् क्षाल्यते क्षोणिचक्रं
द्रुतमुपनतकालं तावदाधत्स्व सन्धिम् ॥४२॥

वैधव्यव्यथितसुतावरोधबद्ध-
प्रक्रन्दप्रतिरवमेदुरोदराणि।
स्युर्यावन्न तव गृहाण्यतो विचारं
त्वं तावत् कुरु कुलशान्तये यतस्व ॥४३॥

णोः" इति हेमचन्द्रः। वितर देहि। नोचेदेवं न स्याच्चेत्तदा युधि युद्धे जिष्णो-र्जयशीलस्य रामस्य पक्षे अर्जुनस्य शरश्रेण्यै वाणपरम्परायै मोहेनान्धानां हिताहितविवेकरहितानां निजाः स्वीयाः सुहृदोमित्राणि बन्धवः पूर्वोक्ता-स्त्रिविधाः भृत्याः सेवकाः आत्मजाश्च मेघनादादयः पक्षे दुर्योधनादयस्तेषां प्राणराशीन् उपहरं अर्पय अप्रदाने अवश्यमेवेते विनङ्क्ष्यन्तीति भावः। मन्दाक्रान्तावृत्तम् ॥ ४१ ॥

निशितेति। हे नयनिपुण नीतिमर्मज्ञ रावण पक्षे धृतराष्ट्र निशिता-स्तीक्ष्णा ये विशिखा रामस्य पक्षेऽर्जुनस्य वाणा तेषां सङ्घैरुत्कृत्तानि छिन्नानि यानि वीराणां त्वदीयशूराणामुत्तमाङ्गानि मस्तकानि तैः स्तवकिता जात-स्तवका इव लहर्यस्तरङ्गा यासां ताभिः शोणितानि हतवीरजनरुधिराण्येव अम्भांसि तेषां सरिद्भिर्नदीभिः प्रवाहैरित्यर्थः यावत् क्षोणिचक्रं भूमण्डलं न क्षाल्यते तावत् द्रुतं शीघ्रम् उपनत उपस्थितः कालोयत्र तच्च यथा स्यात्तथा। इतःपरमेवं कालो दुर्लभ इति भावः। सन्धिम् आधत्स्व कुरुष्व। मालिनी-वृत्तम् ॥ ४२ ॥

वैधव्येति। हे रावण पक्षे धृतराष्ट्र तव गृहाण्यन्तःपुराणि वैधव्येन पति-वियोगेन व्यथिताः कातरा ये सुतानां मेघनादादीनां पक्षे दुर्योधनादीनाम् अवरोधाः अन्तःपुरिकाः पत्न्य इत्यर्थः तैर्बद्ध आरब्धो यः प्रक्रन्दः प्रकर्षेण क्रन्दनं

द्विजोत्तमाकीर्णकुशस्थलाढ्यान्
ग्रामानपि त्वं नियतं विसृज्य।
सुखप्रसाध्येन युधिष्ठिरेण
सन्धाय मोदस्व चिराय राज्ञा ॥४४॥

परिगतनयविद्यान् बिभ्रतो राजलक्ष्मीं
विषयरसनिधाने यौवने वर्तमानान्।

तस्य प्रतिरवेण प्रतिध्वनिना मेदुराणि गम्भीराणि व्याप्तानीत्यर्थः उदराण्यभ्यन्तराणि येषां तानि यावन्न स्युः तावत् अतोऽत्र विषये। सम्प्रम्यास्तसिः। विचारं कुरु तथा कुलशान्तये वंशरक्षणाय यतस्व यत्नं कुरुष्व पक्षे अतोहेतोस्तावत् अविचारम् शीघ्रं कुरुकुलस्य शान्तये यतस्व। विग्रहावलम्बनेऽवश्यमेव ते पुत्रा मरिष्यन्तीति भावः। प्रहर्षिणीवृत्तम्, "त्नाशाभिर्मनजरगाः प्रहर्षिणीयम्" इति लक्षणात् ॥ ४३ ॥

द्विजोत्तमेति। हे रावण द्विजोत्तमैर्मुनिभिराकीर्णास्तथा कुशस्थलैः द्विजकर्मप्रधानाङ्गदर्भबहुलप्रदेशैराढ्या युक्ताश्च ते च तेचेति विशेषणसमासः ईदृशान् ग्रामानपि नियतं विसृज्य दत्त्वा। अपिः समुच्चये न केवलं सीताप्रत्यर्पणमात्रेण रामस्य कोपशान्तिः किन्तु त्वदीया राक्षसा मुनिजनवसतिग्रामेषु सदोपद्रवमाचरन्ति तेषां निवारणेन तानपि निरुपद्रवान् कृत्वेत्यर्थः। सुखप्रसाध्येन सुखेन सङ्गम्यमानेन युधिष्ठिरेण संग्रामस्थिरेण राज्ञा रामेण सह सन्धाय सन्धिं कृत्वा चिराय मोदस्व हर्षं प्राप्नुहि।

पक्षे हे धृतराष्ट्र द्विजोत्तमैराकीर्णं यत् कुशस्थलम् अविस्थलापरनामको ग्रामविशेषस्तदेव आढ्यं मुख्यं येषां ते तथा तान् ग्रामानपि अपिरेवार्थे अविस्थलप्रभृतीन् पञ्च ग्रामानेव नत्वन्यप्रदेशानित्यर्थः विसृज्य दत्त्वा युधिष्ठिरेण राज्ञा सन्धाय चिराय मोदस्व। शेषं तुल्यम्। "अविस्थलं वृकस्थलं माकन्दीं वारणावतम्। अवसानं महावाहो कञ्चिदेवञ्च पञ्चमम्" इति भारतम् ॥ ४४ ॥

परिगतेति। हे रावण पक्षे धृतराष्ट्र त्वम् आत्मजान् पुत्रान् इन्द्रजिदादीन् पक्षे दुर्योधनादीन् समरभुवि युद्धस्थले मुधा अकारणम् अन्तकाय यमाय मा

बलतुलितमहेन्द्रानात्मजानात्मतुल्यान्
समरभुवि मुधा त्वं मान्तकायोपहार्षीः ॥४५॥
इति हरिवदनाद्विनिःसृता सा
परिषदि सज्जनसम्मतापि वाणी।
शशिरुचिरिव गह्वरे महाद्रे-
र्मनसि परस्य चकार न प्रवेशम् ॥४६॥
त्वरितमतिवृषाकपेर्गिरोद्यद्-
भ्रुकुटिभुजङ्गमलाञ्छनो विपक्षः।

उपहार्षीः यमस्योपहारान् मा कुरु मा विनाशयेत्यर्थः किम्भूतान् परिगता संप्राप्ता नयविद्या यैस्तान् न तु मूर्खानित्यर्थः तथा राजलक्ष्मीं राज्यश्रियं बिभ्रतो धारयतः यौवराज्ये वर्तमानानित्यर्थः तथा विषयरसानां निधानं भोगो यत्र तस्मिन् यौवने वर्तमानान् न तु बालान् वृद्धान् वेत्यर्थ तथा बलेन तुलितो जितः पक्षे सदृशीकृतोमहेन्द्रः शक्रो यैस्तान् तथा आत्मतुल्यान् आत्म-वद्बलाधिकान्। यौवने वर्तमान इति पाठे भारतपक्षे यौवनेऽवर्तमानो-वृद्ध इत्यर्थः ॥ ४५ ॥

इतीति। परिषदि सभायां इति पूर्वोक्तरूपा हरेर्वानरस्याङ्गदस्य पक्षे कृष्णस्य वदनाद्विनिःसृता तथा सज्जनसम्मता साधुजनप्रियापि पक्षे नारदा-दिभिरादृतापि सा वाणी महाद्रेर्महापर्वतस्य गह्वरे शशिरुचिश्चन्द्रकिरण इव परस्य शत्रोरावणस्य पक्षे दुर्योधनस्य मनसि प्रवेशं न चकार तस्य रुचिकरी न बभूव। यथा महाद्रेर्गह्वरे शशिरुचिर्न प्रविशति केवलं तम एव तिष्ठति अत्रापि तथेत्युपमा युद्धमन्तरेण सीतां पक्षे राज्यं न दास्यामीति तेन निश्चितमित्यर्थः। पुष्पिताग्रावृत्तम्, "अयुजि नयुगरेफतो यकारो युजि च नजो जरगाश्च पुष्पि-ताग्रा" इति लक्षणात् ॥ ४६ ॥

त्वरितेति। वृषाणामिन्द्रमतिक्रान्तोऽतिवृषा इन्द्रविजेतेत्यर्थः। "वासवो वृत्रहा वृषा" इत्यमरः। विपक्षो रावणः कपेरङ्गदस्य गिरा पूर्वोक्तवाचा उद्यती

रिपुकुलबलसारभूतमेनं

तम इव तिग्मरुचिं निरोद्धुमैच्छत् ॥४७॥

अधिपतिबलनुन्नेष्वञ्जसासौ बलाग्रे

रिपुषु कृतनिरोधप्रक्रमेषु प्रकामम् ।

परिषदि निजतेजस्तेजयामास पूर्वं

हरिरिव बलियज्ञे विक्रमाक्रान्तलोकः ॥४८॥

जायमाना या भ्रुकुटिर्भ्रूसंकोचनं सैव भयङ्करत्वाज्जङ्गमस्तद्रूपं लाञ्छनं कोपचिह्नं यस्य तादृशः सन् रिपुकुलेषु शत्रुसमूहेषु मध्ये बलेन सामर्थ्येन सारभूतं प्रधानम् एनं कपिं तिग्मरुचिं सूर्यं तमो राहुरिव । "तमस्तु राहुः स्वर्भानुः" इत्यमरः । त्वरितं झटिति निरोद्धुं संयन्तुम् ऐच्छत् ।

पक्षे विपक्षो दुर्योधनः त्वरिता सत्वरा मतिर्यत्र क्रियायां तद्यथा तथा वृषाकपेः कृष्णस्य । "हरविष्णू वृषाकपी" इत्यमरः । रिपुकुलस्य युधिष्ठिरादेर्बलेषु सैन्येषु सारभूतम् एनं वृषाकपिम् । शेषं तुल्यम् । उपमालङ्कारः । पूर्वोक्तं वृत्तम् ॥ ४७ ॥

अधिपतीति । अधिपतिना राक्षसाधिपेन रावणेन बलेन शक्त्यानुन्नेषु झटिति वानरमिमं निगृह्णाणेति प्रेरितेषु रिपुषु राक्षसेषु कृतोनिरोधप्रक्रमः संयमनोपक्रमो यैस्ते तथा तेषु सत्सु असौ अङ्गदः परिषदि सभायां बलानां सैन्यानामग्रे बलान्यनादृत्येत्यर्थः अञ्जसा तत्त्वेन प्रकामं प्रभूतं यथा तथा विक्रमेणाक्रान्ताः क्षोभिता लोका जना येन तादृशः सन् पूर्वं बलियज्ञे हरिर्वामन इव निजतेजस्तेजयामास प्रकाशयामास । यथा वामनः पूर्वं बलियज्ञे विक्रमेण पादविक्षेपेणाक्रान्तलोको व्याप्तभुवनत्रयः सन् परिषदि निजतेजोऽदर्शयत्तथेत्यर्थः । न कोऽप्यङ्गदं संयन्तुं शेकुरित्यर्थः ।

पक्षे अधिपतेर्दुर्योधनस्य बलेन नुन्नेषु रिपुषु दुःशासनादिषु कृतनिरोधप्रक्रमेषु सत्सु परिषदि नृपाणां सदसि सौबलस्य शकुनेरग्रे च अर्थात् प्राकरणिकः कृष्णः निजतेजस्तेजयामास विश्वरूपं दर्शयामासेत्यर्थः । शेषं तुल्यम् । उपमा । मालिनीवृत्तम् ॥ ४८ ॥

दिवि च भुवि च तुल्यं तायमानैर्महोभिः
प्रमथितपरधामा लोचनानि प्रतिघ्नन् ।
अरितिमिरनिरासाद्दर्शयन् विश्वरूपं
मिहिर इव स उद्यन् सर्वभूतैरशंसि ॥४९॥

परप्रतापातपसन्निपातात्
प्रकीर्य तेजः प्रतिपक्षकक्षे ।
परस्य शान्त्या पुनरेव शान्तिं
प्रापानुकुर्वन् रविकान्तचेष्टाम् ॥५०॥

दिवीति। सोऽङ्गदः उद्यन् मिहिरः सूर्य इव सर्वभूतैरशंसि स्तुतः किम्भूतोऽङ्गदः सूर्यश्च प्रमथितं सङ्कोचितं परधाम शत्रुतेजः अन्यत्र ग्रहादिकान्तिर्येन सः तथा दिवि आकाशे च भुवि पृथिव्याञ्च तुल्यं समानं यथा तथा तायमानैः विस्तार्यमाणैर्महोभिः पराक्रमैः अन्यत्र किरणैः लोचनानि राक्षसानाम् अन्यत्र जनानां नयनानि प्रतिघ्नन् प्रतिहतानि कुर्वन् एकत्र पराक्रमदर्शनजनितविस्मयात् अन्यत्र दर्शनासहिष्णुत्वादिति भावः। तथा अरयो राक्षसास्तिमिराणीव अन्यत्र अरय इव तिमिराणि तेषां निरासात् निग्रहात् निग्रहजनितहर्षादित्यर्थः अन्यत्र निवारणात् विश्वरूपं विश्वव्यापकं स्वरूपम् अतिवृहद्रूपमित्यर्थः अन्यत्र विश्वेषां पदार्थानां स्वरूपं दर्शयन्। अत्र मिहिर इवेत्युपमा श्लेषमूलातिशयोक्त्या सङ्कीर्णा।

पक्षे लोचनानि भीष्मद्रोणविदुरान् महर्षींश्च वर्जयित्वा अन्येषां सभ्यानां नयनानि प्रतिघ्नन् तथा विश्वरूपं स्वस्मिन् विश्वेषां ब्रह्मादीनां स्वरूपं दर्शयन् स कृष्णः सर्वभूतैरशंसि शेषं तुल्यम् ॥ ४९ ॥

परेति। रविकान्तस्य सूर्यकान्तमणेश्चेष्टां क्रियाम् अनुकुर्वन् तुलयन् प्रकरणप्राप्तोऽङ्गदः पक्षे कृष्णश्च परस्य शत्रोः अन्यत्र सूर्यस्य प्रतापस्तेज औज्ज्वल्यमित्यर्थः आतप इव स तथा तस्य सन्निपातात् सम्बन्धाद्धेतोः कक्षः शुष्कवनं तृणं वा प्रतिपक्षः शत्रुः कक्ष इव स तथा तस्मिन्। "कक्षो वीरुधि दोर्मूलकच्छे

स क्षिप्रं नृपजननीतिपारदर्शी
स्वैर्वाक्यैः कृतपरपक्षकर्णभेदः ।
भूभर्तुर्निकटमुपेत्य वैरिवर्गं
व्याचष्ट प्रतिनियतोग्रदण्डसाध्यम् ॥५१॥
अथात्तकालो नृपतिर्न्ययुङ्क्त
बलानि रोषादभिषेणनाय ।

शुष्कवने तृणे" इति हेमचन्द्रः । तेजोबलं प्रकीर्य प्रकाश्य अन्यत्र तेजो वह्निं प्रक्षिप्य पुनरेव एवाप्यर्थे पुनरपि परस्य शत्रोरन्यत्र सूर्यस्य शान्त्या संयन्तुमशक्त्वादनाख्यया अन्यत्र अस्तगमनेन शान्तिं प्राप शान्तोबभूव विश्वरूपं संहृतवानित्यर्थः । रविकान्तोयथा रविकरसम्पर्केण ज्वलन् कक्षं दग्ध्वा पुनश्च रवेरस्तगमनेन शान्तोभवति तथायमित्युपमा । परस्य शान्त्येत्यत्र सकृत्प्रशान्त्येति पाठोन मनोरमः ॥ ५० ॥

स इति । नृपजनानां नीतिर्नयस्य पारदर्शी मर्मज्ञस्तथा स्वैर्वाक्यैर्निजकटुवचनैः कृतः परपक्षस्य शत्रुपक्षस्य कर्णभेदः श्रोत्रव्यथा येन तादृशः सोऽङ्गदः क्षिप्रं शीघ्रं भूभर्तूरामस्य निकटम् उपेत्यागत्य वैरिवर्गं शत्रुसङ्घं प्रतिनियतेन उपयुक्तेन उग्रेण महता दण्डेन निग्रहेण साध्यं वश्यं व्याचष्ट अकथयत् अतिदुर्विनीता राक्षसाः स्वयं सीतां दत्त्वा सन्धिं न करिष्यन्ति अतो महता पराक्रमेण ते आक्रम्यन्तामित्युवाचेत्यर्थः ।

पक्षे नृपजनन्याः कुन्त्या इतेर्गतेर्दुर्गतेरित्यर्थः यत्पारम् अवसानं तद्दर्शी दुर्योधनादिनिधनमन्तरेण कुन्ती सुखं न लप्स्यतइति जानन्नित्यर्थः तथा स्वैर्वाक्यैः कृतः परपक्षस्य शत्रुपक्षमाश्रितस्य कर्णस्य राधेयस्य भेदो वेधो येन तादृशः स कृष्णः भूभर्तुर्युधिष्ठिरस्य क्षिप्रं निकटमुपेत्य वैरिवर्गं दुर्योधनादिकं प्रतिनियतोग्रदण्डसाध्यं व्याचष्ट सूच्यग्रलग्नभूखण्डमपि दुर्योधनादयस्ते न दास्यन्ति अतः प्रबलेन युद्धोद्योगेन ते आक्रम्यन्तामित्युवाचेत्यर्थः । प्रहर्षिणीवृत्तं, "म्नौज्रौगस्त्रिदशयतिः प्रहर्षिणीयम्" इति लक्षणात् ॥ ५१ ॥

अथात्तेति । अथ अङ्गदस्य पक्षे कृष्णस्य वचनानन्तरं नृपतौ रामः पक्षे

युगान्तमासाद्य यथाम्बुराशिः
स्वाम्भांसि लोकत्रयसंप्लवाय ॥५२॥
साकं भुवा मत्सरिणां मनांसि
प्रकम्पयन् भूमिपतिः प्रपेदे।
द्विषो जिगीषुर्जमदग्निजन्मा
रामः कुरुक्षेत्रमिवाजिभूमिम् ॥५३॥
अथोद्धतस्यन्दनसप्तिपत्ति-
हस्तिस्फुटाटोपनिकामभीमा।

युधिष्ठिरः आत्तः प्राप्तः कालः यात्रायोग्यसमयो येन तादृशः सन् रोषात् क्रोधात् अभिषेणनाय सेनया शत्रोरभिमुखगमनाय। "यात्रा सेनयाभिगमनमरौ तदभिषेणनम्" इत्यमरः। अभिपूर्वात् सेनाशब्दात् सेनयाभिमुखगमनमित्यर्थे णिङ्। बलानि सैन्यानि न्ययुङ्क्त प्रेरयामास। उपमया द्रढयति अम्बुराशिः समुद्रः युगान्तं प्रलयकालमासाद्य लोकत्रयस्य संप्लवाय स्वाम्भांसि स्वीय-जलानि यथा नियुङ्क्ते तथेत्यर्थः। अत्र, "श्रौती यथेववाशब्दा इवार्थोवा वतिर्यदि" इत्युक्तेर्यथाशब्दप्रयोगादुपमेयं श्रौती तया च नृपतेरनिवार्यप्रसरत्वं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः ॥ ५२ ॥

साकमिति। भुवा भूम्या साकं सह मत्सरिणां द्वेषिणां राक्षसानां मनांसि प्रकम्पयन् एकत्र बलभरेण अन्यत्र भयेनेति भावः भूमिपतीराजा रामोदाशरथिः द्विषः शत्रून् जिगीषुर्जेतुमिच्छुः सन् जमदग्निजन्मा जामदग्न्यो रामः कुरुक्षेत्रमिव आजिभूमिं संग्रामस्थलं प्रपेदे जगाम यथा द्विषोजिगीषुर्ज-मदग्निजन्मा रामः कुरुक्षेत्रं प्रपेदे तथेत्यर्थः। अत्र सहोक्त्युपमयोर्निरपेक्ष-तयावस्थानात् संसृष्टिः।

पक्षे भूमिपतिर्युधिष्ठिरः जमदग्निजन्मा रामइव कुरुक्षेत्रमाजिभूमिं प्रपेदे। अन्यत्तुल्यम्। अस्मिन् पक्षे इवशब्दस्योपमानोत्तरत्वाभावेनोपमाया अवा-चकत्वादुत्प्रेक्षावाचकत्वं ततश्च सहोक्त्युत्प्रेक्षयोः संसृष्टिः ॥ ५३ ॥

अथोद्धतेति। अथानन्तरम् उद्धतानाम् उद्भटं चलतां स्यन्दनानां रथानां

रणाङ्गनं प्राप दशास्यसेना
पतिप्रणुन्ना पृतना परेषाम्॥५४॥
अथ गतवति राज्ञः सोदरे शत्रुपक्षं
श्रितवति तदभीष्टं संविधित्सौ युयुत्सौ।
अपि सुभटसमेता सा चमूः कान्तिमत्तां
युवतिरिव न लेभे कर्णशोभाविहीना॥५५॥

सप्तीनामश्वानां पत्तीनां पदातीनां हस्तिनाञ्च चतुरङ्गसेनानामित्यर्थः। "हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयम्" इत्यमरः। यः स्फुटोव्यक्त आटोप ओद्धत्यं तेन निकामभीमा अतिभयदा तथा दशास्यस्य रावणस्य सेनापतिभिः प्रणुन्ना चालिता परेषां पृतना सेना रणाङ्गनं संग्रामचत्वरं प्राप।

पक्षे अशास्यस्य केनाप्यदम्यस्य दुर्योधनस्य यः सेनापतिर्भीष्मः तेन प्रणुन्ना परेषां पृतना रणाङ्गनं कुरुक्षेत्रं प्रापत् आगमत्। अन्यत्तुल्यम्॥५४॥

अथेति। अथानन्तरं गतवति अपमानकारिणं रावणं विहाय पूर्वं निःसृते तथा शत्रुपक्षं रामपक्षं श्रितवति भजमाने राज्ञो रावणस्य सोदरे विभीषणे तस्य रामस्य अभीष्टं संविधित्सौ सम्यक् कर्त्तुमिच्छौ अतएव युयुत्सौ योद्धुमिच्छौ सति सा चमूः राक्षसी सेना सुभटैः सुयोद्धृभिः समेता सङ्गतापि कर्णशोभाविहीना कुण्डलादिकृतश्रवणशोभाशून्या युवतिरिव कान्तिमत्तां शोभां न लेभे प्राप भ्राताद्यात्मीयजनाधिष्ठिता हि सेना जिगीषोः सौभाग्यं व्यञ्जयति अत्र तदभावान्न सा शुशुभे इत्यर्थः।

पक्षे शत्रुपक्षं श्रितवति पाण्डवपक्षपातिनि युयुत्सौ युयुत्सुनामके राज्ञो दुर्योधनस्य सोदरे एकपितृकत्वात् भ्रातरि। युयुत्सोर्भुजिष्यातनयत्वान्न सोदरत्वम्। गतवति दुर्योधनमपहाय पाण्डवान् प्राप्ते सति सा चमूः कौरवसेना सुभटैः समेतापि कर्णशोभाविहीना युवतिरिव कान्तिमत्तां न लेभे चमूरपि कर्णेन राधेयेन कृतया शोभया विहीना रथातिरथसंख्याने भीष्मेण कर्णस्यार्द्धरथत्वकथनात् क्रुद्धः कर्णो जीवति भीष्मेऽहं न योत्स्यामीति प्रतिज्ञातवान् ततश्च युयुत्सौ शत्रुपक्षमाश्रिते कर्णे च रणपराङ्मुखे सति सा चमूर्न

विलोक्य जिष्णुः परमण्डलं त-
च्चिन्तां प्रियापायभयाद्गतोऽपि ।
स्थैर्यं प्रपेदे हरियोगलब्ध-
स्वास्थ्यः प्रभाविक्रमशोभि रामः ॥५६॥

शुशुभे इत्यर्थः शेषं तुल्यम् । उपमेयं कर्णशोभाविहीनेतिश्लेषानुप्राणिता । मालिनी वृत्तम् ॥ ५५ ॥

विलोक्येति । जिष्णुर्जयशीलो रामो दाशरथिः प्रभा वेशपरिच्छदादिभिः शोभा विक्रमः पराक्रमस्ताभ्यां शोभत इति प्रभाविक्रमशोभि तत् परमण्डलं शत्रुचक्रं विलोक्य प्रियाया मायानिर्मितायाः सीताया अपायाद्वधात् यद्भयं तस्माच्चिन्तां गतोऽपि 'हाकष्टं सीतापि एतैर्वध्यते' इति भावनां प्राप्तः सन्नपि हरेर्वानरस्य सुग्रीवस्य यो योगो युक्तिः नेयं तत्त्वतः सीता किन्तु मायारचिता केवलं भयप्रदर्शनार्थं मायाविनां राक्षसानामेतत् कर्मेति विवेचनेत्यर्थः तेन लब्धं स्वास्थ्यं सौमनस्यं येन तादृशः सन् स्थैर्यं धैर्यं प्रपेदे प्राप हरीति विभीषणस्योपलक्षणं तेनापि तथा बोधनात् । यद्यपि मायासीतावधस्य रामायणादौ मेघनादयुद्धकाले वर्णितत्वादत्र तद्वर्णन मनुचितमित्यसन्तोषस्तर्हि एवं व्याख्येयं प्रियाया योऽपायः सम्भाव्यमानो वधस्तद्भयात् यदर्थोऽयमाडम्बरः यदि सा सीता क्रुद्धैराक्षसैर्वध्यते इति भीतेरित्यर्थः हरियोगश्च इयं तावत् स्त्री तत्राप्यनागसा कथमेतैर्हन्तव्या 'अवध्याञ्च स्त्रियं प्राहुस्तिर्यग्योनिगतामपि' इति स्मरणादिति सुग्रीवस्य युक्तिस्तया लब्धस्वास्थ्या इति ।

पक्षे अभिरामः रणकुशलो जिष्णुरर्जुनः प्रभावि प्रभावत् तत् परमण्डलं भीष्मद्रोणादिबान्धवपूर्णमिति शेषः विलोक्य प्रियाणां स्निग्धानां भीष्मादीनाम् अपायोऽवश्यं मरणं तस्माद्यद्भयं तस्माद्धेतोश्चिन्तां गतोऽपि कश्मलं प्राप्तोऽपि हरेः कृष्णस्य योगेन गीतारूपेण तत्त्वोपदेशेन लब्धस्वास्थ्यः विगतमोहः सन् क्रमशः क्रमेण स्थैर्यं प्रपेदे प्रसन्नचेता बभूव ॥ ५६ ॥

कृत्वोपसत्तिं तरसा गुरूणां
नरेन्द्रसूनुः कलितज्यधन्वा।
बभूव भीमो भुवि शम्बरस्य
वधं विधित्सन्निव कामदेवः ॥५७॥

इति राघवपाण्डवीये महाकाव्ये सप्तमः सर्गः।

कृत्वोपसत्तिमिति। नरेन्द्रसूनूरामः पक्षे युधिष्ठिरोऽर्जुनो वा कलिता प्राप्ता ज्यामौर्वी येन तादृशं धनुर्यस्य तथाविधः सन् तरसा वेगेन गुरूणां धनुर्वेदाचार्याणां विश्वामित्रादीनां वशिष्ठदशरथादीनाञ्च पक्षे द्रोणभीष्मादीनाम् उपसत्तिम् उपासनां कृत्वा गुरून्नमस्कृत्येत्यर्थः शम्बरस्यासुरविशेषस्य वधं विधित्सन् कर्तुमिच्छन् कामदेवः कन्दर्प इव अथच शम्बरस्य मृगस्य वधं विधित्सन् मृगयायां वर्तमान इत्यर्थः कामदेवः एतत्काव्यप्रवर्तकनृपविशेष इव भुवि संग्रामभूम्यां भीमो भयङ्करो बभूव। "शम्बरं सलिले पुंसि मृगदैत्यविशेषयोः" इति मेदिनी। उपमालङ्कारः ॥ ५७ ॥

इति श्रीप्रेमचन्द्रतर्कवागीशभट्टाचार्यविरचितायां राघवपाण्डवीयटीकायां कपाटविपाटिकाख्यायां सप्तमः सर्गः।

---

## अष्टमः सर्गः ।

अथ रघु नृपसूनोरेकतस्त्यायमाने
वधिरितजगदण्डं चण्डकोदण्डघोषे ।
युगपदुभयसेनोज्जृम्भितोद्दामभेरी-
पटहमुरजनादध्मातगर्भं नभोऽभूत् ॥१॥

रणभुवि रणरेणौ तूर्यनादे च तूर्णं
स्थगयति जगदण्डं न्यक्कृतान्यप्रवृत्ति ।
अहह न निरधारि प्राणिनां चेतनाभिः
क्षितिमयमुत विश्वं शब्दतन्मात्रकं वा ॥२॥

अथेति। अथ गुरूपासनानन्तरं वधिरितं वधिरीकृतं जगदण्डं ब्रह्माण्डं यत्र तद्यथा तथा रघुनृपसूनोः रघुराजवंशोत्पन्नस्य रामस्य पक्षे रघु लघु शीघ्र-मित्यर्थः नृपसूनोर्युधिष्ठिरस्यार्जुनस्य वा चण्डः शत्रुभयदः कोदण्डस्य धनुषो घोषष्टङ्कारस्तस्मिन् एकत एकस्मिन् देशे स्त्यायमाने उपचीयमाने सति अनन्तरं नभोगगनं युगपदेकदैव उभयसेनयोरुज्जृम्भित ऊर्द्ध्वमुत्थित उद्दाम उद्भटो ये भेरीपटहमुरजानां वाद्यभेदानां नादस्तेन ध्मातः प्रतिध्वनितो गर्भोऽन्तरालं यस्य तादृशमभूत् रणोत्साहाय भेर्यादयोऽवाद्यन्तेत्यर्थः। मालिनीवृत्तम् ॥१॥

रणेति। रणभूवि युद्धभूम्यां रणस्य रेणौ रथगजतुरगादिभि रुत्थापिते रजसि तथा तूर्यानां रणवाद्यानां नादे ध्वनौ च जगदण्डं ब्रह्माण्डं न्यक्कृता निषिद्धा अन्येषां प्रवृत्तिर्यत्र तद्यथा तथा। जगदण्डविशेषणं वा। तूर्णं स्थगयति व्याप्नुवति सति अहह विस्मये। प्राणिनां चेतनाभिर्बुद्धिभिः उत किं विश्वं क्षितिमयं रेणुबाहुल्यात् पार्थिवं वा किम्वा तूर्यनादबाहुल्यात् शब्दतन्मात्रकं शब्दमात्रस्वरूपम् इति न निरधारि निर्द्धारितं शब्दएव तन्मात्रं

काष्ठाः क्वापि विलिल्यिरे कवलिताः केनापि भानोस्त्विषः
कुत्राप्यस्तमहर्जगाम कुहचिन्नष्टं नभोमण्डलम् ।
केनाज्ञायि विलोचनस्य विषयः कालक्षपा काप्यभूद्
ब्रह्माण्डोदरपूरणं रणमहीरेणौ तदा तन्वति ॥३॥
आरम्भे मदसलिलं रणद्विपानां
मात्यद्दिक्करिकरशीकरं ततश्च ।

अहङ्कारकार्यविशेषो यत्रेति वा । अहङ्कारात् पञ्चतन्मात्राणीति साङ्ख्याः तानि च रूपरसगन्धस्पर्शशब्दरूपाणि । रणभुवि योधानां महान् विमर्दो बभूवेति भावः । अत्र संशय एव पर्यवसानात् शुद्धसन्देहालङ्कारः स च चिति-मयत्वशब्दतन्मात्रकत्वयोर्भ्रान्त्या भ्रान्तिमन्मूल इत्यनयोरङ्गाङ्गित्वेनसङ्करः ॥२॥

काष्ठा इति । तदा तस्मिन् युद्धसमये रणमहीरेणौ रणभूम्युत्थितरजसि ब्रह्माण्डोदरस्य ब्रह्माण्डमध्यस्य पूरणं तन्वति कुर्वति सति काष्ठादिशः क्वापि पर्वतगुहादौ विलिल्यिरे विलयं गता इव तथा भानोः सूर्यस्य त्विषः कान्तयः केनापि भूतेन कवलिता भक्षिता इव तथा अहर्दिवसं कुत्रापि द्वीपान्तरे अस्तं जगामेव तथा नभोमण्डलं कुहचित् कुत्रचित् । किम् शब्दस्यसप्तम्यन्तस्य कुहेति निपातः । नष्टं पलायितमिव तथा विलोचनस्य विषयश्चक्षुर्गोचरतां प्राप्तोऽपि पदार्थः केनाज्ञायि ज्ञातः न केनापोत्यर्थः तथा कापि वक्तुमशक्या कालक्षपा कालरात्रिरिव अभूदुपस्थिता रेणुनैवद्याद्दिगादिविवेको नासी-दित्यर्थः एतेन रणसम्मर्दस्य महत्त्वं ध्वनितम् । अत्रदिगादिविलयादेः सम्भा-व्यमानत्वादिवशब्दप्रयोगाभावाच्च प्रतीयमानोत्प्रेक्षाः तासाञ्च परस्परमन-पेक्षतयावस्थानात् संसृष्टिः शार्दूलविक्रीडितं वृत्तम् ॥ ३ ॥

आरम्भ इति । रेणुः समरभूम्युत्थितं रजः आरम्भे उत्थानोपक्रमे रणद्विपानां युद्धहस्तिनां मदसलिलं पीत्वा स्वसंयोगेनशोषयित्वेत्यर्थः ततश्च वायुवशाद्दिक्षु विकीर्णः माद्यन्तो मत्ता ये दिक्करिण ऐरावतादयस्तेषां करशी-करं शुण्डनिःसृतजलकणं पीत्वा । "शीकरं सरले वातसृताम्बुकणयोः

भूरेणुर्जलधरगर्भवारि पीत्वा
स्वः-सिन्धोरपि निरपादपां प्रवाहम् ॥४॥
प्रचलितहरिचक्रच्छिन्नमूलो विसर्प-
न्नभसि कृतविरोधः प्रातिकूल्यान्नराणाम् ।
सपदि धरणिरेणुस्तिग्मभानुं न्यरौत्सी-
दपर इव महीयान् रंहसा सैंहिकेयः ॥५॥

पुमान्" इति मेदिनी । अनन्तरमूर्द्ध्वमुत्थितो जलधराणां मेघानां गर्भवारि मध्यस्थं जलं पीत्वा ततोऽप्यूर्द्ध्वमुत्थितः स्वः-सिन्धोर्मन्दाकिन्या अपि अपां जलानां प्रवाहं निरपात् निःशेषेणापिवत् अतिपङ्किलं चकारेत्यर्थः । अत्र लोकातीत-वस्तुसम्बन्धिवर्णनादुदात्तं, रेणोर्मदपानाद्यसम्बन्धेऽपि तत्कल्पनादतिशयोक्तिः, अतिपिपासुव्यवहारारोपाच्च समासोक्तिरिति बहूनामलङ्काराणामेकत्रा-वस्थानात् एकाश्रयानुप्रवेशः सङ्करः । प्रहर्षिणी वृत्तम् ॥ ४ ॥

प्रचलितेति । महीयान् अतिप्रभूतो धरणिरेणुः रणभूम्युत्थितं रजः रंहसा वेगेन अपरः सैंहिकेयो राहुरिव सपदि तत्क्षणात् तिग्मभानुं सूर्यं न्यरौ-त्सीत् आच्छादयामास अन्यत्र पूर्ववैरमनुस्मृत्य जग्रास किम्भूतः प्रचलितानां वेगेन धावतां सैन्यादीनां यद्धरिचक्रं वातचक्रं वात्येत्यर्थः । "हरिश्चन्द्रार्क-वाताश्वशुकभेकयमाहिषु" इति मेदिनी । तेन छिन्नं मूलं यस्य सः सैन्यवेग-वातेन सावशेषमुत्थापित इत्यर्थः अन्यत्र प्रचलितेन कम्पितेन हरेर्नारायणस्य चक्रेणसुदर्शनेन छिन्नमूलः निवृत्तगलः । तथा नभसि आकाशे विसर्पन् अर्द्धमुत्ति-ष्ठन् अन्यत्र ग्रहरूपेण राशिचक्रे भ्रमन् । तथा प्रातिकूल्यात् प्रतिकूलपवनेनो-ह्यमानत्वात् नराणां कृतविरोधः कृतचक्षुराद्युपरोधः अन्यत्र प्रातिकूल्यात् प्रतिकूलस्थानवर्तित्वात् तृतीयषष्ठादिभिन्नस्थानवर्तित्वादित्यर्थः नराणां कृत-विरोधः जनिताशुभः जनितवैरो वा । केतूपप्लवभौममन्दगतयः षष्ठादिसंस्था शुभा इत्यादि ज्योतिषम् । श्लेषानुप्राणितेयमुत्प्रेक्षा । मालिनी वृत्तम् ॥ ५ ॥

आसरोजभवसद्म सर्वतो-
लोकमुद्भ्रमति रेणुमण्डले ।
नूनमाहितभयं न्यमीमिल-
द्भास्करेन्दुनयने विराट् पुमान् ॥६॥

उद्गाढ़दुर्दिनविसंष्ठुलचित्तवृत्ति-
रारब्धगात्रमलनोवसनान्तसङ्गी ।
आमृष्टगण्डतिलकानि मुखान्यचुम्ब-
द्रागीव रेणुनिकरः सुरसून्दरीणाम् ॥७॥

आसरोजेति। रेणुमण्डले रणरजःपटले आसरोजभवसद्म ब्रह्मलोकपर्यन्तं सर्वतः समन्तात् लोकं विश्वम् उद्भ्रमति उच्चैराक्रामति सति नूनमुत्प्रेक्षायां विराट् पुमान् जगत्समष्टिरूपः परमपुरुषः आहितभयं प्राप्तभयं यथा तथा भास्करेन्दू सूर्याचन्द्रमसाविव नयने न्यमीमिलत् निमीलितवानिव अन्योऽपि रजःसंक्रान्तिभयान्नयने निमीलयति। अत्र लोकातीतवस्तुसम्पत्तिवर्णनादुदात्तेनोत्प्रेक्षाङ्गाङ्गितया सङ्कीर्यते। रथोद्धता वृत्तं, "रान्नराविह रथोद्धता लगौ" इति लक्षणात् ॥ ६ ॥

उद्गाढेति। रेणुनिकरः समररजःसङ्घः रागीव कामुकपुरुष इव सुरसुन्दरीणां देवीनाम् आमृष्टानि आच्छादितानि अन्यत्र चुम्बनसम्मर्दात् प्रोञ्छितानि गण्डतिलकानि यत्र तानि मुखानि अचुम्बत् चुम्बितवान् प्रकृते पस्पर्शेत्यर्थः किम्भूतः उद्गाढ़ं सातिशयं यद्दुर्दिनं मेघच्छन्नदिनं तेनेव अन्यत्र तस्मिन् विसंष्ठुला अधीरा अन्यत्र सुरतलोलुपेत्यर्थः चित्तवृत्तिर्येन अन्यत्र यस्य सः। दुर्दिने हि कामिनां मनश्चञ्चलं भवति। अतएव भगवान् कालिदासः "मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः कण्ठाश्लेषप्रणयिनि जने किं पुनर्दूरसंस्थे" इति। तथा आरब्धं गात्राणां मलनं स्वसम्बन्धान्मलिनीभावः अन्यत्र सम्मर्दनं येन सः तथा वसनान्ते वस्त्राञ्चले सङ्गः सम्बन्धोऽस्यास्तीति सः

अकालजलदावलीगलितरक्तधाराहृता
करीन्द्रकरटच्चरन्मदमहोर्मिरुद्धासिता ।
रणव्रणितसैनिकक्षतजसिक्तमूला च सा
रजोजवनिका शनैरपससार सेनामुखात् ॥८॥

आभूमण्डलमापयोधिवलयादाचक्रवालाचला-
दातारापथमापुरन्दरपदादापद्मसद्मालयात् ।
आब्रह्माण्डकटाहकर्परपुटं तूर्णं जुघूर्णे भयाद्-
भ्राम्यद्दिक्करिकीर्णकर्णवलयं भेरीरवैर्भैरवैः ॥९॥

कामिनोऽपि कामिनीनां वसनान्तमाकर्षन्ति । अत्र श्लेषानुप्राणितेयमुपमा पूर्ववदुदात्तेन संकीर्णा । वसन्ततिलका वृत्तम् ॥ ७ ॥

अकालेति । सा पूर्वोक्तस्वरूपा रजो रणधूलिरेव जवनिका आच्छादकत्वात् तिरस्करिणी । "प्रतिसीरा जवनिका स्यात्तिरस्करिणी च सा" इत्यमरः । सा सेनानां मुखात् सम्मुखस्थानात् शनैरपससार नष्टा किम्भूता यतः अकाले उदिता जलदावली मेघपङ्क्तिः अकालजलदावली तस्या गलिता राक्षसानां पक्षे कौरवाणाममङ्गलसूचनाय निःसृता या रक्तधारा तया आहृता सिक्तेत्यर्थः तथा करीन्द्राणां करटेभ्यो गण्डेभ्यः च्चरन्ती या मदस्य दानजलस्य महोर्मिस्तया रुद्धा । "करटो गजगण्डे स्यात् कुसुम्भे निन्द्यजीवने" इति मेदिनी । अतएव असिता मदजलसम्पर्कात् कृष्णा तथा रणे व्रणिता जातव्रणा ये सैनिकास्तेषां क्षतजेन रुधिरेण सिक्तं मूलं रणाङ्गनरूपोत्थानस्थानं यस्याः सा च । अत्र रजोजवनिकेति निरङ्गरूपकम्, अपसारणं प्रति च विशेषणत्रयस्य हेतुत्वात् काव्यलिङ्गम् । पृथ्वीवृत्तं "जसौ जसजला वसुग्रहयतिश्च पृथ्वी गुरुः" इति लक्षणात् ॥ ८ ॥

आभूमण्डलेति । भैरवैर्भयङ्करैर्भेरीरवैः रणभेरीशब्दैः भयात् भ्राम्यन्तो घूर्णन्तो ये दिक्करिणस्तैः कीर्णं चालितं कर्णवलयं कर्णमण्डलं यत्र तद्यथा तथा तूर्णं शीघ्रम् आभूमण्डलं प्रथमं भूमण्डलमभिव्याप्य जुघूर्णे भ्रान्तम् । भावे

दिव्यास्त्रग्रामशिक्षानिकषमरिकुलारब्धवैराग्निहोमं
स्वर्योषाकर्षदिव्यौषधममरपुरीवर्त्मसोपानखण्डम्।
कीर्तिक्षीराब्धिमूलस्थलमखिलजगच्छल्यनिर्हारयन्त्रं
प्राणद्यूतं व्यदीव्यन्नृपकुलमहसां मण्डनं शौर्यशौण्डाः

॥१०॥

लिट्। अभिव्याप्तावाङ् अपपरिवहिरञ्चवः पञ्चम्यावेति पाक्षिकोऽव्ययीभावः एवमग्रेऽपि। ततश्च आपयोधिवलयं समुद्रवलयमभिव्याप्य जुघूर्णे ततश्च आचक्रवालाचलात् लोकालोकपर्वतसीमानमभिव्याप्य। "चक्रवालोऽद्रिभेदे स्याच्चक्रवालन्तुमण्डलम्" इति विश्वः। एता घूर्णनस्याधःसीमानः। ऊर्ध्वसीमश्च दर्शयति आतारापथं नक्षत्रवीथीमभिव्याप्य जुघूर्णे ततश्च आपुरन्दरपदात् इन्द्रलोकपर्यन्तमभिव्याप्य ततश्च आपद्मसद्मालयात् पद्मं सद्म यस्य स पद्मसद्मा ब्रह्मा तल्लोकपर्यन्तमभिव्याप्य ततश्च आब्रह्माण्डकटाहकर्परपुटं ब्रह्माण्डमेव कटाहो लौहपात्रभेदस्तस्य कर्परं कपालं तदेव पुटं सम्पुटं तत्पर्यन्तमभिव्याप्य। अत्र यथा यथा भेरीरवस्य दीर्घत्वं तथा तथा भूमण्डलादिक्रमेणाधोलोकव्याप्तिः तारापथादिक्रमेण चोर्द्ध्वलोकव्याप्तिस्तेन च पूर्वपूर्वव्याप्यपरित्यागेनैव परपरव्याप्तेर्न पर्यायालङ्कारः किन्तु एकस्यानेकगोचरमिति विशेषभेद एव सच पूर्ववदुदात्तेन सङ्कीर्णः वृत्त्यनुप्रासश्च। शार्दूलविक्रीडितं वृत्तम्॥ ८॥

दिव्यास्त्रेति। शौर्येण वीरत्वेन शौण्डा विख्याता मत्ता वा शौर्यशौण्डा योधाः। "शौण्डो विख्यातमत्तयोः" इति हेमचन्द्रः। प्राणद्यूतं प्राणपणकद्यूतं व्यदीव्यन् प्राणान् पणीकृत्य युद्धरूपद्यूतेन चिक्रीडुरित्यर्थः। दिवः करणं युगपत् कर्म चेति करणस्य कर्मसंज्ञा। किम्भूतं दिव्यानामस्त्रग्रामाणामस्त्रसङ्घानां या शिक्षा तस्या निकषं कषपाषाणं परीक्षास्थानमित्यर्थः। तथा अरिकुलैरारब्धो वैरमेवाग्निस्तत्र होमः स्वपरप्राणाहुतियंत्र तत् तथा स्वर्योषाणां स्वर्वेश्यानामाकर्षे आनयने दिव्यौषधं सम्मुखसंग्राममरणेन स्वर्गस्त्रीलाभादिति भावः। अन्यदपि सिद्धौषधं धार्यमाणम् वृष्टं

पुरो बलानां विजयध्वजश्रियं
समादधानेन भृशं हनूमता ।
प्रवेशिता श्रोत्रपथेन विद्विषां
मनस्सु भीतिर्नदतातिभैरवम् ॥११॥

बलोद्धता नीलगजाभिरामा
तीव्राच्छभल्ला शरभारभीमा ।
महोदयारम्भपरा गभीर-
तारप्रणादा कुमुदानुबन्धा ॥१२॥

श्रियमाकर्षति। तथा अमरपुर्याः स्वर्गस्य वर्त्मनि सोपानखण्डम् अधिरोहश्रीरूपं स्वर्गप्राप्तेः कारणमित्यर्थः तथा कीर्तिरेव स्वच्छत्वात् चीराब्धिस्तस्य मूलस्थलं निदानं तथा अखिलजगतां शल्यस्य शल्यवत् पीड़ाकारकस्य रावणस्य पक्षे दुर्योधनस्य निर्हारे निवारणे यन्त्रं देवाद्यधिष्ठानं पात्रभेदो वा। "यन्त्रं देवाद्यधिष्ठाने पात्रभेदे नियन्त्रणे" इति हेमचन्द्रः। तथा नृपकुलस्य महसां तेजसां मण्डनम् अलङ्करणम्। अत्र बहूनां निकषादीनां केवलानां रूपणान्मालानिरङ्गरूपकम्। स्रग्धरा वृत्तम् ॥ १० ॥

पुर इति। विजये शत्रुजये ध्वजस्य श्रियं शोभां समादधानेन सम्यग्धारयता विजयस्य ध्वजेनेवेत्यर्थः पक्षे विजयस्यार्जुनस्य ध्वजस्य रथकेतोः श्रियं समादधानेन जनयता अर्जुनरथध्वजे हनूमतोऽवस्थानादिति भावः। हनूमता बलानां शत्रुसैन्यानां पुरोऽग्रे भृशम् अतिभैरवम् अतिभयङ्करञ्च यथा तथा नदता शब्दं कुर्वता सता श्रोत्रपथेन कर्णमार्गेण विद्विषां मनःसु भीतिः प्रवेशिता हनूमतो भैरवं नादं श्रुत्वा रिपवो भयं प्रापुरित्यर्थः ॥ ११ ॥

बलोद्धतेति। महीपते रामस्य पक्षे युधिष्ठिरस्य सेना ननाद सिंहनादं चकार इत्युत्तरश्लोके कर्तृक्रिये ज्ञेये। किम्भूता बलेन तेजसा उद्धता उद्भटा तथा नीलगजाभ्यां वानरविशेषाभ्याम् अभिरामा मनोज्ञा पक्षे नीलवर्णैर्गजैरभिरामा तथा तीव्रा उद्रिक्ता अच्छभल्ला भालूका जाम्बवदादयो

उदीर्णतालार्जुनकृष्णसार
प्रौढायुधा मन्युबलोर्जिता च ।
महीपतेः संलसदुत्तमौजाः
सेना शतानीकमुखा ननाद ॥१३॥ युग्मकम् ॥

यत्र सा पक्षे तीव्राणि तीक्ष्णानि अच्छानि निर्मलीकृतानि भल्लानि अस्त्रविशेषा यत्र सा तथा शरभस्य वानरविशेषस्य आरः सञ्चरणम् । ऋगताविस्यस्य रूपम् । तेन भीमा पक्षे शरभारेण वाणसमूहेन भीमा । तथा महोदयाय जयलाभाय आरम्भपरा उद्यता । तथा गभीरस्तारस्य वानरविशेषस्य प्रणादो ध्वनि र्यत्र सा । पक्षे गभीरस्तार उच्चः प्रणादो यस्याः सा । एवञ्च न विधेयेन पौनरुक्त्यं विशेषणेन भिन्नत्वप्रतिपादनात् । "तारो वानरभिन्मुक्ताविशुद्धयोः शुद्धमौक्तिके । त्रिलिङ्गोऽत्युच्चशब्दे च" इति मेदिनी । तथा कुमुदस्य वानरभेदस्य पक्षे राजभेदस्य हस्तिनो वा अनुबन्धः सम्बन्धो यत्र सा । "कुमुदः कपौ दिग्नागनागयोर्दैत्यविशेषे च सितोत्पले" इति हेमचन्द्रः ॥ १२ ॥

उदीर्णेति । पुनः किम्भूता उदीर्णा उद्धृता ये तालास्तालवृक्षा अर्जुनाः ककुभवृक्षाः कृष्णसाराः शिंशपावृक्षाश्च त एव प्रौढानि आयुधान्यस्त्राणि यस्याः सा । "कृष्णसारं शिंशपायां मृगभेदे स्नुहीतरौ" इति हेमचन्द्रः । तथा मन्युना क्रोधेन जनितं यद्बलं तेजस्तेनोर्जिता उद्भटा च तथा संलसत् उत्तमम् ओजो विक्रमो यस्याः सा तथा शतानि शतसंख्यकानि अनीकानि सैन्यानि मुखे व्यूहसम्मुखे प्रतिपक्षसम्मुखे वा यस्याः सा । अनीकसेनयोर्व्यष्टिसमष्टिरूपत्वान्नपौनरुक्त्यम् ।

पक्षे उदीर्णताला रणोत्साहेन उत्थापितहस्तताला तथा अर्जुनकृष्णयोः सारेण बलेन प्रौढा तथा युधामन्युनामा अर्जुनस्य पार्श्वरक्षकः पाञ्चाल्यस्तस्य बलेन ऊर्जिता च तथा संलसन् उत्तमौजा स्तन्नामा पाञ्चालो यत्र सा अयमपि अर्जुनस्य पार्श्वरक्षकः तथा शतानीको नकुलस्य पुत्रः सम्मुखे यस्याः सा । "नाकुलिस्तु शतानीक" इति भारतम् ॥१३॥

अकम्पनोद्दीपितमेघनादा
प्रहस्तनाथा दृढचित्रकाया।
आविर्भवद्वैरनरान्तकोग्रा
सामर्षवेगोज्ज्वललोहिताक्षा ॥१४॥
ससिन्धुराजातरसोग्रभीष्मा
सहेतिशल्या कृतवर्मनिष्ठा।
समिन्महाकर्मसुदक्षिणा च
रुरोध शत्रून् परवाहिनी सा ॥१५॥ युग्मकम्।

अकम्पेति। सा परवाहिणी रावणसेना पक्षे दुर्योधनसेना शत्रून् रामादीन् पक्षे युधिष्ठिरादीन् रुरोधेत्युत्तरश्लोकेनान्वयः किम्भूता अकम्पनो राक्षसभेदस्तेनोद्दीपितो युद्धाय प्रोत्साहितो मेघनाद इन्द्रजिद्यत्र सा तथा प्रहस्तो राक्षसविशेषः स नाथः सेनापतिर्यत्र सा तथा दृढो युद्धे स्थिरश्चित्रकायो राक्षसभेदः रावणपुत्रोऽतिकायो वा यत्र सा तथा आविर्भवद्वैरं विरोधो यस्य तादृशो यो नरान्तको रावणपुत्रविशेषस्तेन उग्रा भयदा तथा अमर्षेण कोपेन जनितो यो वेगस्तेन सहितः अतएव उज्ज्वलः क्रोधाध्मातो लोहिताक्षनामराक्षसभेदो यत्र सा।

पक्षे अकम्पनैर्भयकम्परहितैर्जनैरुद्दीपितः प्रकाशितो मेघस्येव नादो यत्र सा अकम्पना निर्भयेति वा च्छेदः। तथा प्रहस्ताः प्रशस्तबाहुशालिनो नाथाः सेनापतयो यत्र सा तथा दृढः प्रहारक्षमश्चित्रो मनोज्ञः कायो देहो यस्याः सा तथा आविर्भवद्वैराणां नराणाम् अन्तो नाशो यत्र सा अतएव उग्रा भयानका अथवा आविर्भवद्वैरा ये नरान्तका नराशना अलम्बुषप्रभृतयो राक्षसास्तैरुग्रा तथा सामर्षवेगा अमर्षेण सत्वरा तथा उज्ज्वले क्रोधोद्दीप्ते लोहिते च अक्षिणी यस्याः सा ॥ १४ ॥

सेति। पुनः किम्भूता ससिन्धुरा सिन्धुरैर्हस्तिभिः सहिता। "हस्ती मत्तामृगः पीलुः सिन्धुरो दीर्घमारुत" इति त्रिकाण्डशेषः। तथा जातरसा

व्यूहद्वये वासररात्रिकल्पे
परस्परं सङ्घटनामुपेते।
चकाशिरे वीरशरीरमुक्ताः
सन्ध्यामयूखा इव रक्तधाराः ॥१६॥
मेदोवसापिच्छिलकच्छलग्नै-
राचान्तवीच्यः शकुनैः पिशाचैः।

जातयुद्धानुरागा तथा उग्रा प्रचण्डा भीमा भयदा च उग्रभीमा। विशेषण-समासः। तथा सहेतीनि सज्वालानि अतिशाणितानीत्यर्थः शस्त्राणि तीमराख्ञाणि यस्याः सा। "हेतिर्ज्वालास्त्रसूर्यांशुषु" इति हेमचन्द्रः। तथा कृता वर्मणः सन्नाहस्य निष्ठा समाप्तिर्यया सा आमुक्तकवचेत्यर्थः। तथा समिति युद्धे यानि महाकर्माणि महाव्यापारास्तेषु दक्षिणा निपुणा च।

पक्षे ससिन्धुराजा सिन्धुराजो जयद्रथस्तत्सहिता तथा तरसा बलेन उग्रो भीमो गाङ्गेयो यत्र सा तरसा करोधेति वा तथा सहेतिः सायुधः शल्यो मद्रराजो यत्र सा तथा कृतवर्मणि हार्दिक्ये निष्ठा यस्याः सा तथा समिति महत् कर्म यस्य तादृशः सुदक्षिणो नृपविशेषो यत्र सा च ॥ १५ ॥

व्यूहेति। वासररात्रिकल्पे दिनरजनीसदृशे व्यूहद्वये विन्यस्तसैन्यद्वये "व्यूहस्तु बलविन्यासः" इत्यमरः। परस्परं सङ्घटनां संयोगम् उपेते प्राप्ते सति वीराणां शरीरेभ्यो मुक्ताः क्षरिता रक्तधारा सन्ध्यामयूखा इव सन्ध्यासमयोत्पन्नलोहितसूर्यकिरणा इव चकाशिरे शुशुभिरे। यथा दिवसरात्र्योः संयोगे लोहिताः सन्ध्यामयूखाः प्रकाशन्ते तथा सैन्ययोः संयोगे वीरशरीरक्षरिता रक्तधारा इत्युपमा सा च प्रथमपादे आर्थी चतुर्थपादे श्रौती तदनयोः सङ्करः। एतदादि श्लोकषट्कं पाश्चात्यपुस्तकेषु न दृश्यते किन्तु सङ्गतार्थमिति व्याख्यातम् ॥१६॥

मेद इति। मेदो मांसप्रभवो धातुविशेषः वसा मज्जा। वृहतौ कराट-कारिकेतिवत् मेदस्तु वपा वसेत्यमरे मेदोवसयोरेकपर्यायता। ताभ्यां

दूरं वहन्त्यो रुधिराम्बुनद्यः
सिन्दूररेखा इव रेजुरुर्व्याः ॥१७॥
आपीय पूरं रुधिरापगानां
विपाकरज्यन्मदिरारुणानाम् ।
विलङ्घ्य वेलां चितिकम्पनुन्नः
पयोनिधिः चीव इवोच्चचाल ॥१८॥
चरणखनितपृथ्वीमण्डलोद्भूतधूली-
पिहितदशदिगन्ताः संपतन्तः समन्तात् ।

पिच्छिलो यः कच्छः कूलाधःप्रदेशस्तत्र लग्नैः स्थितैः शकुनैः पक्षिभिः पिशाचैश्च आचान्ता पीता वीचो ऊर्मिर्यासां ताः तथा दूरं वहन्त्यो गच्छन्तः रुधिराण्येव अम्बूनि तेषां नद्यः उर्व्याः पृथिव्याः सिन्दूररेखाइव रेजुः शुशुभिरे । अन्यापि स्त्री सिन्दूररेखां धारयति । अत्र वाच्येन रुधिरनदीनां सिन्दूररेखासाम्येन उर्व्याः स्त्रिया ईवेति स्त्रीसाम्यस्य प्रतीतेरेकदेशविवर्तिरूपकम्, औपम्यगर्भसमासोक्तिरिति केचित् ॥ १७ ॥

आपीयेति । चितिकम्पेन रणविमर्दकृतेन अमङ्गलरूपेण वा भूमिकम्पेन नुन्नश्चालितः पयोनिधिः समुद्रः विपाकेन पाकस्याधिक्येन वैलक्षण्येन वा रज्यन्त्यो रक्तीभवन्त्यो या मदिरास्तद्वदरुणानां लोहितवर्णानां रुधिरापगानां रक्तनदीनां पूरम् ओघम् आपीय सम्यक् पीत्वा चीवो मत्त इव वेलां तीरम् अथच मर्यादां विलङ्घ्य उच्चचाल अन्योऽपि मदिरां पीत्वा मत्तो भूत्वा मर्यादामुल्लङ्घयति । अत्र मदिरारुणानामिति लुप्तोपमया चीव इवेत्युत्प्रेक्षाङ्गाङ्गितया सङ्कीर्णा तत्संस्कृतेन च रुधिरनदीनां समुद्रपर्यन्तगमनरूपेण वस्तुना प्रभूतजनक्षयरूपं वस्तु व्यज्यते ॥ १८ ॥

चरणेति । चरणैः पादविक्षेपैः अन्यत्र सवेगवहनैः खनितं क्षुण्णं यत् पृथ्वीमण्डलं भूतलं तस्मादुद्भूता या धूल्यो रजांसि ताभिः पिहिता आच्छादिता दशदिशामन्ता यैस्ते तथा समन्तात् सर्वतः संपतन्तः युद्धार्थं धावन्तः तथा

क्षयमरुत इवोच्चैर्भग्नतुङ्गाद्रिशृङ्गा
युधि न हरिसमूहाः सेहिरे वैरिवर्गैः ॥१९॥
रक्तासवानन्दितडाकिनीकः
प्रवृत्तनीरन्ध्रकबन्धनृत्यः।
रणातिरेकः क्षणदाचराणां
महोत्सवो मुक्तभियां बभुव ॥२०॥
प्रसर्पिरक्षो बलनायका मुहुः
कृतप्रहाराः कुरवस्थिरोद्यमाः।

उच्चैर्महान्तः तथा भग्नानि उत्पाटितानि तुङ्गान्युच्चानि अद्रिशृङ्गाणि पर्वतशिखराणि यैस्तादृशा हरिसमूहा वानरसंघाः क्षयमरुत इव प्रलयवाता इव युधि युद्धे वैरिवर्गैः राक्षसवृन्दैर्न सेहिरे न सोढुं शक्ताः।

पक्षे भग्नतुङ्गाद्रिशृङ्गाः क्षयमरुत इव हरिसमूहाः। समूहशब्दः प्रभृत्यर्थः। कृष्णप्रभृतयः अश्वसमूहा वा वैरिवर्गैः कौरवसैन्यसंघैर्न सेहिरे। शेषं समानम्। श्रौतीयमुपमा। मालिनी वृत्तम् ॥ १९ ॥

रक्तेति। रक्तमेव आसवो मद्यं मद्यभेदो वा, शीधुरिक्षुरसैः पक्वैरपक्वैरासवो भवेदिति माधवः, तेनानन्दिता डाकिन्यः कालीगणभेदा यत्र सः। तथा प्रवृत्तं नीरन्ध्राणामविरलानां कबन्धानां क्रियायुक्तनिर्मस्तककलेवराणां नृत्यं यत्र सः। "कबन्धोऽस्त्री क्रियायुक्तमपमूर्द्धकलेवरम्" इत्यमरः। कबन्धोत्थानञ्च युद्धे तत्तत्संख्यकगजादिनिपातने भवति। यदाहुः प्राचीनाः। "नागानामयुतं तुरङ्गनियुतं सार्द्धं रथानां शतं पत्तीनां दशकोटयो निपतिता एकः कबन्धस्तदा" इति। तथा मुक्तभियां निर्भयानां क्षणदाचराणां योद्धॄणाम् आगन्तुकानाञ्च राक्षसानां महान् उत्सवो यत्र ईदृशो रणातिरेको महान् रणो बभूव ॥ २० ॥

प्रसर्पीति। मुहुः कृतः प्रहारो यैस्ते तथा कुरवे कुत्सितरवकरणे स्थिर उद्यमो येषां ते प्रसर्पिणः इतस्ततो धावन्तो रक्षोबलनायका राक्षससेना-

लसद्यशःपाण्डुभुवामलोडयन्
समुच्चलत्कृष्णमुखं द्विषां बलम् ॥२१॥
द्रुतमधरितवज्रमुष्टिपातं
स्फुरदशनिप्रभहेतिदुर्निरीक्ष्यम् ।
रणभुवि विदधे महाभुजाभ्या-
मरिकुलमर्दनमश्विनन्दनाभ्याम् ॥२२॥

पतयः लसद्यशसा शुभ्रकीर्त्या पाण्डुः शुक्लाभूर्य्येभ्यस्ते तथा तेषामपि द्विषां शत्रूणां रामादीनां बलं सैन्यम् अलोडयन् चालयामासुः किम्भूतं समुच्चलत् भयेन इतस्ततः पलायमानं तथा कृष्णानि भयेन मलिनानि वानरबहुलत्वात् स्वभावतः श्यामानि वा मुखानि यस्य तत् ।

पक्षे मुहुः कृतप्रहारास्तथा स्थिरोद्यमा निश्चलयुद्धोद्योगाः कुरवः कुरुकुल-सम्बन्धिनः । कादियुक्ते शपसे लुग्वेति विसर्ज्जनीयलोपः । बलनायकाः सेनापतयो भीष्मादयः द्विषां शत्रुभूतानां पाण्डुभुवां पाण्डवानां बलम् अलोडयन् किम्भूतं प्रसर्पीणि धावन्ति रक्षांसि घटोत्कचादीनि यत्र तत् तथा लसद्यशः अन्यत्र विख्यातकीर्ति । तथा समुच्चलत् भयचपलं तथा कृष्णमुखं वासुदेवप्रधानम् । प्रसर्पिरक्षोबलं नयन्ति भयाद्देशान्तरं प्रापयन्तीति प्रसर्पिरक्षोबलनायकाः कुरवो दुर्योधनादय इति वा ॥ २१ ॥

द्रुतमिति । महाभुजाभ्याम् अश्विनन्दनाभ्यां मैन्दद्विविदवानराभ्याम् । "मैन्दश्च द्विविदश्चैव धीरौ तावश्विनोः सुतौ" इति रामायणात् । रणभुवि अरिकुलस्य मर्दनं पीडनं विदधे चक्रे किम्भूतं द्रुतम् अधरितस्तुच्छीकृतो वज्रमुष्टे राक्षसविशेषस्य पात आक्रमणं यत्र तत् तथा स्फुरन्ती या अशनि-प्रभस्य राक्षसविशेषस्य विद्युज्जिह्वस्येत्यर्थः हेतिरायुधं तस्या दुर्निरीक्ष्यं द्रष्टुमशक्यम् अप्रतिकार्यमित्यर्थः ।

पक्षे अश्विनन्दनाभ्यां नकुलसहदेवाभ्याम् अरिकुलमर्दनं विदधे किम्भूतम् अधरितो वज्रस्येव मुष्टेः पातो यत्र तत् तथा स्फुरन्ती अशनिप्रभा विद्युत्तुल्य-दीप्तिर्या हेतिस्तया दुर्निरीक्ष्यम् अन्यैर्द्रष्टुमशक्यम् । शेषं समानम् ॥ २२ ॥

रथान् रथैर्वाजिभिरर्वतो घ्न-
न्निभानिभैः पत्तिभिरेव पत्तीन्।
समीरसूनुः समरे परेषां
बलानि वीरः प्रसभं बभञ्ज ॥२३॥

व्यूहप्रतिव्यूहविधानदक्षः
सेनापतिः पावकलब्धजन्मा।
नरेन्द्रसैन्यानि जुगोप नीलः
शिखण्डियूथानि यथाम्बुवाहः ॥२४॥

व्याधूतनानायुधयोधभीमां
मदान्धमातङ्गघटागरिष्ठाम्।

रथानिति। वीरः शूरः समीरसूनुर्हनूमान् पक्षे भीमः समरे परेषाम् अन्येषां रिपूणां बलानि सैन्यानि प्रसभं हठेन बभञ्ज पराजितवान् किं कुर्वन् रथैः कृत्वा रथान् घ्नन् नाशयन् तथा वाजिभिरश्वैः अर्वतोऽश्वान् घ्नन्। "वाजि-वाहार्वगन्धर्वहयसैन्धवसप्तय" इत्यमरः। तथा इभैर्हस्तिभिः इभान् घ्नन् तथा पत्तिभिः पदातिभिरेव पत्तीन् घ्नन् ॥ २३ ॥

व्यूहेति। व्यूहः सैन्यरचनाविशेषः सूचीमुखादिः प्रतिव्यूहो विपरीत-सैन्यरचनाविशेषः तयोर्विधाने दक्षः कुशलः तथा पावकलब्धजन्मा अग्निपुत्रः नीलो नीलनामा सेनापतिः नरेन्द्रस्य रामस्य सैन्यानि जुगोप ररक्ष। उप-मिनोति अम्बुवाहो मेघः शिखण्डियूथानि मयूरकुलानि यथा गोपायति पुष्णाति तथेत्यर्थः।

पक्षे पावकलब्धजन्मा यज्ञाग्निकुण्डोत्थितो धृष्टद्युम्नः नीलः श्यामोऽम्बुवाहो यथा शिखण्डियूथानि तथा नरेन्द्रस्य युधिष्ठिरस्य सैन्यानि जुगोप। द्रोण-विनाशाय द्रुपदेनाभ्यर्थिताभ्यां याजोपयाजाभ्यां वितायमाने यज्ञे द्रौपदी धृष्टद्युम्नश्च यज्ञकुण्डादुत्थिताविति भारती वार्ता। शेषं समानम्। उपमेयं श्रौती ॥ २४ ॥

पलाशिभिर्द्राग्विशिखैर्बबाधे
सहस्रगोःसूनुररातिसेनाम् ॥२५॥
विभीषणो दर्शितभर्तृभक्ति-
र्युद्धे हिडिम्बाकुलभूः प्रसर्पन्।
क्षपाचरेन्द्रः क्षपयाम्बभूवा-
नीकान्यनेकानि निशाचराणाम् ॥२६॥

व्याधूतेति। सहस्रगोः सूर्यस्य सूनुः पुत्रः सुग्रीवः द्राग्झटिति विशिखैः शिखा अग्रं प्रहारायोग्यत्वात् तद्रहितैः पलाशिभिर्वृक्षैः करणैः। "पलाशि-द्रुद्रुमागमा" इत्यमरः। अरातेरावणस्य सेनां बबाधे पीडयामास किम्भूतां व्याधूतानि कम्पितानि नानायुधानि यैस्तादृशा ये योधा भटास्तैर्भीमां भयदां तथा मदेनान्धा मत्ता मातङ्गघटा हस्तिवृन्दं तया गरिष्ठाम् अतिगुर्वीं दुष्प्रवेशामित्यर्थः।

पक्षे सहस्रगोः सहस्रलोचनस्येन्द्रस्य सूनुरर्जुनः पलाशिभिः पलं मांसं तद्भक्षकैः मांसभेदकैरित्यर्थः विशिखैर्बाणैः क्षत्वा अरातेर्दुर्योधनस्य सेनां बबाधे। शेषं तुल्यम् ॥ २५ ॥

विभीषण इति। दर्शिता भर्तरि रामे भक्तिर्येन सः तथा युद्धे प्रसर्पन् धावन् तथा ह्रीति निश्चये पादपूरणे वा डिम्बेन भयकृतध्वनिना विप्लवेन वा आकुला भूर्यस्मात् सः। "डिम्बो भयध्वनावण्डे फुस्फुस्प्लीहविप्लवे" इति मेदिनी। तादृशः क्षपाचरेन्द्रो राक्षसश्रेष्ठो विभीषणः निशाचराणां राक्षसानाम् अनेकानि बहुसंख्यकानि अनीकानि सैन्यानि क्षपयाम्बभूव नाशयामास।

पक्षे विभीषणो भयङ्करः हिडिम्बाकुलभूर्हिडिम्बातनयो घटोत्कचः दर्शिता भर्तरि युधिष्ठिरे भक्तिर्येन तादृशः सन् निशाचराणां दुर्योधनसम्बन्धिराक्षस-योधानां यद्वा निशायां चरन्ति युद्धार्थं धावन्तीति निशाचरा रात्रियोद्धार-स्तेषाम् अनीकानि क्षपयाम्बभूव रात्रियुद्धे घटोत्कचस्य वीर्याधिक्यं भारते वर्णितं। शेषं समानम् ॥ २६ ॥

परिस्फुरत्कार्मुकमण्डलोऽथ
नृपात्मजो वानरवीरलक्ष्मा।
ततापं विद्वेषिबलं पृषत्कै-
र्लोकं मयूखैरिव चण्डभानुः ॥२७॥

लूनस्यन्दनकेतुपत्तितुरगच्छत्राक्षधूर्बन्धुराः
सैन्यस्त्रीकुचकुम्भमौक्तिकबहिष्कारस्फुरत्साहसाः।
वीरोरःस्थलदारणारुणमुखाः सैन्येषु देवद्विषां
प्राणोन्मोषणनिर्विचारचतुराश्चेरुस्तदीयाः शराः ॥२८॥

परिस्फुरदिति। अथानन्तरं परिस्फुरत् शोभमानं कार्मुकमण्डलम् आकर्षणेन मण्डलीकृतधनुर्यस्य सः तथा वानरवीराः सुग्रीवादयः लक्ष्माणि जयचिह्नानि सैन्यप्रधानानि वा यस्य सः। "लक्ष्म चिह्ने प्रधाने च" इति मेदिनी। तादृशो नृपात्मजो रामः मयूखैः किरणैः चण्डभानुः सूर्यो लोकमिव पृषत्कैर्बाणैर्विद्वेषिबलं शत्रुसैन्यं ततापं तापयामास।

पक्षे वानरवीरो हनूमान् लक्ष्म ध्वजचिह्नं यस्य तादृशो नृपात्मजोऽर्जुनः। शेषं तुल्यम्। उपमालङ्कारः॥ २७॥

लूनेति। तदीया रामसम्बन्धिनः पक्षेऽर्जुनसम्बन्धिनः शरा बाणाः देवान् द्विषन्तीति देवद्विषो राक्षसाः पक्षेऽसुरावतारा दुर्योधनादयस्तेषां सैन्येषु चेरुः किम्भूताः लूनैश्छिन्नैः स्यन्दनै रथैः केतुभिर्ध्वजैः पत्तिभिः पादातैः तुरगैरश्वैः छत्रैः अक्षैरथावयवभेदैः धूर्भिर्यानाग्रभागैश्च कृत्वा बन्धुरा रम्याः। "बन्धुरो-रम्यनम्रयोः" इति हेमचन्द्रः। तथा सैन्यस्त्रीणां रणहतभटपत्नीनां कुचकुम्भेभ्यो यो मौक्तिकानां मुक्तादाम्नां बहिष्कारः अपसारणं तत्र स्फुरत् साहसं बलात्कारकर्म येषां ते। "बलात्कारकृते कृत्ये साहसं दमनेऽपि च" इति विश्वः। तथा वीराणामुरःस्थलदारणेन वक्षोविदारणेन अरुणानि तद्रक्तसम्पर्कान्लोहितानि मुखान्यग्राणि येषां ते तथा प्राणोन्मोषणे रिपूणां प्राणापहरणे यन्निर्विचारं विचाराभावः विचारमकृत्वैव प्राणापहरणमित्यर्थः तत्र चतुराः

निपातयन्तो ध्वजकाननानि
विदारितोत्तुङ्गकरीन्द्रशैलाः ।
महेन्द्रमुक्ताशनिसन्निकाशा
न सेहिरे तस्य शरा विपक्षैः ॥२९॥
चरंस्तथाजौ रघुराजसूनु-
र्विपाटितारातिचमूर्विपाठैः ।
गाण्डीवमुच्चायि धनुर्विधुन्वन्
साक्षान्नरो देव इवावभासे ॥३०॥

कुशलाः । अत्रापातती निन्दाबोधकेन विशेषणचतुष्टयेन स्तुतेर्व्यङ्गत्वाद्व्याजस्तुतिरलङ्कारः ॥२८॥

निपातयन्त इति । महेन्द्रेण मुक्ता क्षिप्ता या अशनिर्वज्रं तस्याः सन्निकाशः सादृश्यं येषु तादृशास्तस्य रामस्य पक्षेऽर्जुनस्य शराः विपक्षै राक्षसैः पक्षे दुर्योधनादिभिर्न सेहिरे सोढुं शक्ताः किम्भूताः ध्वजाः पताकाः अविरलत्वात् काननानीव ध्वजकाननानि तानि निपातयन्तः तथा विदारिता उत्तुङ्गा अत्युच्चाः करीन्द्राः शैला इव करीन्द्रशैला यैस्ते । अशनिरपि काननानि निपातयति शैलांश्च विदारयति । उपमा ॥ २९ ॥

चरन्निति । तथा किञ्च आजौ युद्धे चरन् परिभ्रमन् तथा विपाठैर्वाणैः । "वाणः स्यादस्त्रकण्टकः । स्थूलक्षेडो विपाठश्च चित्रपुङ्खः शरः सर" इति त्रिकाण्डशेषः । विपाटिता विदारिता अरातिचमूः शत्रुसेना येन सः तथा उच्चायि उन्नतं धनुर्विधुन्वन् कम्पयन् रघुराजसूनूरामः नरः मनुष्यमूर्तिरपि गाण्डीवं धनुर्विधुन्वन् साक्षाद्देवोऽग्निरिव वरुण इव वा आबभासे शुशुभे । "गाण्डीवं हि वरुणस्यासीत् ततोगृहीत्वाऽग्निना खाण्डवदाहसमयेऽर्जुनाय दत्तम्" इति भारतम् ।

पक्षे रघु लघु यथा तथा आजौ चरन् तथा गाण्डीवनामकं धनु-र्विधुन्वन् राजसूनुरर्जुनः । शेषं समानम् । यद्वा तादृशोऽर्जुनः साक्षान्नरो नरनामा

अथ रणभुवि भीष्मः प्रोच्छलन्मेघनादः
स्फुरदविरलरोपारोपदुर्दर्शचापः।
द्विषदयुतनिपाते नित्यबद्धप्रतिज्ञः
स्फुटमलभत दोष्णोर्विक्रमस्यावकाशम् ॥३१॥

रोमाञ्चिता इव भुवो गिरयः प्ररोहत्-
पक्षा इवाभ्रपटलीजटिला इवाशाः।
अन्तः शकुन्तिभिरिवाञ्चितमन्तरीक्षं
तद्बाणसन्ततितिरस्करणादभूवन् ॥३२॥

नारायणापरमूर्तिर्देव इवाबभासे। अत्र अर्जुनस्यैव नरावतारत्वात् अवतारावतारिणोर्भिन्नत्वाध्यवसायात् सादृश्यसङ्गतिः ॥ ३० ॥

अथेति। अथानन्तरं रणभुवि भीष्मो भयङ्करः मेघनाद इन्द्रजित् स्फुटं व्यक्तं दोष्णोर्बाह्वोर्विक्रमस्य अवकाशम् अवसरम् अलभत प्राप तस्मिन्नवसरे मेघनादोऽतिपराक्रमेण युद्धं कृतवानित्यर्थः किम्भूतः प्रोच्छलन् ऊर्द्ध्वमाक्रामन् अन्तरीक्षगतः प्रच्छन्नशरीर इत्यर्थः रामायणे तथैव तस्य युद्धवर्णनात्। तथा स्फुरताम् अविरलानां रोपाणां बाणानाम् आरोपेण योजनेन दुर्दर्शोऽदृश्यश्चापो यस्य सः तथा द्विषदयुतनिपाते। अत्रायुतशब्दोऽसंख्यपरः। असंख्यशत्रुनिपातने नित्यं बद्धा रावणसमीपे कृता प्रतिज्ञा येन सः।

पक्षे रणभुवि प्रोच्छलन्नुच्छन् मेघस्येव नादः सिंहनादो यस्य सः तथा द्विषताम् अयुतस्य दससहस्राणां निपाते नित्यबद्धप्रतिज्ञः प्रतिदिनं दशसहस्रसंख्यकानि शत्रुसैन्यानि निपातयिष्यामीति कृतप्रतिज्ञो भीष्मो गाङ्गेयः दोष्णोर्विक्रमस्यावकाशम् अलभत। अन्यत्तुल्यम् ॥ ३१ ॥

रोमाञ्चिता इति। तस्य मेघनादस्य पक्षे भीष्मस्य बाणसन्ततिभिः शरपरम्पराभिस्तिरस्करणादाच्छादनात् भुवो भूमयः रोमाञ्चिता इव कण्टकिता इव अभूवन् तथा गिरयः पर्वताः प्ररोहत्पक्षा इव जायमानपक्षा इव तथा आशा दिशः अभ्रपटलीजटिला इव मेघश्रेणीव्याप्ता इव तथा अन्तरीक्षम्

सुरेन्द्रसन्तानभुवाभिमन्युना
महारथो भग्नमनोरथः कृतः ।
परैर्दुरोक्ष्यः स बभूव तेजसा
रविर्यथा मध्यमधिष्ठितो दिवः ॥३३॥

तेन द्विषां दुष्करदर्शनेन
मुक्तः शराशीविषराशिरुग्रः ।
क्षपामुखे ध्वान्तवदन्तरीक्षं
निरन्तरालं न चिराच्चकार ॥३४॥

आकाशं शकुन्तिभिः पक्षिभिः अन्तर्मध्ये अञ्चितमिव व्याप्तमिव । अत्रोत्प्रेक्षायां संसृष्ट्या बाणसन्ततिषु रोमाञ्चपक्षाभ्रपटलीशकुन्तीनामारोपस्य प्रतीयमानत्वाद्रूपकालङ्कारो व्यज्यते ॥ ३२ ॥

सुरेन्द्रेति । अभिमन्युना अभिगतरोषेण सुरेन्द्रसन्तानो वाली तद्भुवा अङ्गदेन भग्नो मन इव रथो यस्य ईदृशः कृतः स महारथो मेघनादः दिव आकाशस्य मध्यमधिष्ठित आक्रान्तः सन् रविर्यथा सूर्य इव तेजसा पराक्रमेण अन्यत्र किरणजालेन परैः शत्रुभिरन्यत्रान्यैर्दुर्निरीक्ष्यो द्रष्टुमशक्यो बभूव । क्रुद्धेनाङ्गदेन रथे भग्ने सति मेघनादो मायया गगनमध्यमाक्रम्यातितरां युद्धं कृतवानित्यर्थः ।

पक्षे अभिमन्युना अभिमन्युनाम्ना सुरेन्द्रसन्तानोऽर्जुनस्तद्भुवा तत्पुत्रेण भग्नो मनोरथो व्यूहभेदाशयो यस्य ईदृशः कृतः स महारथो भीष्मः दिवो मध्यमधिष्ठितो रविर्यथा मध्याह्नकालीनसूर्य इव तेजसा बलेन परैर्दुर्निरीक्ष्यो बभूव । उपमालङ्कारः ॥ ३३ ॥

तेनेति । तेन मेघनादेन द्विषां दुष्करस्य रथभङ्गरूपकर्मणो दर्शनेन हेतुना तद्दर्शनजनितकोपेनेत्यर्थः क्षपामुखे सन्ध्यासमये मुक्तस्त्यक्त उग्रो भयदः शराशीविषराशिः बाणत्वेन परिणतः सर्पसमूहः ध्वान्तवदन्धकारइव नचिरात्

तथाशान्तनवोद्योगे मेघनादे यथाध्वगाः।
अवापुः प्राणसन्देहमुदारा वानरेश्वराः ॥३५॥

अस्त्रैरनालीढवपुः परेषां
धृतायुधो यावदमित्रमेकः।
मनोरथे वैरिजनस्य भङ्क्त्वा
श्वेतं यशःपुञ्जमसौ बबन्ध ॥३६॥

शीघ्रम् अन्तरीक्षं निरन्तरालम् अवकाशशून्यं चकार बाणाकृतिभिः सर्पैर्गगनं पूरयामासेत्यर्थः।

पक्षे द्विषां दुष्करस्य कर्मणो दर्शनेन तेन भीष्मेण मुक्ताः तथा उग्राः शराः भयङ्करत्वात् आशीविषाइव तेषां राशिः क्षपामुखे ध्वान्तवत् नचिरात् अन्तरीक्षं निरन्तरालं चकार। यथा क्षपामुखे ध्वान्तमन्तरीक्षम् आच्छादयति तथेत्यर्थः। उपमा ॥ ३४ ॥

तथेति। मेघनादे इन्द्रजिति तथा तेन प्रकारेण अशान्तोऽनष्टो नवो नवीन उद्योगो युद्धचेष्टा यस्य स तथा तादृशे सति निकुम्भिलायां वह्नौ हुत्वा पुनर्नवीनमिव युद्धं कुर्वति सतीत्यर्थः यथाध्वं युद्धमार्गमनतिक्रम्य गच्छन्तीति यथाध्वगाः न्यायेन युद्धान्त इत्यर्थः तथा उदारा युद्धकुशला अपि वानरेश्वराः सुग्रीवादयः प्राणसन्देहम् अद्य प्राणा स्थास्यन्ति नवेति संशयम् अवापुः।

पक्षे तथा तादृशे शान्तनवस्य शान्तनोः पुत्रस्य भीष्मस्य उद्योगे सति उद्गता आरावा भयध्वनयो येषां तादृशा नरेश्वरा राजानः मेघस्य नादे गर्जिते अध्वगा यथा पथिकाइव प्राणसन्देहम् अवापुः। अस्मिन् पक्षे उपमालङ्कारः ॥ ३५ ॥

अस्त्रैरिति। परेषाम् अस्त्रैरनालीढम् अनाक्रान्तं वपुर्यस्य सः तथा एकः। अलापिकारीबोध्यः। एकोऽपि यावन्तोऽमित्रा यावदमित्रम्। यावतोऽवधारणे इत्यव्ययीभावः। सर्वान् शत्रून् प्रतीत्यर्थः धृतमायुधं येन तादृशोऽसौ मेघनादः पक्षे भीष्मः वैरिजनस्य मनोरथं जयाशां भङ्क्त्वा निराकृत्य श्वेतं शुद्धं यशःपुञ्जं बबन्ध अर्जयामास। यद्वा रामायणपक्षे यावदिति वाक्यालङ्कारे

नरनारायणौ साक्षादिव तौ रामलक्ष्मणौ ।
सचक्रौ स तिरश्चक्रे नागरूपधरैः शरैः ॥३७॥

दुर्निवारमपरैर्धरणीश-
स्तस्य वीर्यमवलोक्य सरोषः ।
नागबद्ध इव मन्दरशैलः
स्थैर्यमात्मगतमुत्सृजति स्म ॥३८॥

अखिलं रामं बबन्ध सर्पमयवाणैः समेतं चकार । अत्रोत्प्रेक्षा श्वेतं यशःपुञ्जं विशुद्धकीर्तिराशिमिव बबन्ध इवशब्दाभावात् प्रतीयमानोत्प्रेक्षा । भारतपक्षे श्वेतं श्वेतनामकन्दर्पं बबन्धेति कश्चित् ॥ ३६ ॥

नरेति । स मेघनादः नागानां सर्पाणां रूपं रूपान्तरं धरन्तीति नागरूपधराः शररूपेण परिणता नागा इत्यर्थः तैः शरैः सचक्रौ ससैन्यौ साक्षात् नरनारायणाविव तौ रामलक्ष्मणौ तिरश्चक्रे आच्छादयामास पूर्वस्यैवानुवादोऽयम् ।

पक्षे स भीष्मः नागरूपधरैः सर्पवद्भयदैः शरैः कृत्वा सचक्रौ चक्रास्त्रसहितौ साक्षाद्रामलक्ष्मणाविव तौ नरनारायणौ नरनारायणावतारौ अर्जुनकृष्णौ तिरश्चक्रे। उभयत्राप्युत्प्रेक्षा ॥ ३७ ॥

दुर्निवारमिति । धरणीशो रामः अपरैर्जनैर्दुर्निवारं निवारयितुमशक्यं तस्य मेघनादस्य वीर्यं बलम् अवलोक्य सरोषः सक्रोधः सन् नागेन वासुकिना बद्धो वेष्टितो मन्दरशैलो मन्थाचल इव आत्मगतं स्वीयं स्थैर्यं धैर्यम् उत्सृजतिस्म तत्याज रामोऽपि बाणरूपधरनागैर्बद्धो ,मन्दरो यथा नागबद्धोऽचलत्तथेत्यर्थः ।

पक्षे धरणीशः कृष्णः अपरैर्दुर्निवारं तस्य भीष्मस्य वीर्यमवलोक्य सरोषः सन् नागबद्धो मन्दरशैल इव आत्मगतं स्थैर्यं स्थिरत्वम् अस्त्रं न धारयिष्यामीति प्रतिज्ञामित्यर्थः उत्सृजतिस्म प्रतीदं गृहीत्वा भीष्मेन सह योद्धमुद्यत इत्यर्थः। स्वागतावृत्तं, "स्वागतातु रनभाद्गुरुयुग्मम्" इति लक्षणात् ॥ ३८ ॥

जिघांसया तस्य शरार्दितानि
बलानि भग्नानि समीक्षमाणः।
मनुष्यमूर्तिः पुरुषः पुराणो
महीतलं मन्युवशाज्जगाम ॥३६॥

सपदि भुवननाथे तां दशां संप्रपन्ने
भ्रमति च हरिचक्रे लोलहेतिप्रताने।
सुरमुनिभिरवादि स्वस्ति लोकत्रयाये-
त्युदजनि परसैन्ये मङ्क्षु कोलाहलश्च ॥४०॥

जिघांसयेति। मनुष्यमूर्तिर्मायामानुषविग्रहः वस्तुतः पुराणः पुरुषः परमात्मा रामः सर्पास्त्रतिरस्कृत इति शेषः जिघांसया हननेच्छया तस्य मेघनादस्य शरैरर्दितानि पीड़ितानि अतएव भग्नानि समन्तात् पलायमानानि बलानि सैन्यानि समीक्षमाणः पश्यन् सन् मन्युवशात् अहो मदर्थमेते हन्यन्तइति शोकवशात् महीतलं जगाम भूतले पपात।

पक्षे मनुष्यमूर्तिः पुराणः पुरुषः कृष्णः शरार्दितानि अतएव भग्नानि बलानि समीक्षमाणः सन् मन्युवशात् क्रोधवशात् तस्य भीष्मस्य जिघांसया महीतलं जगाम। प्रतोदहस्तो रथादवप्लुत्य भूतलं प्रापेत्यर्थः ॥ ३९ ॥

सपदीति। भुवननाथे रामे सपदि तां दशां सर्पशरबन्धाद्भूमिपतनरूपाम् अवस्थां संप्रपन्ने संप्राप्ते सति तथा लोलाश्चपलाः संपतन्त इत्यर्थः हेतीनां मेघनादस्यायुधानां प्रताना विस्तारा यत्र तादृशे हरिचक्रे वानरसैन्ये च भ्रमति रामस्य तादृगवस्थादर्शनेन भ्रान्तिं मोहं गच्छति सति सुरा इन्द्रादयः मुनयो नारदादयः तैश्च तैश्च तथा तैः लोकत्रयाय स्वस्ति भूयादिति शेषः। नमः स्वस्तीत्यादिना चतुर्थी। इति अवादि उच्चरितं जगन्मयस्य रामस्य विपत्तौ जगतोऽपि सा भवेदिति भावः। तथा परसैन्ये शत्रुबले मङ्क्षु झटिति कोलाहलश्च रामपतनजनितहर्षेण कलकलश्च उदजनि उच्चैर्बभूव। लोलश्चञ्चलोऽस्तगमनोन्मुख इत्यर्थः हेतीनां सूर्यतेजसां प्रतानो यत्र स तथा तस्मिन् सन्ध्या-

निरीक्ष्य रामानुजमाकुलं तथा
तदा विसंज्ञे भुवनत्रये भृशम् ।
प्रभाववेदी भुवनप्रभोः परं
मुमोच न स्वां प्रकृतिं पितामहः ॥४१॥

अवान्न वायुर्निरवात् कृशानुः
क्षितिश्चकम्पे जलधिर्जुघूर्णे ।

समये इत्यर्थः इति वा । "हेतिः स्यादायुधज्वालासूर्यतेजःसु योषिति" इति मेदिनी ।

पक्षे भुवननाथे कृष्णे सपदि तां दशां भीष्मजिघांसया क्रोधेन भूम्यवतरणरूपां संप्रपन्ने सति तथा लोलो हेतेर्ज्वालायाः प्रतानो यस्य तादृशे हरेर्नारायणस्य चक्रे सुदर्शने च भ्रमति कृष्णस्य कोपदर्शनेन ऊर्द्ध्वमागत्य भ्रमणं कुर्वति सति । हरिचक्रे अश्वसमूहे इति बहवः । शेषं समानम् ॥४०॥

निरीक्ष्येति । तथेति चार्थे रामस्यानुजं लक्ष्मणञ्च आकुलं सर्पशरबन्धादवसन्नं निरीक्ष्य तदा भुवनत्रये भृशं विसंज्ञे संज्ञारहिते मुग्धे सति भुवनानां प्रभोः रामस्य प्रभाववेदी अनुभावज्ञः मद्दत्तवरस्यैव मर्यादारक्षणार्थं सलक्ष्मणोऽयं रामः शरबद्धो न वस्तुतः जगत्प्रभोः कुतो बन्धनशङ्केति जानन्नित्यर्थः परं केवलं पितामहो ब्रह्मा स्वां प्रकृतिं निजस्वभावं न मुमोच तत्याज ।

पक्षे तदा रामस्य बलभद्रस्य अनुजं कृष्णं तथा आकुलं क्रोधाध्मातं निरीक्ष्य भुवनत्रये भृशं विसंज्ञे सति भुवनप्रभोः कृष्णस्य प्रभाववेदी भक्तस्य मम त्वामस्त्रं ग्राहयिष्यामीति प्रतिज्ञारक्षार्थमेवास्य कोपानुबन्धो न वस्तुतो भक्तवत्सलत्वादिति जानन् पितामहो भीष्मः परं केवलं स्वां प्रकृतिं न मुमोच ॥४१॥

अवादिति । तदा तस्मिन् रामस्य पक्षे कृष्णस्य क्षोभकाले किम्वा कतमस्वा भूतम् आकाशाद्यन्यतमं महाभूतम् उद्भ्रान्तं क्षुब्धं विकृतमित्यर्थः नाभूत् अपि तु सर्वमेवेत्यर्थः यतः वायुर्नावात् न वातिस्म तथा कृशानुर्वह्निर्निरवात् निर्वाणमगच्छत् तथा क्षितिश्चकम्पे तथा जलधिः समुद्रो जुघूर्णे आवर्तबहुलो-

आसीन्महोल्काजटिलं नभश्च ।
किंवा तदोद्भ्रान्तमभून्न भूतम् ॥४२॥

अथ भुवमवतीर्णः पन्नगारिः किरीटी
सपदि शमितमन्युः प्रीतिहृद्यैर्वचोभिः ।
तमवजितभुजङ्गप्राभवाभ्यां भुजाभ्या-
मशिथिलमुपगूह्य स्वामवस्थामनैषीत् ॥४३॥

दीप्तं यशः संयति लब्धवन्तं
गाङ्गेयमुच्चैर्गतमात्मधाम्ना ।

ऽभूत् तथा नभ आकाशश्च महोल्काभिर्जटिलं जटावत् व्याप्तमित्यर्थः आसीत् अधिष्ठानस्य क्षोभेऽधिष्ठितक्षोभस्य युक्तत्वादिति भावः । अत्र चतुर्थपादवाक्यं प्रति पूर्ववाक्यपञ्चकस्य हेतुत्वात् काव्यलिङ्गमलङ्कारः ॥४२॥

अथेति । अथ जाम्बवदादिवाक्येन गरुड़स्मरणानन्तरं भुवं भूमिम् अवतीर्णः उपनतः तथा किरीटी मुकुटवान् क्षतमनोज्ञवेश इत्यर्थः पन्नगारि-र्गरुड़ः प्रीत्या प्रेम्णा हृद्यैर्मनोज्ञैर्वचोभिः सपदि तत्क्षणमेव शमितो नाशितो मन्युः शोको येन तादृशः सन् अवजितं परिभूतं भुजङ्गानां प्राभवं प्रभुत्वं याभ्यां विनाशकत्वादिति भावः तौ तथा ताभ्यां भुजाभ्याम् अशिथिलं गाढं यथा तथा तं रामम् उपगूह्य आलिङ्ग्य स्वाम् अवस्थां निजस्वभावम् अनैषीत् प्रापयामास भुजाभ्यामालिङ्गनेन सर्पशरानपसार्य सुस्थं चकारेत्यर्थः ।

पक्षे अथ कृष्णक्रोधदर्शनानन्तरं भुवमवतीर्णः रथाद्भूमिमागतः पन्नगारिः खाण्डवदाहे अश्वसेनादिनागानां शत्रुः किरीटी अर्जुनः प्रीतिहृद्यैर्वचोभिः सपदि शमितमन्युः कृष्णस्य निवारितक्रोधः सन् अवजितभुजङ्गप्राभवाभ्यां भुजङ्गवद्दीर्घाभ्यां भुजाभ्यां तं कृष्णम् अशिथिलमुपगूह्य स्वामवस्थां पूर्ववत् शान्तात्मताम् अनैषीत् ॥४३॥

दीप्तमिति । राजा रावणः आत्मवर्गैः स्वगणैः सह तृणीकृतो विजित आखण्डल इन्द्रः स एव शत्रुर्येन तादृशम् एनं मेघनादं बहु यथा तथा अमंस्त मन्यतेस्म साधु वत्स चिरञ्जीव यद्रामलक्ष्मणावपि जितवानित्यादिना बहुमान-

तृणीकृताखण्डलशत्रुमेनं
राजात्मवर्गैः सह बह्वमंस्त ॥४४॥

तदा पुनः स्वां प्रकृतिं प्रपन्नौ
निरीक्ष्य हृष्टौ नरदेववर्यौ ।
बलाधिनाथाः प्रसभं बभञ्जुः
प्रचण्डवेगाः परमण्डलं ते ॥४५॥

मस्य चकारेत्यर्थः किम्भूतम् आत्मधाम्ना स्वतेजसा संयति युद्धे दीप्तं यशः रामबन्धनात् शुद्धां कीर्तिं लब्धवन्तं तथा उच्चैर्गेयं स्तोतव्यं गेयं गानार्हमिति यशोविशेषणं वा तथा गां भूमिं गतम् अन्तरीक्षे स्थित्वा रामादीन् पराभूय ततो भूमिमागतमित्यर्थः ।

पक्षे राजा दुर्योधनः आत्मवर्गैर्दुःशासनादिभिः सह एनं गाङ्गेयं भीष्मं बहु अमंस्त किम्भूतम् आत्मधाम्ना उच्चैर्गतम् उच्चतां प्राप्तं तथा दीप्तं शुद्धं यशः संयति लब्धवन्तं तथा तृणीकृता आखण्डलशत्रवो दैत्या येन तं यद्वा खण्डं लान्तीति खण्डला न खण्डला अखण्डलाः समग्रा इत्यर्थः तृणीकृता अखण्डलाः शत्रवो येन तम्। आखण्डलपुत्रमिति पाठे रामायणपक्षे इन्द्रपुत्रो जयन्तः भारतपक्षे अर्जुनः ॥ ४४ ॥

तदेति। तदा नरदेववर्यौ क्षत्रियश्रेष्ठौ नररूपौ देववर्याविति वा रामलक्ष्मणौ स्वां प्रकृतिम् अशोकमुग्धस्वरूपां प्रपन्नौ प्राप्तौ अतएव हृष्टौ हर्षेण युद्धोत्साहिनौ। हृष्टा इति पाठे कर्तृविशेषणम्। निरीक्ष्य ते बलाधिनाथाः सेनापतयः सुग्रीवादयः प्रचण्डः शत्रुभयदो वेगो येषां तादृशाः सन्तः प्रसभं बलेन परमण्डलं शत्रुसैन्यं बभञ्जुः पराजितवन्तः। “रणे भङ्गः पराजय” इत्यमरः।

पक्षे नरो नरावतारोऽर्जुनः देववर्यः कृष्णस्तौ स्वां प्रकृतिं प्रपन्नौ निरीक्ष्य अर्जुनस्य युद्धोत्साहित्वं कृष्णस्य शान्तात्मत्वं प्रकृतिः, बलाधिनाथा भीमादयः। शेषं समानम् ॥ ४५ ॥

आक्रान्तमन्तर्हरिनायकानां
तेषां प्रतापेन कृशानुनेव ।
पुरत्रयं प्लुष्टमिवेश्वरेण
विरोधिचक्रं चकितं चचाल ॥४६॥

रोषेण धूम्राक्षमकम्पनञ्च
प्रमथ्य सैन्यं पवमानसूनुः ।
व्ययूयुजत् संयति जीवितेन
तुङ्गेन दोष्णा तुलिताद्रिशृङ्गः ॥४७॥

ततो निषङ्गी शरदो प्रहस्तः
सेनापतिः क्रौञ्चमिवापगेयः ।

आक्रान्तमिति। तेषां हरिनायकानां वानरसेनापतीनाम् पक्षे कृष्णनाथानां भीमादीनाम् कृशानुना वह्निनेव प्रतापेन तेजसा अन्तर्मध्ये आक्रान्तं विरोधिचक्रं शत्रुसैन्यम् ईश्वरेण शिवेन प्लुष्टं दग्धं पुरत्रयमिव चकितं भीतं सत् चचाल चञ्चलं बभूव। उपमयोः संसृष्टिः ॥ ४६ ॥

रोषेणेति। तुङ्गेन बृहता दोष्णा बाहुना तुलितमुद्धृतमद्रिशृङ्गं येन तादृशः पवमानसूनुर्हनूमान् धूम्राक्षं धूम्राक्षनामकम् अकम्पनमकम्पननामकञ्च राक्षससेनापतिं रोषेण प्रमथ्य विनाश्य अनन्तरं संयति युद्धे सैन्यं राक्षसबलं जीवितेन व्ययूयुजत् वियोजयामास जघानेत्यर्थः।

पक्षे तुङ्गेन दोष्णा तुलितं सदृशीकृतम् अद्रिशृङ्गं येन तादृशः पवमानसूनुर्भीमः रोषेण धूम्राक्षं कलुषलोचनं तथा अकम्पनञ्च भयकम्परहितं रणादचलन्तमिति वा सैन्यं कौरवबलं प्रमथ्य गदादिभिराहत्य जीवितेन व्ययूयुजत्। अस्मिन् पक्षे तुलिताद्रिशृङ्ग इति आर्थी उपमा ॥ ४७ ॥

तत इति। ततोऽनन्तरं निषङ्गी तूणवान् तथा शरान् ददाति शरैर्द्यतीति वा शरदं धनुस्तदस्यास्तीति शरदो धनुर्धरः तथा शक्तिं सामर्थ्यम् अस्त्रविशे-

बलं बृहच्छक्तिधरो बिभेद
मूर्च्छद्यशः पाण्डुसुतस्य राज्ञः ॥४८॥
प्रवीरलोकान् प्रलयं नयन्तं
प्रतापकालानलमस्य दृष्ट्वा ।
यशोधनस्तन्निधनैकसाध्यां
स्वपक्षरक्षां क्षितिपोऽनुमेने ॥४९॥
विक्रान्ता अपि धीमन्तस्तेपार्था हरिनायकाः ।
नक्तञ्चारिबलाधीशमभिपेतुर्जयार्थिनः ॥५०॥

शक्तिं धरतीति शक्तिधरः प्रहस्तो राक्षसविशेषः सेनापतिः सन् राज्ञः सुतस्य दशरथतनयस्य रामस्य बृहत् प्रभूतं तथा मूर्च्छता वर्द्धमानेन यशसा पाण्डु शुक्लं सर्वत्र लब्धकीर्तीत्यर्थः बलं वानरसैन्यम् आपगेयो गङ्गातनयः शक्तिधरः कार्त्तिकेयः क्रौञ्चं पर्वतविशेषमिव बिभेद विव्याध । कार्त्तिकेयस्य गङ्गया कियत्कालं गर्भे धृतत्वादापगेयत्वम् ।

पक्षे शरैर्दीप्र उज्ज्वलः हस्तो यस्य सः सेनापतिरापगेयो भीष्मः पाण्डुसुतस्य राज्ञो युधिष्ठिरस्य मूर्च्छद्यशो बृहद्बलं शक्तिधरः क्रौञ्चमिव बिभेद । अन्यत्तुल्यम् । उपमा ॥ ४८ ॥

प्रवीरेति । यश एव धनं यस्य सः क्षितिपो रामः पक्षे युधिष्ठिरः प्रवीरलोकान् श्रेष्ठयोद्धृजनान् प्रलयं नाशं नयन्तम् अस्य प्रहस्तस्य पक्षे भीष्मस्य प्रताप एव कालानलः प्रलयाग्निस्तं दृष्ट्वा स्वपक्षाणां रक्षां रक्षणं तस्य प्रहस्तस्य पक्षे भीष्मस्य निधनैकसाध्यां विनाशमात्रजन्याम् अनुमेने निश्चिकाय अस्य जीवने मदीया न जीविष्यन्ति अतो यथास्य विनाशः स्यात्तथा विधेयमिति निश्चितवानित्यर्थः । अत्र द्वितीयपादे लोकप्रलयकरणधर्मस्य साक्षादुपमानएव सम्भवात् प्रतापकालानलेति रूपकं नोपमा ॥ ४९ ॥

विक्रान्ता इति । विक्रान्ता अपि पराक्रमशालिनोऽपि तथा धीमन्तः । काकाक्षिन्यायादत्रापि अपेरन्वयः । बुद्धिमन्तोपि अपार्था अपगतप्रयोजनाः

**निर्भिन्नमर्मणा देहस्पृहां हित्वा युयुत्सता।**
**परेभ्यस्तेन वीरेण वधोपायः प्रदर्शितः ॥५१॥**

पूर्वं प्रहस्तं जेतुमशक्नुवन्त इत्यर्थः ते हरिनायका वानरसेनापतयः जयार्थिनः सन्तः नक्तञ्चारिबलानां निशाचरसैन्यानाम् अधीशं नायकं प्रहस्तम् अभिपेतुः अभिक्रमाचक्रमुः सम्भूयेति शेषः।

पक्षे विक्रान्ता अपि धीमन्तोपि हरिनायकाः। अत्राप्यपेरन्वयः। कृष्णनाथा अपि तथापि भीष्मं जेतुमशक्नुवन्त इत्यर्थः ते पार्थाः पृथायाः कुन्त्यास्तनया युधिष्ठिरादयः जयार्थिनः सन्तः नक्तञ्च। चकारः पादपूरणे। रात्रौ अरेर्दुर्योधनस्य बलाधीशं सेनापतिं भीष्मम् अभिपेतुः प्रापुः। कथमप्यजेयस्य भीष्मस्य वधोपायजिज्ञासया रात्रौ तस्य शिविरं प्रापुरित्यर्थः ॥ ५० ॥

निर्भिन्नेति। निर्भिन्नं निःशेषेण विदारितं मर्म मर्मस्थानं हृदयं यस्य तादृशेन तथापि देहस्पृहां देहधारणाकाङ्क्षां हित्वा युयुत्सता योद्धुमिच्छतैव तेन वीरेण प्रहस्तेन परेभ्यः शत्रुभ्यो रामादिभ्यः। यदभिप्रेत्य धात्वर्थ इति संप्रदानसंज्ञायां चतुर्थी। वधोपायः स्वस्य मारणोपायः प्रदर्शितः ज्ञापितः मर्मणि भिन्ने हि योधा रणादपयानं कुर्वन्ति अयन्तु निर्भिन्नमर्मापि अपयानमकृत्वा जीवनाशां परित्यज्य युद्धं कृतवान् तेनैव स्वल्पप्रहाररूपं स्ववधोपायं सूचयामासेत्यर्थः।

पक्षे निर्भिन्नं प्रकाशितं मर्म रहस्यं येन स तथा तेन तथा देहस्पृहां हित्वा युयुत्सता भीष्मस्येच्छामृत्युत्वात् सत्यां देहधारणेच्छायां मरणं न भवेदिति तां हित्वैव योद्धुमिच्छतेत्यर्थः तेन वीरेण भीष्मेण परेभ्यो युधिष्ठिरादिभ्यो वधोपायः शिखण्डिनः पुरतोऽवस्थापनरूपः प्रदर्शितः कथितः। पुरा किल अम्बानाम्नी कन्या विवाहार्थमागता अन्यपूर्वासीति निराकृता कोपाद्भीष्मं हन्तास्मीति सङ्कल्पेन तपश्चचार सेयं शिखण्डी द्रुपदस्य पुत्रस्तद्दर्शनेन च नाहं योत्स्यामीति प्रतिज्ञातं ततश्च शिखण्डिनं पुरस्कृत्यार्जुनो युध्यतु तेन चायुध्यन्नहं शरशतनिचितो भूम्यां पतिष्यामीत्यादि सर्वं भीष्मोऽकथयदित्यर्थः ॥ ५१ ॥

प्रवर्त्य भूयः समरं परःशतान्
विपक्षवीरान्नयतोयमक्षयम् ।
पराक्रमस्तस्य धनञ्जयोद्भव-
प्रतापरुद्धोऽपि विपप्रथेतराम् ॥५२॥

प्रतिदिशमरिवीरानाशुगैर्दारयित्वा
समरभुविचरन्तं नायकं वाहिनीनाम् ।
प्रसभमभिपपात प्रांशुधामाग्निजन्मा
फणिपतिमिव तीव्रं चण्डवेगः शिखण्डी ॥५३॥

प्रवर्त्येति। भूयः पुनरपि समरं प्रवर्त्य प्रकर्षेण वर्तयित्वा शतात् परे परःशताः शताधिकास्तान् । "परिमाणं शतादूर्द्ध्वं परःशतमुदाहृतम्" इति कोषः। पराऋतसहस्रयोरिति सुट्। विपक्ष-वीरान् शत्रुयोधान् यमक्षयं यमालयं नयतः प्रापयतस्तस्य प्रहस्तस्य पराक्रमः धनञ्जयाद्वह्नेरुद्भवो यस्य स धनञ्जयोद्भवो नीलनामा वानरेश्वरस्तस्य प्रतापेन रुद्धोऽपि वारितोऽपि विपप्रथेतरां विशेषेणात्यर्थं प्रथितो बभूव। नीलेन सार्द्धमत्यर्थं युयुधे इत्यर्थः।

पक्षे तस्य भीष्मस्य पराक्रमः धनञ्जयोऽर्जुनस्तस्मादुद्भवो यस्य तादृशो यः प्रतापस्तेन रुद्धोऽपि विपप्रथेतराम् । "धनञ्जयोऽर्जुने वह्निनागभिद्देहमारुते" इति मेदिनी ॥ ५२ ॥

प्रतीति। दिशं दिशं प्रति प्रतिदिशं सर्वासु दिक्ष्वित्यर्थः आशुगैर्वाणैः अरिवीरान् शत्रुयोधान् दारयित्वा विदार्य द्रावयित्वेति पाठे अपसार्य समर-भुवि युद्धाङ्गने चरन्तं भ्रमन्तं वाहिनीनां सेनानां नायकं पतिं प्रहस्तं प्रांशु उद्रिक्तं धाम तेजो यस्य तादृशोऽग्निजन्मा अग्निपुत्रो नीलवानरः चण्डवेगो विकटवेगवान् शिखण्डी मयूरस्तीव्रं विषोल्वणं फणिपतिमिव प्रसभं बलेनाभि-पपात आभिमुख्येन प्राप।

पक्षे प्रांशुधामैव महातेज एव अग्निस्तस्य जन्म यस्मात् तादृशः यज्ञाग्न्युत्-

असह्यतेजाः प्रहरन् प्रसह्य
मनोजवः स्यन्दनदीर्णभूमिः।
असौ विसर्पन् समरे समन्ता-
न्नलक्षराणामभवच्छरव्यम् ॥५४॥

संख्ये सम्मुखतां सतां रचयता तारान्वयस्य प्रियं
सद्यः सम्मदहृष्टरोमविलसद्वक्षःशिलां बिभ्रता।
अग्रे धाम शिखण्डिनः प्रथयता भ्राजिष्णुना जिष्णुना
नीलेनाम्बुमुचेव दावदहनः सेनापतिः पातितः ॥५५॥

पन्न इति केचित्। शिखण्डी तन्नामा द्रुपदपुत्रः चण्डवेगो गरुड़स्तीव्रं फणिपतिमिव वाहिनीनां नायकं भीष्मं प्रसभमभिपपात। शेषं समानम्। "शिखण्डी ना कलापे स्याच्छाङ्गेयारिमयूरयोः" इति मेदिनी। उभयत्राप्युपमा। भारतपक्षे चण्डवेगस्य शिखण्डिविशेषणत्वे फणिपतिमिव साक्षात् सर्पमिवेत्युत्प्रेक्षा ॥ ५३ ॥

असह्येति। असह्यं रिपुभिः सोढुमशक्यं तेजो यस्य सः तथा प्रसह्य हठेन प्रहरन् प्रहारं कुर्वन् तथा मनस इव जवो वेगो यस्य सः तथा स्यन्दनं गमनम्। गमनविशेषार्थकस्य स्यन्दधातोर्गमनार्थकत्वे लक्षणा। पक्षे रथस्तेन दीर्णा भूमिर्येन सः तथा समरे समन्तात् सर्वतो विसर्पन् वेगेन भ्रमन् ईदृशोऽसौ नीलः पक्षे शिखण्डी तस्य प्रहर्त्तस्य पक्षे भीष्मस्य शराणां शरव्यं लक्ष्यं नाभवत्। "लक्षं लक्ष्यं शरव्यञ्च" इत्यमरः। अजहल्लिङ्गत्वान्न पुंस्त्वम्। पूर्वत्र वेगातिशयेन विसर्पणान्न शरव्यत्वम् अतएव पदार्थहेतुकं काव्यलिङ्गमलङ्कारः, उत्तरत्र शिखण्डिनोऽम्बावतारत्वेन स्त्रीत्वात् स्त्रीषु शस्त्रं न सन्धास्ये इति भीष्मस्य प्रतिज्ञया न शरव्यत्वमिति बोध्यम् ॥५४॥

संख्य इति। संख्ये युद्धे सतां साधूनां विभीषणादीनां सम्मुखतां प्रसन्नमुखतां प्रियञ्च रचयता कुर्वता तथा सम्मदेन हर्षेण हृष्टानि उन्नतानि यानि रोमाणि तैर्विलसद्वक्षो यत्र तद्यथा तथा शिलां प्रस्तरखण्डं बिभ्रता धारयता

**रणाङ्गनगतः प्राणांस्तावदेव बभार सः ।**
**यावत्तिग्मकरो नासीदाग्नेयपथगोचरः ॥५६॥**

तथा भ्राजिष्णुना दीप्तिमता तथा जिष्णुना जयशीलेन नीलेन नीलनाम्ना वानरेश्वरेण तारान्वयस्य तारापुत्रस्याङ्गदस्याग्रे शिखण्डिनो मयूरस्य धाम तेज शुक्रमित्यर्थः प्रथयता पृथू कुर्वता अम्बुमुचा मेघेन दावदहनो वनाग्निरिव सेनापतिः प्रहस्तः सद्यस्तत्क्षणमेव पातितः शिलाप्रहारेण निपातितः अन्यत्र निर्वापितः। यथा मेघेन दावदहनः सद्योनिर्वाप्यते तथा पातित इत्यर्थः।

पक्षे संख्ये सतां वीराणां संमुखतां युद्धोन्मुखतां रचयता तथा तारान्वयस्य उच्चवंशोत्पन्नस्य युधिष्ठिरस्य कृष्णस्य वा प्रियञ्च रचयता। यद्वा तारा बृहस्पतिपत्नी तस्या अपत्यं तारो बुधस्तदन्वयस्य बुधस्य चन्द्रौरसत्वात् चन्द्रवंशोत्पन्नस्य पूर्वोक्तस्येत्यर्थः। तथा सम्मदहृष्टरोमभिर्विलसद्यद्वपुस्तत् कठिनत्वात् विस्तीर्णत्वाच्च शिलेव तां बिभ्रता तथा शिखण्डिनो द्रौपदस्याग्रे शिखण्डिनं पुरस्कृत्येत्यर्थः धाम तेजः प्रथयता तथा भ्राजिष्णुना शोभमानेन ईदृशेन जिष्णुना अर्जुनेन नीलेन सलिलभारश्यामलेनाम्बुमुचा दावदहन इव सेनापतिर्भीष्मः सद्यः पातितः शरशतनिचितो रणाङ्गणे निपातितः। तारान्वयस्येत्यत्र रामानुजस्येति क्वचित् पाठस्तत्र पूर्वत्र लक्ष्मणस्य उत्तरत्र कृष्णस्येत्यर्थः। उपमालङ्कारः। शार्दूलविक्रीडितं वृत्तम् ॥५५॥

रणेति। तिग्मकरो लघुहस्तः स प्रहस्तः रणाङ्गनगतः सन् तावदेव प्राणान् बभार अधारयत् यावत् आग्नेयस्य अग्नितनयस्य नीलस्य पन्थाः सम्मुखम् आग्नेयपथः। ऋगादित्वादत्समासान्तः। तद्गोचरोनासीन्न बभूव यावन्नीलेन सह युद्धं न कृतं तावज्जीवित आसीत्। युद्धमाने तु नीले सद्यएव ममारेत्यर्थः एतेन नीलस्य शौर्याधिक्यं ध्वनितम्।

पक्षे रणाङ्गनगतः रणभूमौ शरशय्यामधिशयानः स भीष्मः तावदेव प्राणान् बभार यावत्तिग्मकरः सूर्यः आग्नेयोऽग्निसम्बन्धी यः पन्थाः कोण इत्यर्थः तस्माद्भवि दिशि उत्तरस्यां दिशीत्यर्थः चरतीति गोचरो नासीत् आग्नेय्या दिशः सकाशादुत्तरस्यां दिशि न गन्तुमुद्यत इत्यर्थः यावत् सूर्यस्योत्तरायणं न भवेदिति परमार्थः। "स्वर्गेषुपशुवाग्वज्रदिग्नेत्रघृणिभूजले। लक्ष्यदृष्ट्या स्त्रियां पुंसि

एवं दशाहानिधृतप्रतिज्ञः
कपिध्वजेनाहितयुद्धभीष्मः।
पतत्त्रिभिस्तीव्रमुखैरुपेतः
सवीरशय्यां चिरमध्यशेत ॥५७॥

ततो जिगीषुः प्रतिपक्षमाजौ
लङ्केश्वरः प्रागिव देवराजम्।
दध्रे धनुस्तुङ्गकिरीटमौलि-
राकल्परत्नद्युतिशोभिकर्णः ॥५८॥

गोः" इत्यमरः। यद्वा आग्नेयपथगः अग्निकोणस्थितस्तिग्मकरः यावदचरः खल्पचरो नासीत् अग्निकोणादुत्तरदिशं खल्पं गन्तुमुद्यतो न बभूवेत्यर्थः। "अशब्दः स्यादभावेऽपि खल्पार्थप्रतिषेधयोः" इति मेदिनी ॥ ५६ ॥

एवमिति। एवं दशायाः खस्य जीवनावस्थाया हानये नाशायैव धृता कृता प्रतिज्ञा एतान् अहत्वा न निवर्तिष्ये इत्यादिरूपा येन सः तथा कपिध्वजेन वानरश्रेष्ठेन नीलेन सह आहितं कृतं यद्युद्धं तत्र भीष्मो भयङ्करः ईदृशोऽपि स प्रहस्तः तीव्रमुखैस्तीक्ष्णतुण्डैः पतत्त्रिभिः तन्मांसभक्षणेच्छया आगतैः पक्षिभिरुपेतो वेष्टितः सन् वीराणां मृतयोधानां शय्यां शयनं रणभूमिमित्यर्थः। यत्रार्थोऽधिशीङादेरित्यधिकरणस्य कर्मत्वम्। चिरम् अध्यशेत अधिशयितवान्। रणभूमौ निपत्य दीर्घनिद्रां जगामेत्यर्थः।

पक्षे एवं दशाहानि दशसंख्यकदिवसान् व्याप्य धृता पालिता प्रतिज्ञा अयुतयोधवधरूपा येन सः तथा कपिध्वजेनार्जुनेन सह आहिता कृता युद्युद् येन सः। युध्यतेर्भावे क्विप् हेति पादपूरणे। तादृशः स भीष्मो गाङ्गेयः तीव्रमुखैस्तीक्ष्णाग्रैः पतत्त्रिभिर्वाणैरुपेतो निचितः सन् चिरं बहुकालं यावदुत्तरायणमित्यर्थः वीरशय्यां वीरजनोचित शयनं शरशय्यामित्यर्थः अध्यशेत ॥५७॥

तत इति। ततः प्रहस्तविनाशानन्तरं लङ्केश्वरो रावणः आजौयुद्धे प्राक् पूर्वं देवराजमिन्द्रमिव प्रतिपक्षं शत्रुं रामं जिगीषुः सन् धनुर्दध्रे धृतवान् स्वयं

स्वामिना जनितसत्क्रियेण सा
दिङ्मुखान्तरविसारितेजसा ।
दक्षिणा दिगिव कुम्भजन्मना
नाथवत्यजनि वैरिवाहिनी ॥५९॥

सजीवितग्रहणविधौ कृतोद्यमः
क्षमापतेः प्रसभमजातविद्विषः ।

योद्धुमाजगामेत्यर्थः किम्भूतः तुङ्गान्युन्नतानि किरीटानि मुकुटानि येषु तादृशा मौलयो मस्तकानि यस्य सः तथा आकल्परत्नानां नेपथ्यभूतहीरकादीनां द्युतिभिः शोभिनः कर्णौ श्रोत्राणि यस्य सः ।

पक्षे ततो भीष्मपतनानन्तरं तुङ्गकिरीटमौलिः कर्णो राधेयः प्राक् पुरा लङ्केश्वरो देवराजमिव प्रतिपक्षमर्जुनं जिगीषुः सन् आकल्परत्नद्युतिशोभि स्वस्य हस्ताभरणरत्नकान्त्या शोभमानं धनुर्दधे । पूर्वं जीवति युद्ध्यमाने भीष्मे नाहं योत्स्ये इति प्रतिज्ञातं संप्रति शरशय्यामधिशयाने तस्मिन् युद्धार्थं धनुर्जग्राहेत्यर्थः । उपमा ॥ ५८ ॥

स्वामिनेति । जनिता सत्क्रिया सम्मानं येन तथा तेन तथा दिङ्मुखान्तरविसारि दिगन्तविख्यातं तेजो यस्य तादृशेन स्वामिना रावणेन सा वैरिवाहिनी राक्षससेना कुम्भजन्मना अगस्त्येन दक्षिणा दिगिव नाथवती सनाथा अजनि तेजस्विस्वामिसत्कारेण पुनर्नवेव रिपुसेना युद्धायावस्थितेत्यर्थः ।

पक्षे स्वामिना दुर्योधनेन जनिता सत्क्रिया सैनापत्येऽभिषेकादिर्यस्य स तथा तेन कुम्भजन्मना कुम्भयोनिना द्रोणेन । "कुम्भयोनिरगस्त्ये स्याद्वशिष्ठद्रोणयोः पुमान्" इति मेदिनी । दक्षिणा दिगिव सा वैरिवाहिनी नाथवत्यजनि । भीष्मपतनानन्तरं दुर्योधनेन द्रोणः सेनापतिः कृत इत्यर्थः । कर्णः सेनापतिः कृत इति केषाञ्चिद्व्याख्यानं भारतानवलोकनविजृम्भितं, कुम्भजन्मनेति श्लिष्टं पदं यथा कुम्भजन्मना अगस्त्येन दक्षिणा दिक् सनाथा तथा कुम्भजन्मना द्रोणेन वैरिवाहिनीत्युपमा श्लेषानुप्राणिता । अन्यत्तुल्यम् । रथोद्धता वृत्तम् ॥ ५९ ॥

ससम्भ्रमोच्छलितपयोधिडम्बरैः
स्वमण्डलैः परबलमभ्यवर्तत ॥६०॥
स सङ्गरे नरेन्द्रस्य विजयं प्रतिसन्दधे।
वसन्ते कामदेवस्य शीतरश्मेरिवोदयः ॥६१॥

इति राघवपाण्डवीये महाकाव्ये अष्टमः सर्गः।

स इति। स रावणः अजातविद्विषः अन्याय्याचरणाभावेनानुत्पन्नशत्रोरपि क्षमापते राज्ञो रामस्य प्रसभं बलेन जीवितग्रहणविधौ जीवनग्रहणकर्मणि वधकर्मणीत्यर्थः कृतोद्यमः कृतयत्नः सन् ससम्भ्रमाणि सत्वराणि तथा उच्छलितस्य अतिक्रान्तवेलस्य पयोधेरिव डम्बरं वेगचापल्यं येषां तानि चेत्यनयोर्विशेषणसमासः ईदृशैः स्वमण्डलैर्निजसैन्यवृन्दैः कृत्वा परबलं रामसैन्यम् अभिलक्षीकृत्य अवर्तत रामसैन्यसम्मुखं जगामेत्यर्थः।

पक्षे स द्रोणः अजातविद्विषः क्षमापतेर्युधिष्ठिरस्य भूपतेर्जीवितग्रहणविधौ जीवितस्य जीवनवतो ग्रहणकर्मणि। अगमकत्वेऽपि प्रणतस्य जनप्रियामित्यादिवत् समासः। कृतोद्यमः जीवन्तं युधिष्ठिरं ग्रहीष्यामीति कृतप्रतिज्ञः सन्। शेषं तुल्यम्। रुचिरावृत्तम् ॥ ६० ॥

स इति। स रावणः पक्षे द्रोणः सङ्गरे युद्धे नरेन्द्रस्य रामस्य पक्षे युधिष्ठिरस्य यो विजयस्तत्कर्मकपराजयस्तं प्रतिसन्दधे सन्धानं चकार। उपमयेदं द्रढयति वसन्ते काले कामदेवस्य कन्दर्पस्य विजयं प्रति कन्दर्पकर्तृकयुवजनपराजयं प्रति शीतरश्मेश्चन्द्रस्योदय इव चन्द्रोदयो यथा कामदेवस्य कामिजनविजयं प्रतिसन्धत्ते तथेत्यर्थः अथच कामदेवस्य एतत्काव्यप्रयोजकनृपतेर्विजयम् उत्कर्षं सौमनस्यमित्यर्थः प्रति शीतरश्मेरुदय इव। विजयप्रीतिमादधे इति पाठस्तु न मनोरमः। भारतपक्षे नरेन्द्रस्येति कर्तृषष्ठी वा नरेन्द्रस्य दुर्योधनस्य। उपमा ॥ ६१ ॥

इति श्रीप्रेमचन्द्रतर्कवागीशभट्टाचार्य-विरचितायां राघवपाण्डवीय-टीकायां कपाटविपाटिकाख्यायामष्टमः सर्गः ॥

## नवमः सर्गः ।

सा सेना युद्धयात्रोत्सुकसुभटमुखाध्मातशङ्खानुमूर्छ-
न्नानानिःश्वाणभेरीमुरजवररवाक्रान्तलोकान्तराला
वातव्याधूतधौतध्वजपटपटलीचुम्ब्यमानाम्बुवाहा
वाहव्यूहक्षतक्ष्मातलबहलरजोनिर्भरा निर्बभासे ॥१॥

तदनु सा भरताग्र्यवरूथिनी
धृतमहायुधयोधनिरन्तरा ।
समररङ्गतले समदोच्छल-
द्गजघटे जघटे परसैनिकैः ॥२॥

सेति । सा सेना रावणबलं पक्षे कौरवबलं निर्बभासे अतितरां शुशुभे किम्भूता युद्धयात्रायां युद्धार्थं गमने उत्सुका उद्युक्ता ये सुभटा वीरास्तेषां मुखैराध्माता वादिता ये शङ्खास्तान् अनु शङ्खरवस्य पश्चादित्यर्थः मूर्छन्त उज्जृम्भमाणा नाना बहुविधा ये निःश्वाणानां वाद्यभेदानां भेरीणां मुरजवराणां मृदङ्गश्रेष्ठानाञ्च रवा ध्वनयस्तैराक्रान्तं व्याप्तं लोकान्तरालं भुवनविवरं यया सा तथा वातेन व्याधूतानां कम्पितानां धौतानां क्षालितानां शुभ्राणामित्यर्थः ध्वजपटानां पताकावस्त्राणां या पटली राजी तया चुम्ब्यमाना संश्लिष्यमाणा अम्बुवाहा मेघा यया सा तथा वाहव्यूहेनाश्वसमूहेन क्षतं क्षुण्णं यत् क्ष्मातलं तस्य बहलो रजोनिर्भरो धूलिपटलं यस्यां सा । स्रग्धरावृत्तम् ॥ १ ॥

तदन्विति । तदनु तदनन्तरं धृतानि महायुधानि यैस्ताद्दशा ये योधा भटास्तैर्निरन्तरा निरवकाशा, धृतमहा धृतोत्सवा आयुधैर्योधैश्च निरन्तरेति वा, सा अग्रे भवोऽग्र्यः भरतस्य कैकेयस्याग्रो रामस्तस्य पक्षे भरतवंश्यश्रेष्ठस्य

पणवाणकशङ्खसिंहनादै-
र्बधिरीभूतनभोदिगन्तरालम् ।
इतरेतरसक्तवैरिवीरं
समरं सम्भृतसम्भ्रमं बभूव ॥३॥

महाहवे महितमनोरथं द्विषं
महीपतेः प्रतिमुखमिन्द्रजिद्गुरुम् ।
न्यवारयद्द्रुतमभिपत्य गोपतेः
शरीरजो भुजधृततुङ्गगोत्रधूः ॥४॥

युधिष्ठिरस्य वरूथिनी सेना समदा मत्ता उच्छलन्ती वल्गन्ती गजघटा हस्तिवृन्दं यत्र तादृशे समर एव रङ्गो नाट्यभूमिस्तस्य तले परसैनिकैः शत्रुबलैर्जघटे मिलिता । अत्र समररङ्गेति निरङ्गरूपकं, जघटे जघटे इति यमकं तदनयोः संसृष्टिः । समदोच्छलद्गजघटैरिति पाठस्तु न मनोरमः । द्रुतविलम्बितं वृत्तं, "द्रुतविलम्बितमाह नभौ भरौ" इति लक्षणात् ॥ २ ॥

पणवेति । पणवा वाद्यभेदा आणकाः पटहाः शङ्खाश्च । लक्षणया पणवादिशब्दा उपलक्ष्यन्ते । सिंहनादाः सिंहवद्वीराणां नादाश्च तेषां द्वन्द्वः । तैर्बधिरीभूतानि नभो गगनं दिगन्तरालानि दिङ्मध्यानि च बधिरत्वसम्बन्धाभावान्नभआदिप्राणिषु लक्षणा । यत्र तत् । तथा इतरेतरसक्ताः परस्परं युद्धसक्ता वैरिवीरा यत्र तत् । तथा सम्भृतो धृतः सम्भ्रम आवेग आदरो वा यत्र तत् तादृशं समरं बभूव । वैतालीयभेद औपच्छन्दसकं वृत्तं लक्षणमुक्तं प्राक् ॥ ३ ॥

महाहव इति । महाहवे महासंग्रामे गवां किरणानां पतिः सूर्यस्तस्य शरीरजः पुत्रः सुग्रीवः भुजाभ्यां धृता तुङ्गा उच्चा गोत्रस्य पर्वतस्य धूर्भारः [illegible] येन तादृशः सन् । "धूर्वानमुखभारयोः" इति हेमचन्द्रः । ते [illegible] इति समासान्ताभावः । द्रुतमभिपत्यागत्य महितं पूजितं सन्तुष्ट-[illegible] मनो यत्र तादृशो रथो यस्य तं यद्वा अमहितो दुष्टो मनोरथो राम-

हरिप्रणेतारमुदूढबाणं
महीगतं भानुमिव स्फुरन्तम् ।
जित्वा स वीरानितरामरौत्सी-
दाकाशकुक्षिम्भरिभिः पृषत्कैः ॥५॥
किरीटिनः स्यन्दनकेतुमौलिं
क्रान्त्वा नदन्तं कपिसैन्यनाथम् ।

जिघांसारूपो यस्य तम् अतएव महीपते रामस्य प्रतिमुखं सम्मुखागतं द्विषं द्वेष्टारम् इन्द्रजितो मेघनादस्य गुरुं पितरं रावणं न्यवारयत् निवारितवान् ।

पक्षे भुजेन धृता तुङ्गा महती गोत्रस्य वंशस्य धूर्येन सः तथा इन्द्रजित् खाण्डवदाहे इन्द्रविजयी गोपतेः स्वर्गपतेरिन्द्रस्य शरीरजोऽर्जुनः महाद्युतेः महीपतेर्युधिष्ठिरस्य अमहिते असत्कारे ग्रहणे इत्यर्थः मनोरथो यस्य सः अत-एव तस्यैव द्विषं प्रतिमुखस्य गुरुं कौरवाचार्यं द्रोणं द्रुतमभिपत्य न्यवारयत् । "द्रोणस्तु गुरुराचार्य" इति त्रिकाण्डशेषः । रुचिरावृत्तम् ॥४॥

हरीति । स रावणः आकाशकुक्षिम्भरिभिराकाशोदरपूरकैः पृषत्कै-र्बाणैः कृत्वा वीरान् वानरयोधान् जित्वा । क्वचिच्छित्त्वेति पाठः । उदूढबाणं गृहीतबाणाख्यवृक्षं । "बाणो वृक्षविशेषे स्याच्छरस्यावयवे शरे" इति हेम-चन्द्रः । तथा महीगतं भूतलागतं भानुमिव सूर्यमिवेत्युत्प्रेक्षा, स्फुरन्तं तेजसा ज्वलन्तं हरीणां वानराणां प्रणेतारं नायकं सुग्रीवं नितरामत्यर्थम् अरौत्सीत् रुरोध । महीगतं गाढप्रहारेण भूमौ पतितं हरिप्रणेतारं जित्वा वीरानरौत्सीदिति वा ।

पक्षे स द्रोणः वीरान् पाण्डवयोधान् जित्वा उदूढबाणं गृहीतशरं शो-भमानमित्यर्थः हरिः कृष्णः प्रणेता सारथिर्यस्य तमर्जुनम् अरौत्सीत् । शिष्टं समानम् ॥५॥

किरीटिन इति । स्यन्दनस्य रावणरथस्य केतुमौलिं ध्वजाग्रं क्रान्त्वा आक्रम्य नदन्तं शब्दं कुर्वन्तं कपिसैन्यनाथं नीलम् । सुग्रीवमिति केचित् तन्न रामायणविरोधात् । दृष्ट्वा विनेतुमिच्छोः शमयितुकामस्य किरीटिनः

दृष्ट्वा विपक्षस्य विनेतुमिच्छो-
र्नेत्राणि रोषादरुणत्वमापुः ॥६॥

व्याक्षिप्तारातिरक्षोबलपतिरभितः संयुगं वर्तयित्वा
किञ्चिद्दोर्दण्डकण्डूः कृतशमनविधिर्मारुतेर्विक्रमेण।
वाञ्छाभङ्गे किरीटापनय इव कृते गोपतेर्नन्दनेन
प्राप प्राप्ते क्षपायास्तिमिरमुचि मुखे सानुयातो निवेशम्
॥७॥

किरीटवतः उन्नतशीर्षस्येत्यर्थः तत एव ध्वजाग्राक्रमणापमानात् कोप इति भावः। विपक्षस्य रावणस्य नेत्राणि चक्षूंषि रोषात् अरुणत्वं लौहित्यं आपुः।

पक्षे किरीटिनोऽर्जुनस्य स्यन्दनकेतुमौलिं क्रान्त्वा अधिष्ठाय नदन्तं कपि-सैन्यनाथं हनूमन्तं दृष्ट्वा विनेतुमिच्छोर्विपक्षस्य दुर्योधनस्य नेत्राणि नेतारः सेनापतय इत्यर्थः। "नेत्रं पथि गुणे वस्तुभेदे मूले द्रुमस्य च। रथे चक्षुषि नद्यान्तु नेत्री नेतरि वाच्यवत्" इति मेदिनी। विशेष्यानुपादानात् क्लीवत्वम्। रोषादरुणत्वमापुः रक्ताङ्गा बभूवुः। एतत्पक्षेऽपि नेत्राणि चक्षूंषीति केचित् तत्र बहुत्वोपपत्तिरनुयोक्तव्या ॥६॥

व्याक्षिप्तेति। व्याक्षिप्ताः पूर्वं विशेषेण निरस्ता अरातयो यैस्तादृशानां रक्षोबलानां राक्षससैन्यानां पती रावणः अभितः समन्तात् संयुगं युद्धं वर्तयित्वा सुग्रीवनीललक्ष्मणादिभिः सह युद्धं कृत्वेत्यर्थः मारुतेर्हनूमतो विक्रमेण कर्त्रा दोर्दण्डानां भुजपरिघाणां कण्डूः कण्डूतिः किञ्चित् कृतः शमनविधिः शान्तिर्यस्य तादृशः सन्। अगमकत्वेऽपि नित्यसापेक्षत्वात् समासः। हनू-मत्तलप्रहारेण मूर्च्छितो भूत्वेत्यर्थः अनन्तरं गोपतेर्भूपतेर्दशरथस्य नन्दनेन पुत्रेण रामेण वाञ्छाया मूर्च्छितलक्ष्मणापहरणेच्छाया भङ्गे इव किरीटस्य मुकुटस्य अपनये छेदे कृते सति पूर्वोक्तवाञ्छाभङ्गे किरीटापनये च कृते सतीत्यर्थः। हंसश्चन्द्र इवाभाति जलं व्योमतलं यथेतिवत् द्वयोरपि प्रकृतत्वम्। तिमिरमुचि अन्धकारवर्षिणि क्षपाया रात्रेर्मुखे उपक्रमे सन्ध्यासमये इत्यर्थः

रचितं नरदेवजन्मनाजौ
मुकुटस्येव मनोरथस्य भङ्गम् ।
परिभावयतो न शर्म राज्ञो
निशि जज्ञे धृतराष्ट्रनन्दनस्य ॥८॥

सानुयात्रः सानुचरः सन् निवेशं लङ्कानिलयं प्राप जगाम प्रथमं सुग्रीवादिभिर्युद्धं कृत्वा शक्तिप्रहारेण लक्ष्मणं मूर्च्छयित्वा तमपजिहीर्षूरावणो हनूमत्तलप्रहारेण विह्वलितो रामेण च छिन्नमुकुटः सन् सन्ध्यायां लङ्कां प्रविवेशेत्यर्थः ।

पक्षे व्याक्षिप्ता इतरेभ्यः कृता अरातीनां दुर्योधनादीनां रक्षा येन स बलपतिर्द्रोणः अभितः संयुगं वर्तयित्वा मारुतेर्भीमस्य विक्रमेण दोर्दण्डकण्डूः किञ्चित्कृतशमनविधिः सन् भीमेन सह युद्ध्वा किञ्चित् परिश्रान्तः सन्नित्यर्थः, ततश्च गोपतेः स्वर्गपतेरिन्द्रस्य नन्दनेनार्जुनेन किरीटापनय इव किरीटापनयनवदपमानबोधके वाञ्छाभङ्गे युधिष्ठिरग्रहणेच्छाविगमे कृते सति क्षपाया मुखे निवेशं शिबिरं प्राप । शेषं समानम् । उभयत्राप्युपमा । स्रग्धरावृत्तम् ॥७॥

रचितमिति । आजौ युद्धे नरदेवजन्मना रामेण रचितं कृतं मनोरथस्येव साक्षादभिलाषस्येव मुकुटस्य भङ्गं निशि रात्रौ परिभावयतश्चिन्तयतः, तथा अधृतम् अकृतं राष्ट्राणां राज्यानां नन्दनमानन्दो येन तस्य भुवनोद्वेजकस्येत्यर्थः एतावत्कालपर्यन्तं केवलं मया जनाः क्लेशिता नतु सन्तोषिता इत्यपि भावयत इति यावत् राज्ञो रावणस्य शर्म सुखं न जज्ञे न बभूव धृतमवधृतं राष्ट्रं राज्यकार्यं येन तादृशो नन्दनः पुत्र इन्द्रजित् यस्य स तथा तस्य येऽग्यवीरपुत्रवतोऽपीत्यर्थ इति वा ।

पक्षे, नरदेवजन्मना अर्जुनेन आजौ रचितं मुकुटस्येव मनोरथस्य युधिष्ठिरग्रहणाभिलाषरूपस्य भङ्गं परिभावयतो धृतराष्ट्रनन्दनस्य धृतराष्ट्रपुत्रस्य राज्ञो दुर्योधनस्य निशि शर्म न जज्ञे अर्जुनविक्रमं स्मृत्वा भावनया निदद्रावित्यर्थः । अत्र मनोरथमुकुटभङ्गयोरन्यतरस्य पक्षद्वये सम्भाव्यमानत्वादुत्प्रेक्षा । औपच्छन्दसकं वृत्तं, लक्षणमुक्तं प्राक् ॥ ८ ॥

आगामियुद्धे विजयानुबन्धि
संकल्प्य संसप्तकयोधवृन्दम् ।
राजा रजन्यां विरतौ रणाय
निजानुजोद्बोधनमाचचार ॥९॥

प्रातर्भूयः प्रवृत्ते समरमहमहारम्भभम्भानिनादे
सन्ध्यारागे भटानामरिरुधिरनिभे रञ्जयत्यायुधानि ।

आगामीति । राजा रावणः आगामियुद्धे भाविदिवसीयसमरे संसप्तकयोधवृन्दं समयेन संग्रामादनिवर्तिभटसमूहम् । "संसप्तकास्तु समयात् संग्रामादनिवर्तिन" इत्यमरः । विजयानुबन्धि जयजनकं संकल्प्य संसप्तकयोधवृन्देनैव श्वः शत्रुजयो भविष्यतीति निश्चित्य रजन्यां विरतौ रात्रौ प्रभातायां रणाय रणं कर्तुम् । तुमर्थात् कर्मण इति चतुर्थी । निजानुजस्य स्वभ्रातुः कुम्भकर्णस्य उद्बोधनं जागरणम् आचचार कारयामास । संसप्तकयुद्धं रामायणेऽवर्णितमपि नासङ्गतमिति ध्येयम् ।

पक्षे, राजा दुर्योधनः आगामियुद्धे संसप्तकयोधवृन्दं सुशर्मादित्रैगर्तवीरवृन्दरूपं नारायणगोपवृन्दरूपञ्च विजयस्यार्जुनस्य अनुबन्धि प्रतिरोधकं संकल्प्य कल्पयित्वा रजन्यां विरतौ रणाय निजानुजानां दुःशासनादीनाम् उद्बोधनं द्रोणसाहाय्यार्थं जागरणं, यद्वा अद्य सावधानतया सर्वैर्योद्धव्यं यथा गुरुणा युधिष्ठिरस्य ग्रहणं सुकरं भवेदिति ज्ञापनमाचचार । अयमर्थः रणाङ्गने तिष्ठत्यर्जुने युधिष्ठिरग्रहणं दुर्घटमिति द्रोणेनाभिहिते सुशर्मादिषु च वह्निं प्रज्वाल्य अर्जुनमहत्वा न प्रतिनिवर्तिष्यामहे इति कृतप्रतिज्ञेषु तैरेव रणादर्जुनाकर्षणं संकल्प्य प्रभातायामेव रजन्यां रणत्वरया दुःशासनादीनामुद्बोधनं चकारेति ॥ ९ ॥

प्रातरिति । समरमहाय युद्धोत्सवाय महान् आरम्भ उपक्रमो यस्य तादृशो यो भम्भानिनादः वाद्यानां भम्भेति ध्वनिस्तस्मिन् प्रातर्भूयः पुनः प्रवृत्ते सति तथा अरिरुधिरनिभे अरिच्छेदलग्नरक्तसदृशे सन्ध्यारागे च भटानां योधानाम् आयुधान्यस्त्राणि रञ्जयति रक्तवर्णानि कुर्वति सति वीरैः

वीरैर्वैरानुबन्धात् प्रतिभटघटनाकाङ्क्षया रुद्धमार्गा
वेकीभूतावभूतां रणरभसजितोदन्वदोघौ बलौघौ ॥१०॥

नरकभुवमथाग्रे वाहिनीनां यियासुं
पटुपटहनिनादध्वस्तनिद्रं दिनादौ ।
पतिरमररिपूणां सोदरं भर्तृभक्तेः
परिचरणविधिज्ञं प्राहिणोत् सङ्गराय ॥११॥

सप्रतिश्रुतविरोधिशासनो
वीरपाणमदघूर्णितेक्षणः ।

कर्तृभिः वैरानुबन्धाद्विरोधसम्बन्धात् प्रतिभटानां रिपुयोधानां या घटना संश्लेषस्तदाकाङ्क्षया रुद्धौमार्गौ वर्त्म ययोस्तौ तथा रणरभसेन युद्धवेगेन जितः सदृशीकृत उदन्वतः समुद्रस्य ओघः प्रवाहो याभ्यां तादृशौ बलौघौ सैन्यसमूहौ एकीभूतौ अभूतां इतरेतरं संयुक्तौ बभूवतुः । उपमयोः संसृष्टिः, अनुप्रासश्च । शार्दूलविक्रीड़ितं वृत्तम् ॥ १० ॥

नरकेति । अथानन्तरं दिनादौ प्रातःकाले अमररिपूणां दैत्यशत्रूणां पतीरावणः सोदरं भ्रातरं कुम्भकर्णं सङ्गराय युद्धाय प्राहिणोत् प्रेरयामास, किम्भूतं नरकस्य जनानां निरयस्य दुःखस्येत्यर्थः भूरुत्पत्तिर्यस्मात्तम् अकारणजनदुःखदमित्यर्थः तथा वाहिनीनां सेनानामग्रे यियासुं गन्तुमिच्छुं तथा पटवः कठोरा ये पटहानां वाद्यभेदानां निनादास्तैर्ध्वस्ता निद्रा यस्य तं तथा भर्तरि रावणे या भक्तिस्तस्या यः परिचरणविधिः पालनं तं जानाति इति तादृशम् ।

पक्षे सः अमररिपूणां पतिर्दुर्योधनः पटुपटहनिनादेन ध्वस्ता निद्रा योधानां युद्धालस्यं यत्र तद्यथा तथा अदरं दरो भयं तद्रहितम् । "दरः स्याद्भयगर्तयोः" इति हेमचन्द्रः । नरकभुवं नरकासुरपुत्रं भगदत्तनामकं प्राग्ज्योतिषेश्वरं सङ्गराय प्राहिणोत् । शेषं समानम् । मालिनीवृत्तम् ॥ ११ ॥

स इति । स कुम्भकर्णः पक्षे भगदत्तः परमण्डलं शत्रुसैन्यं प्रति उच्चचार

उच्चचार परमण्डलं प्रति
प्रांशुकायपिहितैकदिङ्मुखः ॥१२॥
तं सुप्रतीकेन सुरद्विपेन
समं समीकाजिरमापतन्तम्।
किरीटकोटिस्खलितार्कविम्बं
द्रष्टुं न शेकुर्युधि वा नरेन्द्राः ॥१३॥

जगाम किम्भूतः प्रतिश्रुतमङ्गीकृतं विरोधिनो रामस्य पक्षे युधिष्ठिरस्य शासनं शास्तिर्येन सः, यद्वा प्रतिश्रुतं गृहीतं विरोधिनो रावणस्य पक्षे दुर्योधनस्य शासनमाज्ञा येन सः। "शासनं राजदत्तोर्व्यां लेख्याज्ञाशास्त्रशास्तिषु" इति मेदिनी। तथा वीरपाणं भूते भाविनि वा रणे यद्वीरकर्तृकमद्यादिपानम् प्रकृते भाविनि रणे यत्पानं तज्जनितो यो मदो मत्तता तेन घूर्णिते ईक्षणे चक्षुषी यस्य सः। "वीरपाणन्तु यत्पानं वृत्ते भाविनि वा रणे" इत्यमरः। तथा प्रांशुर्महान् यः कायो देहस्तेन पिहितमाच्छादितं एकस्या दिशो मुखम् साम्मुख्यं येन सः। रथोद्धता वृत्तम् ॥ १२ ॥

तमिति। वानरेन्द्राः सुग्रीवादयः सुप्रतीकेन सुप्रतीकनाम्ना सुरद्विपेन ईशानदिग्गजेन समं सदृशं तद्वत् स्थूलमित्यर्थः तथा किरीटकोटौ मुकुटाग्रे स्खलितं लग्नम् अर्कविम्बं सूर्यमण्डलं यस्य तम् अत्युच्चमित्यर्थः समीकाजिरं रणाङ्गनमापतन्तम् अवतरन्तं तं कुम्भकर्णं युधियुद्धे द्रष्टुं न शेकुः किमुत तेन योद्धुमिति भावः कुम्भकर्णशरीरं दृष्ट्वा सर्वे सभया जाता इत्यर्थः।

पक्षे वेति पादपूरणे समुच्चये वा नरेन्द्रा राजानः सुप्रतीकेन शोभनाङ्गेन "सुप्रतीकः शोभनाङ्गे भवेदीशानदिग्गजे" इति मेदिनी। सुरद्विपेन सुरगजवंशोत्पन्नहस्तिना समं सह समीकाजिरमापतन्तं तथा किरीटकोटौस्खलितं प्रतिविम्बितं अर्कविम्बं यस्य तं महार्घमणिमयमुकुटं धारयन्तमित्यर्थः तं भगदत्तं युधि द्रष्टुमपि न शेकुः नरकासुरप्राप्तनारायणास्त्रेणाजेयं तं दृष्ट्वा सर्वे व्यथिता बभूवुरित्यर्थः ॥१३॥

सन्नद्धे भगदत्तशङ्खनिनदत्रस्यत्त्रिलोके बले
ताम्यद्दिक्करिकुम्भकर्णपृतनाप्रारब्धकोलाहले ।
तीक्ष्णद्रोणपतत्त्रिपीतसुभगप्रत्यग्ररक्तासवं
प्रावर्तिष्ट दिवोऽतिथीकृतमहायोधं महायोधनम् ॥१४॥
हेलानिक्षिप्तपृथ्वीभरसरलभुजङ्गेन्द्रभोगानुकारि
प्रौढोदञ्चत्करेण प्रलयपरिणतश्यामजीमूतभासा ।

सन्नद्ध इति । बले राक्षससैन्ये सन्नद्धाः कृतसन्नाहा युद्धोद्यता वा ये इभगा हस्त्यारोहिणस्तैर्दत्तो कृतो यः शङ्खनिनदस्तेन त्रसन्तस्त्रासं प्राप्नुवन्तस्त्रि-संख्यका लोका भुवनानि त्रिलोका यस्मात् तस्मिन् । त्रिलोकेति संज्ञायामेव संख्यापूर्वककर्मधारयनियमादत्रशाकपार्थिवादित्वात् समासः । तथा ताम्यन्तः क्लान्तिं गच्छन्तो दिक्करिण ऐरावतादयो यत्र तद्यथा तथा कुम्भकर्णस्य पृतनया सेनया प्रारब्धः कोलाहलः कलकलो यत्र तादृशे च सति तीक्ष्णा भयदा ये द्रोणपतत्त्रिणः काकपक्षिभेदास्तैः पीतः सुभगः स्वादुः प्रत्यग्रः सद्यः-क्षरितो रक्तमेवासवो यत्र तत् । "द्रोणः पार्थगुरौ काके" इति हेमचन्द्रः । तथा दिवः स्वर्गस्य अतिथीकृताः स्वर्गं प्रेषिताः युद्धहतस्य स्वर्गप्राप्तिश्रुतेरिति भावः, महायोधा येन तादृशं महायोधनं महद्युद्धं प्रावर्तिष्ट प्रवर्ततेस्म ।

पक्षे भगदत्तस्य प्राग्ज्योतिषेश्वरस्य शङ्खनिनदेन त्रसन्त स्त्रिलोका यस्मात् तस्मिन् तथा ताम्यन्तः स्फुटितप्राया भवन्तो दिक्करिणां कुम्भाः कुम्भरूपमर्म स्थानानि यतस्तादृशः आकस्मिकविकटशब्दश्रवणेन मर्मपीड़ाप्रादुर्भावादिति भावः । कर्णस्य राधेयस्य पृतनया सेनया प्रारब्धः कोलाहलो यस्मिन् तादृशे बले कौरवसैन्ये सन्नद्धे युद्धोद्यते सति तीक्ष्णैः शाणितैः द्रोणस्य कौरवाचार्यस्य पतत्त्रिभिर्बाणैः पीतः पीत इव क्षयित इत्यर्थः सुभगः प्रत्यग्रो रक्तासवो यत्र तादृशं महायोधनं प्रावर्तिष्ट । शेषं समानं । रक्तासवेति निरङ्गरूपकम् । शार्दूलविक्रीडितं वृत्तम् ॥१४॥

हेलेति । तेन कुम्भकर्णेन क्षितिपते रामस्य पृतना सेना कुम्भिना हस्तिना अम्भोजिनी पद्मिनीव संक्षुण्णा मर्दिता तेने चक्रे, किम्भूतेन हेलया

व्यारुग्णं क्षौणिखण्डस्थपुटितसुतलं कुर्वता पादचारं
संक्षुब्धा तेन तेने क्षितिपतिपृतना कुम्भिनाम्भोजिनीव
॥१५॥

करधृतकरवालं शातकुन्ताग्रदन्तं
गुरुतरमदवेगात्सोढगाढप्रहारम्।
अविरलगलगर्जारूढपर्जन्यघोषं
धृतिरतिबलमेनं पश्यतां नश्यतिस्म ॥१६॥

लीलया निक्षिप्ता आत्मन्यारोपिता या पृथ्वी तस्या भरेण गौरवेण सरलोऽवक्रो यो भुजङ्गेन्द्रस्य शेषनागस्य भोगः शरीरं तदनुकारी तत्तुल्यः प्रौढो विकट उदञ्चन्नुन्नमितः करो हस्तः अन्यत्र शुण्डा यस्य स तथा तेन तथा प्रलये कल्पान्ते परिणतः परिपक्वः वर्षणोन्मुख इति यावत् अतएव श्यामो नीलवर्णो यो जीमूतो मेघस्तस्येव भाञ्छविर्यस्य तेन अतिकृष्णवर्णेनेत्यर्थः तथा व्यारुग्णं विशेषेण विदीर्णं यत्क्षौणिखण्डं भूभागस्तस्य स्थपुटितं विषमोन्नतीकृतं सुतलं शोभनतलं यत्र तद्यथा तथा पादचारं पादविक्षेपं कुर्वता। "स्थपुटं विषमोन्नतम्" इति हेमचन्द्रः।

पक्षे तेन भगदत्तसम्बन्धिना कुम्भिना हस्तिना क्षितिपतेर्युधिष्ठिरस्य पृतना अम्भोजिनीव संक्षुब्धा तेने। अन्यत् समानम्। उपमानां संसृष्टिः। स्रग्धरावृत्तम् ॥ १५ ॥

करेति। अतिबलं महाबलं एनं कुम्भकर्णं पक्षे भगदत्तगजं पश्यतां योधानां धृतिर्धैर्यं नश्यतिस्म एनं दृष्ट्वा सर्वे भयेन चञ्चला बभूवुरित्यर्थः किम्भूतं करेण हस्तेन धृतः करवालः खड्गो येन तं पक्षे करेण शुण्डया धृताः केषाञ्चित्करा हस्ताः केषाञ्चिद्वालाः केशाश्च येन तं तथा शातकुन्तवत् शाणितकुन्तास्त्रवत् अग्रदन्ता दन्ताग्राणि पक्षे अग्रवर्तिनौ दन्तौ यस्य तं, शातदन्ताग्रकुन्तमिति क्वचित् पाठस्तत्र शाताग्रदन्त एव कुन्तः प्रहारसाधनत्वादस्त्रविशेषो यस्य तम्। तथा गुरुतरोऽतिमहान् यो मदवेगो मत्ततोद्रेकस्तस्मात् सोढः क्षान्तो गाढप्रहारो येन तं तथा अविरलः सदाविर्भवन् यो गलगर्जः कण्ठ-

पादक्षेपैर्दशनदलनैः पुष्करस्य प्रहारै-
र्हस्तक्षिप्तैः परिघमुषलैः केवलैर्हस्तघातैः।
भ्रामं भ्रामं प्रधनपृथिवीमण्डले चण्डवेगः
शीर्णव्यूहं प्रतिवलमसौ नाशयामास तूर्णम् ॥१७॥

भ्रमद्गजानीकमपास्तपत्ति
नश्यद्धरि स्यन्दनवेपितोर्वि।
बभूव तत्कुञ्जरवेगभिन्नं
पयोरुहां वृन्दमिवारिसैन्यम् ॥१८॥

ध्वनिस्तेन आ सम्यक् रुद्धः पर्जन्यस्य ध्वनदम्बुदस्य घोषो गर्जितं येन तम्। "पर्जन्योऽम्बुदशब्दे स्यात् ध्वनदम्बुदशक्रयोः" इति मेदिनी। मालिनीवृत्तम् ॥ १६ ॥

पादेति। चण्डवेग उद्भटवेगवान् असौ कुम्भकर्णः पक्षे भगदत्तगजः प्रधनपृथिवीमण्डले युद्धभूमिमध्ये भ्रामं भ्रामं पुनः पुनर्भ्रमित्वा शीर्णव्यूहं विशीर्णविन्यासं प्रतिबलं शत्रुसैन्यं तूर्णं नाशयामास कैरित्याह पादक्षेपैः चरणताड़नैः तथा दशनदलनैः दन्तेन खण्डनैः तथा पुष्करस्य खड्गफलस्य पक्षे शुण्डाग्रस्य प्रहारैः। "पुष्करं करिहस्ताग्रे व्योम्नि खड्गफलेऽपि च" इति विश्वः। तथा हस्तेन भुजेन पक्षे शुण्डया क्षिप्तैः परिघैर्लोहलगुडैर्मुषलैश्च तथा केवलैरस्त्रशून्यैर्हस्तघातैश्चपेटाघातैः पक्षे शुण्डाघातैश्च। मन्दाक्रान्ता वृत्तम् ॥१७॥

भ्रमदिति। तत् अरिसैन्यं वानरबलं कुञ्जरस्य हस्तिनो वेगेन भिन्नं पयोरुहां पद्मानां वृन्दमिव बभूव कुञ्जरवेगभिन्नं पद्मवृन्दं यथा विसंष्ठुलं भवति तथेत्यर्थः किम्भूतं भ्रमत् भयभ्रान्तं गजस्य गजनामकवानरस्य अनीकं सैन्यं यत्र तत् तथा अपास्ता विक्षिप्ताः पत्तयः पदातयो यत्र तत् तथा नश्यन्तः पलायमाना हरयो वानराधिपा यत्र तत् तथा स्यन्दनेन पलायनवेगेन वेपिता कम्पिता उर्वी भूमिर्येन तत्।

पक्षे तत् अरिसैन्यं पाण्डवबलं पयोरुहां वृन्दमिव कुञ्जरस्य भगदत्तगजस्य

सुग्रीवस्तदभिमुखं निपत्य भीमः
संग्रामं स्वभुजबलोचितं विधाय।
द्राग्दैवाद्विषमदशां गतोऽपि तस्मा-
दात्मानं कथमपि मोचयाञ्चकार ॥१९॥

स कोपितो मारुतिना मनस्वी
महास्त्रजातेन रणे रिपूणाम्।
व्यूहं वृहद्बाहुबलो बिभेद
प्राग्ज्योतिषेशस्त्रिपुरं यथोग्रः ॥२०॥

वेगेन भिन्नं बभूव, किम्भूतं भग्नगजानीकं भ्रान्तहस्तिसैन्यं तथा अपास्तपत्ति तथा नश्यन्तो नाशं गच्छन्तो हरयोऽश्वा यत्र तत् तथा स्यन्दनैः पातितैरथै-र्वेपिता उर्वी यत्र तत्। उपमा॥ १८॥

सुग्रीव इति। सुग्रीवो वानरेश्वरस्तस्य कुम्भकर्णस्य अभिमुखं सम्मुखं निपत्य गत्वा स्वभुजबलोचितं संग्रामं विधाय कृत्वा च भीमः शत्रुभयङ्करः सन्नपि दैवात् द्राक् झटिति विषमदशां शोचावस्थां शत्रुवश्यत्वमित्यर्थः गतोऽपि कथमपि कष्टेन तस्मात् कुम्भकर्णात् आत्मानं मोचयाञ्चकार।

पक्षे सुग्रीवः शोभनग्रीवावान् वीरलक्षणान्वित इत्यर्थः भीमो वृकोदरः तस्य भगदत्तगजस्याभिमुखं निपत्य तस्माद्भगदत्तगजात्। शेषं समानम्। प्रहर्षिणी-वृत्तम् ॥ १९ ॥

स इति। मनस्वी मानी तथा वृहन्महद्बाह्वोर्बलं यस्य तादृशः स कुम्भकर्णः मारुतिना हनूमता कोपितः क्रोधितः सन् रणे महास्त्राणां जातेन समूहेन कृत्वा, जालेति क्वचित्पाठः अर्थस्तु स एव, रिपूणां वानराणां व्यूहं बल-विन्यासम् ईशः सर्वेषामीश्वरः उग्रः शिवः यद्वा ईशः शिव उग्रो भयङ्करः सन् प्राक् पूर्वं ज्योतिषा शस्त्राग्निना त्रिपुरं यथा मयदानवकृतगगनगतपुरत्रयमिव बिभेद ध्वंसयामास, शिवो यथा शस्त्राग्निना त्रिपुरं ददाह तथायमस्त्रजातेन व्यूहं बिभेदेत्यर्थः। प्राक् प्रथमं ज्योतिस्तेजोबलमिति यावत् यस्य तेन मारुति-नेति वा प्राक् ज्योतिर्वह्निकर्णोऽग्नो यस्मात्तेनास्त्रजातेनेति वा।

संसप्तकानां द्विषतां वधाय
निबद्धकक्षः प्रतिपक्षभिन्नम् ।
दूरं विसर्पद्विजयः स्वसैन्यं
दृष्ट्वा तमायात्तरसाभिरामः ॥२१॥

अथ सुररिपुराजपुत्रयो-
स्त्रिभुवनविस्मयनीयकर्मणोः ।
समजनि समरोत्सवस्तदानीं
ज्वलदमलास्त्रनिरन्तराम्बरान्तः ॥२२॥

पक्षे मारुतिना भीमेन कोपितः सः प्रसिद्धः प्राग्ज्योतिषस्य कामरूपप्रदेशस्य ईशो राजा भगदत्तः उग्रः शिवस्त्रिपुरं यथा त्रिपुरमिव अस्त्रजातेन रिपूणां युधिष्ठिरादीनां व्यूहं बिभेद । अन्यत् समानम् । उपमेयं श्रौती ॥२०॥

संसप्तकानामिति । संसप्तकानां समयेन संग्रामादनिवर्तिनां द्विषतां राक्षसानां वधाय व्रधं कर्तुं निबद्धा कक्षा परिधानाञ्चलं येन सः । "कक्षा स्यादन्तरीयस्य पश्चादञ्चलपल्लवे" इति मेदिनी । बद्धपरिकर इत्यर्थः व्यापृत इति यावत् तथा दूरं विसर्पन् दूरे वर्तमानो विजयो विशिष्टजयो यस्य सः बहूनां राक्षसवीराणां वर्तमानत्वादिति भावः तादृशो रामो दाशरथिः प्रतिपक्षेण शत्रुणा कुम्भकर्णेन भिन्नं ग्रस्तं विदारितं वा स्वस्य सैन्यं दृष्ट्वा तं प्रतिपक्षम् अभि लक्षीकृत्य तरसा बलेनायात् आजगाम ममैव वध्योऽयमिति मत्वा कुम्भकर्णसमीपमागच्छदित्यर्थः ।

पक्षे संसप्तकानां सुशर्मप्रधानानां द्विषतां वधाय निबद्धकक्षः तैः सह युध्यमान इत्यर्थः तथा तरसा बलेन अभिरामः सुन्दरः अतिबलवानित्यर्थः विजयोऽर्जुनः प्रतिपक्षेण भगदत्तेन भिन्नम् अतएव दूरं विसर्पन् पलायमानं स्वसैन्यं दृष्ट्वा तं भगदत्तम् आयात् प्राप वरान् वरान् संसप्तकान् हत्वेति शेषः ॥ २१ ॥

अथेति । अथ रामस्यागमनानन्तरं त्रिभुवनेषु विस्मयनीयानि अद्भुतत्वप्रकारकबुद्धिविषयीभवन्ति कर्माणि ययोस्तौ तथा तयोः सुररिपुः कुम्भकर्णश्च

अत्रान्तरे मुक्तमनेन रौद्रं
शूलं यथा वैष्णवमस्त्रमुग्रम्।
हरिर्मरुत्प्रीतिकरोन्यगृह्णात्
यशोमयी स्रक् तदभूदमुष्य ॥२३॥

राजपुत्रो रामश्च तयोः तदानीं ज्वलद्भिरमलैः शाणितैरस्त्रैर्निरन्तरमवकाश-रहितं व्याप्तमित्यर्थः अम्बरस्याकाशस्यान्तर्मध्यं यत्र तादृशः समरोत्सवः युद्धरूप उत्सवः, युद्धप्रियाः खलुवीरा इति भावः, समजनि बभूव।

पक्षे अथार्जुनागमनानन्तरं सुररिपुर्नरकासुरः राजा पाण्डुः तयोः पुत्रयोर्भगदत्तार्जुनयोः। शेषं समानम्। सुररिपुर्भगदत्तः राजपुत्रोर्जुन इति वा भगदत्तस्येन्द्रसखत्वेऽपि असुरोत्पन्नत्वात् सुररिपुत्वमेव अतएव भगवद्वाक्यम्। "विमुक्तं परमास्त्रेण जहि पार्थ महासुरम्। वैरिणं युधि दुर्धर्षं भगदत्तं सुरद्विषम्" इति। अत्र पूर्वार्द्धे वैतालीयस्योत्तरार्द्धे पुष्पिताग्रायाश्च लक्षणाक्रान्तत्वादपरवक्त्रकं वृत्तं, 'वैतालीयं पुष्पिताग्राश्चेच्छन्त्यपरवक्त्रकम्' इति लक्षणात् ॥ २२ ॥

अत्रान्तर इति। अत्रान्तरे एतस्मिन्नवकाशे मरुतां देवानां प्रीतिकरः देवशत्रुदमनात् सन्तोषको हरिर्वानरः सुग्रीवः अनेन कुम्भकर्णेन मुक्तं क्षिप्तम् उग्रं विषमं वैष्णवम् अस्त्रं यथा नारायणास्त्रमिव रौद्रं भयङ्करं शूलं न्यगृह्णात् निगृहीतवान् गृहीत्वा बभञ्जेत्यर्थः तत् शूलभञ्जनरूपं कर्म अमुष्य सुग्रीवस्य यशोमयी कीर्त्तिप्रचुरा स्रक् मालेव अभूत् भूषणमिव बभूव शूलभञ्जनेनास्य महती कीर्तिर्बभूवेत्यर्थः।

पक्षे अनेन भगदत्तेन मुक्तम् अर्जुनवधाय प्रक्षिप्तं रौद्रं शूलं यथा शैव-त्रिशूलमिव उग्रं भयदं वैष्णवम् अस्त्रं नरकासुरात् प्राप्तं नारायणास्त्रं हरिः कृष्णः न्यगृह्णात् विफलं चकार अनेनार्जुनवधो माभूदिति विचार्य अन्यैरप्रतिकार्यस्य वैष्णवास्त्रस्य स्वयं विष्णुना प्रतिकार्यत्वात् स्ववक्षसि दधारेत्यर्थः। तत्वक्षसि धृतं वैष्णवास्त्रम् अमुष्य हरेर्यशोमयी कीर्तिकरी स्रक् मालेव अपीड़ाकरी अभूत् वक्षसि धारणेनास्य पीड़ा न जाता कीर्तिश्च बभूवेत्यर्थः। शेषं समानम्। तत् स्रगभूदिति रूपकम् ॥ २३ ॥

तस्य वानरसिंहस्य शिलीमुखनखावलिः ।
रिपुकुञ्जरगात्रेषु निपपात निरन्तरम् ॥२४॥
अथायं कामरूपेशः कुपितो हरिकर्मणा ।
यत्नेन महता भूयो युयुधे राजसूनुना ॥२५॥

तस्येति। तस्य वानरसिंहस्य वानरश्रेष्ठस्य सुग्रीवस्य शिलाप्रहारेण मूर्च्छयित्वा कुम्भकर्णेन लङ्कां प्रति नीयमानस्येति शेषः शिलीमुखा बाणा इव ये नखास्तेषाम् आवलिः श्रेणी रिपुकुञ्जरस्य रिपुश्रेष्ठस्य कुम्भकर्णस्य कर्णनासाद्यङ्गानि नखाघातैश्छिच्छेदेत्यर्थः। वानरसिंहेति रिपुकुञ्जरेति च वृन्दारकनागकुञ्जरैः पूज्यमानस्येति कर्म्मधारयः तत्र बहुवचनस्याद्यर्थत्वात् सिंहादेरपि ग्रहणम् अतएव, "स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः। सिंह-शार्दूलनागाद्याः पुंसि श्रेष्ठार्थवाचकाः" इत्यमरः।

पक्षे वेति चार्थे तस्य च नरो नरावतारोऽर्जुनो विक्रान्तत्वात् सिंह इव स तथा तस्य। पुरुषव्याघ्रवदुपमितिसमासः। शिलीमुखा बाणा इव ते तथा पूर्ववत् समासः। तेषामावलिः रिपुकुञ्जरस्य भगदत्तहस्तिनो गात्रेषु निरन्तरं निपपात अथच सिंहस्य नखावलिः कुञ्जरस्य गात्रेषु पतत्येव। लुप्तोपमा। तस्माद नरसिंहस्येति पाठन्तु न मनोरमः सुग्रीवस्य नरत्वाभावेन रामायण-पक्षे अत्यन्तासङ्गतेः, नरसिंहस्य रामस्येति व्याख्यानमपि रामायणानवलोकन-जृम्भितं, तत्र हि सुग्रीवनखदन्ताघातेन कुम्भकर्णकर्णाद्यङ्गच्छेदस्य स्फुटं वर्णनात् ॥ २४ ॥

अथायमिति। अथानन्तरं हरेर्वानरस्य सुग्रीवस्य कर्मणा नखदन्त-करणक-स्वगात्रच्छेदनरूपकार्येण कुपितः क्रुद्धः तथा कामेनेच्छया रूपं येषां ते कामरूपा राक्षसास्तेषामीशः श्रेष्ठोऽयं कुम्भकर्णः महता यत्नेन भूयः पुनः राजसूनुना रामेण सह युयुधे, लक्ष्मणादिकं परित्यज्य रामेण सहैव युद्धं कृतवान्।

पक्षे अथायं कामरूपस्य प्रागज्योतिषदेशस्य ईशो राजा भगदत्तः हरेः कृष्णस्य कर्मणा वैष्णवास्त्रस्य मोघत्वकरणरूपेण कुपितः सन् राजसूनुनार्जुनेन

न्यञ्चद्भूचक्रभारोद्वहनपरिगतायासदिक्कुम्भिकुम्भं
सत्यस्तामरस्त्रीकरपुटपिहितोत्पक्ष्मचक्षुः सरोजम्।
अन्योन्योत्कर्षवार्ताकृतमुखमुखरैः खेचरैर्लोकपालाः
संप्राप्तं मेनिरे तं प्रतिभयमुभयोः संयुगान्तं युगान्तम्
॥२६॥

विधाय पूर्वं चतुरङ्गभङ्गं
नरप्रवीरेण विरोधिवर्यः।

सह महता यत्नेन भूयो युयुधे। अयं श्लोको बहुषु पुस्तकेषु न दृश्यते किन्तु सङ्गतत्वाद्धृतो व्याख्यातश्च ॥ २५ ॥

न्यञ्चदिति। अन्योन्यस्य परस्परस्य या उत्कर्षवार्त्ताः कुम्भकर्णोऽयं समीचीनं युध्यते नहि नहि रामोऽयं समीचीनं युध्यते इत्यादिरूपाः प्रशंसावादास्तत्र कृतानि व्यापारितानि मुखानि यैस्ते अतएव मुखरा वाचालास्ते च तेचेति विशेषणसमासः। तादृशैः खेचरैः सिद्धगन्धर्वादिभिः सह लोकपाला इन्द्रादयः उभयो रामकुम्भकर्णयोः पक्षे अर्जुनभगदत्तयोः संप्राप्तमुपस्थितं प्रतिभयं भयङ्करम्। "भयङ्करं प्रतिभयम्" इति अमरः। तं संयुगस्य युद्धस्य अन्तं स्वरूपं संयुगमेवेत्यर्थः। "अन्तः स्वरूपे निकटे" इति हेमचन्द्रः। युगान्तं प्रलयं मेनिरे किमयमाकालिकः प्रलयः संवृत्तइति मन्यन्तेस्म। किम्भूतं न्यञ्चत् रणभरेण निम्नीभवत् यद्भूचक्रं भूमण्डलं तस्य यो भारो गौरवं तस्य उद्वहने परिगतायासाः प्राप्तक्लेशाः पिष्टप्राया इत्यर्थः दिक्कुम्भिनां दिक्करिणां कुम्भा यत्र तत् तथा सद्यस्तत्क्षणं त्रस्ताः समराडम्बरदर्शनेन भीता या अमरस्त्रियः अप्सरसस्ताभिः करपुटेन कृत्वा पिहितानि तद्दर्शनकातरतया आच्छादितानि उत्पक्ष्मलानि चक्षूंषि सरोजानीव तानि यत्र तत्। अत्र दिक्करिकुम्भादीनाम् आयासाद्यसम्बन्धेऽपि तत्सम्बन्धकथनादतिशयोक्तीनां संसृष्टिस्तया च उदात्तोऽङ्गाङ्गितया सङ्कीर्यते ॥ २६ ॥

विधायेति। नरेषु मध्ये प्रवीरेण प्रकृष्टशूरेण रामेण पूर्वं प्रथमं चतुरङ्गभङ्गं कुम्भकर्णस्य चतुर्णामङ्गानां हस्तादीनां द्वयोर्हस्तयोर्द्वयोः पादयोरित्यर्थः

मत्तः करी केशरिणेव जघ्ने
मौलौ नखेनेव शिलीमुखेन ॥२७॥
स जिष्णुना सङ्गररङ्गमध्ये
विपक्षवीरः क्षिपता महास्त्रम् ।
खरः पुरस्तादिव कुम्भकर्णो
रामेण जघ्ने रणपण्डितेन ॥२८॥
नरवरशरकृत्तं तच्छिरः प्राक्शरीरा-
दपतदुरुकिरीटोद्भासि दूरस्रुतासृक् ।

भङ्गं क्रमेण छेदं विधाय कृत्वा विरोधिवर्यः शत्रुमुख्यः कुम्भकर्णः केशरिणा सिंहेन मत्तः करीव नखेनेव शिलीमुखेन बाणेन मौलौ शिरसि जघ्ने आहतः। कर्मणि लिट्। यथा सिंहेन मत्तः करी मौलौ नखेनाहन्यते तथेत्यर्थः।

पक्षे केशरिणेव सिंहवत् पराक्रान्तेन नरप्रवीरेण नरावतारेण प्रकृष्टवीरेणार्जुनेन पूर्वं चतुरङ्गस्य हस्त्याद्यङ्गचतुष्टयान्वितभगदत्तसैन्यस्य भङ्गं पराजयं विधाय। "हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयम्" इत्यमरः। विरोधिनो भगदत्तस्य वर्यं आदरणीयः वाहनभूत इत्यर्थः मत्तः करी मौलौ नखेनेव शिलीमुखेन जघ्ने। सिंहेनापि मत्तः करी मौलौ नखेनाहन्यते। उपमालङ्कारः॥ २७ ॥

सइति। जिष्णुना जयशीलेन तथा रणपण्डितेन युद्धनिपुणेन रामेण दाशरथिना महास्त्रं क्षिपता सता सङ्गरो युद्धभूमिरेव रङ्गो नाट्यालयस्तस्य मध्ये स विपक्षवीरः कुम्भकर्णः पुरस्तात् पूर्वं दण्डकारण्यवासकाले इत्यर्थः खरो राक्षसविशेष इव जघ्ने नाशयाञ्चक्रे। यथा पूर्वमनेनैव खरराक्षसो विनाशितस्तथेत्यर्थः।

पक्षे महास्त्रं क्षिपता रणपण्डितेन जिष्णुनार्जुनेन सङ्गररङ्गमध्ये खर उग्रो विपक्षवीरो भगदत्तः पुरस्तात् रामेण कुम्भकर्ण इव जघ्ने। उभयत्राप्युपमा॥ २८ ॥

नरेति। नरवरस्य रामस्य पक्षेऽर्जुनस्य शरेण कृत्तं छिन्नं तथा उरुणा

दवदहनशिखाभिर्दह्यमानं महाद्रेः
शिखरमिव सधातुस्यन्दमिन्द्रास्त्ररुग्णम् ॥२६॥

कण्ठच्छेदादुपरिविलसच्छोणिताम्भश्छटाना-
मासारेण क्षणमरुणयन्नन्तरीक्षस्य कुक्षिम्।
तत्कायोऽपि प्रसभमपतद्दूरयात्रानिमित्तं
क्षोणीदेव्या इव विरचयन् गौरवेण प्रणामम् ॥३०॥

महता किरीटेन उद्भासि उज्ज्वलं तथा दूरमत्यन्तं दूरगामि वा स्रुतं गलितम् असृक् रुधिरं यस्मात्तादृशं तस्य कुम्भकर्णस्य पक्षे भगदत्तस्य शिरः प्राक् प्रथमं शरीरात् कायात् अपतत् प्रागिति परश्लोकवर्णितकायपतनापेक्षया कायपतनात् पूर्वमित्यर्थः। शिरःपतनस्योद्भटत्वं उपमया दृढ़यति। इन्द्रस्यास्त्रेण वज्रेण रुग्णम् भग्नम् अतएव दवदहनशिखाभिः वज्रसम्पर्कजनितवनाग्निज्वालाभिर्दह्यमानं तथा सधातुस्यन्दं गलितमनःशिलादियुक्तं महाद्रेः शिखरं शृङ्गमिव। अत्र किरीटोद्भासनस्य दवदहनशिखादह्यमानत्वेन असृक्क्षरणस्य च सधातुस्यन्दत्वेन प्रतिबिम्बनम्। कुम्भकर्णशिरःपतनस्योद्भटत्वमन्यैरपि वर्णितं यथा, प्रौढ़च्छेदानुरूपोच्छलनरयमिलत्सैंहिकेयोपघात-त्रासाकृष्टाश्वतिर्यग्वलितरविरथेनारुणेनेक्ष्यमाणम्। कुर्वत् काकुत्स्थवीर्यस्तुतिमिव मरुतां कन्धरारन्ध्रभाजां भाङ्कारैर्भीमभेतन्निपतति वियतः कुम्भकर्णोत्तमाङ्गमिति। मालिनी वृत्तम् ॥ २६ ॥

कण्ठेति। कण्ठस्य गलस्य छेदात् उपरि कण्ठोर्द्ध्वाकाशे विलसन्त्य उच्छलन्त्यो याः शोणिताम्भसो रुधिरजलस्य छटाः प्रवाहास्तासामासारेण धारासम्पातेन अन्तरीक्षस्य कुक्षिं मध्यं क्षणमरुणयन् रक्तीकुर्वन् तस्य कुम्भकर्णस्य पक्षे भगदत्तस्य कायोऽपि। अपिना निरुक्तशिरःपतनसमुच्चयः। दूरे दूरदेशे लोकान्तरे इत्यर्थः या यात्रा गमनं तन्निमित्तं तदर्थं गौरवेणादरेण क्षोणी पृथिव्येव देवी तस्याः प्रणामं विरचयन्निव कुर्वन्निवेत्युत्प्रेक्षा प्रसभं तत्क्षणात् अपतत् भूम्यां पपात। अन्योऽपि दूरदेशयात्रामङ्गलाय काञ्चिद्देवीं प्रणमति। अथच गौरवेण गुरुतया अपतत्। दूरयात्रेत्यत्र वीरयात्रेति पाठस्तु न

तस्य वीरवरिष्ठस्य भ्रूभङ्गि पतितं शिरः ।
बभौ सन्ततिवात्सल्याद्धात्र्येवाङ्कनिवेशितम् ॥३१॥
सदैवतैर्वैरिनिपातहृष्टैः प्राशंसि वीरैर्नरदेववीरः ।
दर्पोद्धतं शम्बरमाजिभूमौ विजित्य राजन्निव कामदेवः
॥३२॥

## इति राघवपाण्डवीये महाकाव्ये नवमः सर्गः ।

मनोरमः, वीरयात्रा रणाय गमनमित्यर्थस्य प्रकृतानुपयोगात् । मन्दाक्रान्तावृत्तम् ॥ ३० ॥

तस्येति । वीरवरिष्ठस्य वीरश्रेष्ठस्य तस्य कुम्भकर्णस्य पक्षे भगदत्तस्य भ्रूभङ्गि भ्रुकुटिमत् रणभूम्यां पतितं शिरः सन्ततिवात्सल्यात् सन्तानप्रेम्णा धात्र्या वसुमत्या अथच जनन्या उपमात्रा वा अङ्कनिवेशितं क्रोड़स्थापितमिव सदित्युत्प्रेक्षा बभौ शुशुभे । "धात्री जनन्यामलकीवसुमत्युपमातृषु" इति मेदिनी ॥ ३१ ॥

सदैवतैरिति । नरदेववीरो रामः पक्षेऽर्जुनः वैरिणः कुम्भकर्णस्य पक्षे भगदत्तस्य निपातेन विनाशनेन हृष्टैस्तुष्टैः सदैवतैर्देववृन्दसहितैर्वीरैः प्राशंसि स्तुतः उपमयेदं समर्थयति आजिभूमौ रणभूमौ दर्पोद्धतं दर्पोद्रिक्तं शम्बरं दैत्यविशेषं विजित्य राजन् शोभमानः कामदेवः कन्दर्प इव यथा शम्बरं विनाशयन् कन्दर्पः सदैवतैर्वीरैः प्राशंसि तथेत्यर्थः । अथच आजिभूमौ समभूमौ । "आजिः क्षणौ समक्ष्मायां युधि" इति हेमचन्द्रः । दर्पोद्धतं दर्पेण धावन्तं शम्बरं मृगविशेषं विजित्य राजन् कामदेव एतत्काव्यकारयिता राजविशेष इव । "शम्बरं सलिले पुंसि मृगदैत्यविशेषयोः" इति मेदिनी । शम्बरमित्यत्र सूर्पकमिति क्वचित् पाठः तत्र सूर्पकं राजविशेषमित्यर्थः एतत्पाठे एतत्काव्यकारयिता कामदेवनृप एवोपमानं तेनैव सूर्पकराजविजयस्य प्रसिद्धेः । उपमालङ्कारः ॥ ३२ ॥

इति श्रीप्रेमचन्द्रतर्कवागीशभट्टाचार्यविरचितायां राघवपाण्डवीयटीकायां कपाटविपाटिकाख्यायां नवमः सर्गः ।

# दशमः सर्गः ।

ततो भृशं व्याकुलितान्तरात्मा
स्वपक्षघातेन विपक्षनाथः ।
प्रायुङ्क्त वीरान् पुनरेव योद्धु-
मापत्सु मुह्यन्ति न मानभाजः ॥१॥
ते राज्ञो धृतराष्ट्रस्य कुमाराः कुपिता भृशम् ।
रक्षःपुरोगमाश्चेलुर्दृढ़शासनकारिणः ॥२॥

तत इति । विपक्षनाथो रावणः पक्षे दुर्योधनः ततस्तदनन्तरं स्वपक्षस्य कुम्भकर्णस्य पक्षे भगदत्तस्य घातेन वधेन व्याकुलितः क्षुब्धोऽन्तरात्मा मनो यस्य तादृशः सन् पुनरेव योद्धुं वीरान् देवान्तकनरान्तकत्रिशिरोऽतिकायान् स्वपुत्रान् स्वभ्रातरौ महोदरमहापार्श्वौ च पक्षे द्रोणादीन् प्रायुङ्क्त प्रेरयामास । कथं तर्हि रणाद्विरतो न बभूवेत्यत आह यतो मानभाजो मानिनः आपत्सु विपत्स्वपि न मुह्यन्ति मोहं न गच्छन्ति आपत्प्रतीकाराय यत्नं कुर्वन्त्येवेत्यर्थः । अत्र सामान्येन विशेषस्य समर्थनादर्थान्तरन्यासालङ्कारः ॥ १ ॥

ते इति । दृढ़मत्यन्तं शासनं शत्रूणां शास्तिं कुर्वन्तीति दृढ़शासन-कारिणः धृतं राष्ट्रं येन स तथा तस्य राज्ञो रावणस्य ते कुमारा देवान्तकादयः भृशं कुपिताः तथा रक्षांसि पुरोगमानि येषां तादृशाश्च सन्तः चेलुः समराय जग्मुः ।

पक्षे दृढं यच्छासनम् अभिमन्युवधेन शत्रूणां दमनं तत्कारिणस्तत्करिष्यन्तः तथा रक्षांसि अलम्बुषप्रभृतीनि पुरोगमानि येषां ते धृतराष्ट्रस्य आम्बिकेयस्य राज्ञस्ते कुमारा दुर्योधनादयः भृशं कुपिताः सन्तश्चेलुः । दृढ़ेत्यत्र क्वचिद्गूढ़ेति पाठस्तत्र गूढ़ं यच्छासनं रावणस्य पक्षे सेनापतेर्द्रोणस्याज्ञा तत्कारिण इत्यर्थः ॥ २ ॥

घण्टाटङ्कारघोरोड्डमरकरिघटासङ्कटक्षौणिपृष्ठं
धाटीभिर्घोटकानां झटितिखरखुरोद्भूतधूलीवितानम् ।
सान्द्राणां स्यन्दनानां ध्वजपटपटलीलीढदिक्चक्रवालं
सैन्यं सन्नद्धमासीत् पटुसुभटभुजामण्डलोद्गूर्णखड्गम् ॥३॥
आमूलादजिरस्यान्तादाचार्येण प्रवर्तितम् ।
चक्रं परबलानान्तत् पश्यतां विस्मयोऽभवत् ॥४॥

घण्टेति । सैन्यं राक्षसबलं पक्षे कौरवबलं सन्नद्धं वर्मितं युद्धोद्यतं वा आसीत् किम्भूतं घण्टानां गललग्नानां टङ्कारेण टं टमिति शब्देन घोरा भयदा तथा उड्डमरा उद्भटा या करिघटा हस्तिवृन्दं तया सङ्कटं सम्बाधं दुर्गममित्यर्थः क्षौणिपृष्ठं भूतलं यत्र तत् तथा घोटकानाम् अश्वानां धाटीभिः प्रपातैः शत्रुसम्मुखगमनैरित्यर्थः । "प्रपातस्त्वभ्यवस्कन्दो धाट्यभ्यासादनञ्च स" इति हेमचन्द्रः । समूहैरिति केचित् तत्र कोषोमृग्यः । झटिति शीघ्रं खरैस्तीक्ष्णैः खुरैरुद्भूत उत्थापितो धूलीवितानो रेणुविस्तारो यत्र तत् तथा सान्द्राणामविरलानां स्यन्दनानां रथानां ये ध्वजपटाः केतुवस्त्राणि तेषां पटल्या समूहेन लीढानि आच्छादितानि दिक्चक्रवालानि दिङ्मण्डलानि यत्र तत् तथा पटवो निपुणा ये सुभटास्तेषां भुजामण्डलेन बाहुसमूहेन उद्गूर्णा उद्यता उत्तोलिता इत्यर्थः । गुरी उद्यमे इत्यस्य रूपम् । खड्गा यत्र तत् । स्रग्धरावृत्तम् ॥ ३ ॥

आमूलादिति । अजिरस्य रणाङ्गणस्य आमूलात् मूलदेशमारभ्य आच अन्तात् अन्तदेशपर्यन्तञ्च अर्येण स्वामिना सेनापतिनेत्यर्थः । "अर्यः स्यात् स्वामिवैश्ययोः". इति मेदिनी । प्रवर्तितं व्यूहरचनया स्थापितं तत् प्रसिद्धं चक्रं सैन्यम् । "चक्रं प्रहरणे गणे । कुलालाद्युपकरणेच राष्ट्रे सैन्यरथाङ्गयोः" इति हेमचन्द्रः । पश्यतां परबलानां वानरसैन्यानां विस्मयोऽभवत् अहो अपर्याप्तं राक्षससैन्यमिति चमत्कारो बभूव ।

पक्षे अजिरस्यामूलात् आन्तात् अन्ताच्च आ आचार्येण द्रोणेन । "द्रोणस्तु गुरुराचार्य" इति त्रिकाण्डशेषः । प्रवर्तितं तत् चक्रं चक्रनामकव्यूहं पश्यतां

ततो युगान्तार्णवधीरघोषा
व्याधूतनानायुधदुर्निरीक्ष्याः ।
अभ्युद्ययुर्भीममुखा नरेन्द्र-
सेनाधिनाथाः परसैन्यवीरान् ॥५॥

नानायानभयानकं गुरुधनुर्ज्याघोषघोरं नद-
द्रक्षोराजकुमाररक्षितबहुस्कन्धं द्विषां तद्बलम् ।

परबलानां युधिष्ठिरसैन्यानां विस्मयोऽभवत् । अत्र चक्रमित्यत्र पद्ममिति क्वचित् पाठस्तत्र रामायणपक्षे पद्मं पद्मसंख्यकं राक्षससैन्यं भारतपक्षे पद्मं पद्मव्यूहमिति व्याख्यातं केनचित् तन्न रुचिकरं, रामायणे राक्षससैन्यस्य पद्म-संख्यकत्वेनानिर्द्धारणात्, भारते च अभिमन्युवधे चक्रव्यूहस्यैव वर्णितत्वात्, यथा—"चक्रव्यूहो महाराज आचार्येण प्रकल्पितः । तत्र शक्रोपमाः सर्वे राजानो विनिवेशिता" इति द्रोणपर्वण्यभिमन्युवधपर्वं ॥ ४ ॥

तत इति । ततः परसेनागमनानन्तरं नरेन्द्रस्य रामस्य सेनाधिनाथा अङ्गदादयः परसैन्यवीरान् राक्षससैन्यरूपान् शूरान् अभ्युद्ययुः आभिमुख्येन जग्मुः । किम्भूताः युगान्तार्णववत् प्रलयकालीनसमुद्रस्येव धीरो गभीरो घोषः सिंहनादो येषां ते तथा व्याधूतानि कम्पितानि यानि नानायुधानि गिरि-शृङ्गवृक्षादीनि तैः दुर्निरीक्ष्या द्रष्टुमशक्याः तथा भीमानि भ्रूभङ्गदन्तशब्दादि-भिर्भयङ्कराणि मुखानि येषां ते ।

पक्षे भीममुखा वृकोदरादयः नरेन्द्रस्य युधिष्ठिरस्य सेनाधिनाथाः परसैन्य-वीरान् दुर्योधनसैन्यशूरान् अभ्युद्ययुः । अन्यत् समानम् । युगान्तार्णवधी-रेति लुप्तोपमा ॥ ५ ॥

नानेति । कुञ्जरैर्हस्तिभिः सर इव विगाहोद्यतैर्विलोडनोद्युक्तैः पवना-त्मजप्रभृतिभिर्हनूमदादिभिः द्विषां राक्षसानां तद्बलं सैन्यम् आवव्रे रुद्धं । यथा विगाहोद्यतैः कुञ्जरैः सरो रुध्यते तथेत्यर्थः । किम्भूतं नानायानैरथादिभि-र्भयानकं तथा गुरुभिर्गभीरैर्धनुर्ज्याघोषैर्मौर्वीशब्दैर्घोरं भयदं तथा नदद्भिः

पद्मव्यूहरजोभरैः सर इव व्यापिञ्जरं कुञ्जरै-
रावव्रे पवनात्मजप्रभृतिभिर्वीरैर्विगाहोद्यतैः ॥६॥
महीमहाभारनिरासहेतु-
माकल्पमाकल्पमनल्पकीर्तेः ।
सुराङ्गनासङ्गमलाभहेतुं
संग्रामयज्ञं बलिनो वितेनुः ॥७॥

सिंहनादं कुर्वद्भिः रक्षोराजस्य रावणस्य कुमारैर्देवान्तकादिभीरचिता बहवः स्कन्धाः सैन्यव्यूहा यत्र तत् । "स्कन्धः प्रकाण्डे कायेऽंशे विज्ञानादिषु पञ्चसु । नृपे समूहे व्यूहे च" इति हेमचन्द्रः । तथा पद्मसदृशो व्यूहो बलविन्यासः पद्मव्यूहस्तस्य रजोभरैर्धूलीपटलैर्व्यापिञ्जरं पीतवर्णीकृतं, सरोऽपि पद्मव्यूहस्य पद्मसमूहस्य रजोभरैः परागसमूहैः पिञ्जरं भवति ॥

पक्षे पवनात्मजप्रभृतिभिर्भीमादिभिर्द्विषां कौरवाणां तद्बलं कुञ्जरैः सर इव आवव्रे किम्भूतं गुरोर्द्रोणस्य धनुर्ज्याघोषेण घोरं तथा नदत् रक्षोऽलम्बुषो यत्र तत् तथा राजकुमारैर्दुर्योधनपुत्रलक्ष्मणादिभीरचिता बहवः स्कन्धा द्वाराद्यंशा यत्र तत् । "द्वारस्थानेषु विन्यस्ताः कुमाराः सूर्यवर्चसः । पौत्रं तव पुरस्कृत्य लक्ष्मणं प्रियदर्शनम्" इति भारतोक्तेः । तथा पद्मसदृशो व्यूहश्चक्रव्यूहस्तस्य रजोभरैर्व्यापिञ्जरम् । अत्र पद्मव्यूहयोः सादृश्यञ्च रजस्वलत्वेन नाकारेण उक्तात् प्रमाणादिति ध्येयम् । अन्यत् समानम् । उपमा । शार्दूलविक्रीडितं वृत्तम् ॥ ६ ॥

महीति । बलिनो बलवन्तोवीराः संग्रामएव स्वर्गसाधनत्वाद्यज्ञस्तं वितेनुश्चक्रुः । किम्भूतं मह्याः पृथिव्या यो महान् भारः वीरगणकृतगौरवं तस्य निरासोऽपयानं तस्य हेतुं वीरजनक्षयकरमित्यर्थः तथा आकल्पं प्रलयकालपर्यन्तम् अनल्पाप्रभूता या कीर्तिस्तस्या आकल्पं प्रसाधनं चिरस्थायिमहाकीर्तिकरमित्यर्थः तथा सुराङ्गनानां सङ्गम आलिङ्गनं तल्लाभस्य हेतुं सम्मुखयुद्धमरणेन स्वर्गलाभादिति भावः । यज्ञोऽपि अरिष्टनिवारणेन महीभारं लघयति

द्विषां सुशर्मापनयैककर्ता
समृद्धगोपालबलप्रणोदी।
देवान्तकः प्राप्य हरेः कुमारं
विपक्षकम्पार्थमरुद्ध सैन्यैः ॥८॥

समापतन्तः प्रसभं समन्ता-
दपि द्विषच्चक्रविभेददक्षाः।
व्यूहं न भेत्तुं व्यसहन्त वीराः
पद्मं मयूखा इव शीतरश्मेः ॥९॥

अनल्पां कीर्तिं करोति प्रेत्य च स्वर्गसम्पादनेन सुराङ्गनासङ्गं जनयति। संग्रामयज्ञमिति निरङ्गरूपकम् ॥ ७ ॥

द्विषामिति। द्विषां यत् सुशर्म सुष्ठु सुखं तस्य अपनयो नाशनं तस्य एकः कर्ता कारकः तथा समृद्धं ऋद्धिमत् गां पृथ्वीं पालयतीति गोपालो राजा रावणस्तस्य बलं सैन्यं प्रणोदयितुं युद्धार्थं प्रेरयितुं शीलमस्य तादृशो देवान्तको नाम रावणपुत्रः हरेर्वालिनः कुमारम् अङ्गदं प्राप्य विपक्षस्य रामस्य कम्पार्थं भयकम्पनाय सैन्यैररुद्ध आवृणोत्।

पक्षे द्विषाम् अपनयस्य अन्याय्याचरणस्य एककर्ता तथा समृद्धं यद्गोपालबलं संसप्तकनारायणसैन्यं तस्य प्रणोदी प्रेरकः तथा देवानाम् अन्तक इव असुरांशत्वात् देवविरोधीत्यर्थः तादृशः सुशर्मा त्रिगर्ताधिपः विपक्षकं शत्रुम्। स्वार्थे कप्रत्ययः। हरेरिन्द्रस्य कुमारं पार्थमर्जुनं प्राप्य सैन्यैररुद्ध। दुर्योधनमन्त्रितेन चक्रव्यूहप्रवेशनिर्गमसमर्थमर्जुनमन्यत्र नीत्वा सैन्यैररोधीत्यर्थः ॥८॥

समापतन्त इति। प्रसभं बलेन समन्तात् सर्वतः समापतन्तो धावन्तो वीरा वानराः पक्षे भीमादयः द्विषच्चक्रस्य शत्रुसैन्यस्य विभेदे भेदने दक्षा निपुणा अपि शीतरश्मेश्चन्द्रस्य मयूखाः किरणाः पद्ममिव व्यूहं विन्यस्तबलं पक्षे चक्रव्यूहं भेत्तुं न व्यसहन्त समर्था बभूवुः। रामायणपक्षेऽतियत्नेन रक्षणात् भारतपक्षे शिवात् प्राप्तवरेण जयद्रथेन रक्षणादिति भावः। उपमा ॥९॥

तमुद्धतस्यन्दनसिन्धुराजं
व्यूहं द्विषां दुष्करभेदमन्यैः।
दृष्ट्वा सपत्नाकरणाय तस्य
न्ययुङ्क्त राजा पुरुहूतपौत्रम् ॥१०॥

स सन्निदेशं पितृसोदरस्य
संस्थाप्य मालामिव मौलिदेशे।
तूर्णं रथेनेव मनोरथेन
प्रत्यर्थिनां स्कन्धमभिप्रतस्थे ॥११॥

तमिति। राजा सुग्रीवः उद्धता उत्कटा ये स्यन्दनारथास्ते सिन्धुराजः समुद्र इव यत्र तम्। यद्वा उद्धतः स्यन्दनानां सिन्धुराणां हस्तिनाञ्च आजो गमनं यत्र तम्। "हस्ती मद्दामृगः पीलुः सिन्धुरो दीर्घमारुत" इति पुरुषोत्तमः। आजेति अज गतिक्षेपणयोरित्यस्य भावघञि रूपम्। द्विषां तं व्यूहं बलविन्यासं समूहं वा अन्यैः प्राकृतैर्दुष्करो भेदो विदारणं यस्य तादृशं दृष्ट्वा तस्य व्यूहस्य सपत्नाकरणाय पीड़नाय। पीड़ने सपत्नाड्डाप्रत्ययः। पुरुहूतस्येन्द्रस्य पौत्रं नप्तारम् अङ्गदं न्ययुङ्क्त नियुक्तवान्।

पक्षे राजा युधिष्ठिरः उद्धतं स्यन्दनं वेगेन गमनं यस्य तादृशः सिन्धुराजो जयद्रथो यत्र तादृशं तं द्विषां व्यूहं चक्रव्यूहम् अन्यैरर्जुनाभिमन्युभिन्नैर्दुष्करभेदं दुष्प्रवेशं दृष्ट्वा तस्य सपत्नाकरणाय पुरुहूतपौत्रमभिमन्युं न्ययुङ्क्त। अर्जुनस्य संसप्तकैः प्रतिरुद्धत्वात् तस्माच्छिक्षितचक्रव्यूहप्रवेशोपायमभिमन्युमेव नियुक्तवानित्यर्थः ॥ १० ॥

सइति। सोऽङ्गदः पितृसोदरस्य पितृव्यस्य सुग्रीवस्य सन्निदेशं परव्यूहं भिन्धीति आज्ञां मालामिव मौलिदेशे संस्थाप्य सादरं स्वीकृत्येत्यर्थः तूर्णं आज्ञाप्राप्त्यनन्तरमेव रथेनेव मनोरथेन जयाशया प्रत्यर्थिनां शत्रूणां स्कन्धं व्यूहम् अभिप्रतस्थे जगाम। "स्कन्धः प्रकाण्डेकायेऽंशे विज्ञानादिषु पञ्चसु। नृपे समूहे व्यूहे च" इति हेमचन्द्रः।

सबाणवंशोच्चशरासनस्फुरत्-
कराग्ररंहः कृतमार्गमग्रतः ।
जवाज्जगाहे परमण्डलं बली
सुरापगापूर इवाम्भसां निधिम् ॥१२॥

तमाशु यान्तं परचक्रमर्दं
तदानुगन्तुं व्यषहन्त नान्ये ।
द्राक् सिन्धुराजेन निरुद्धमार्गाः
पुरा हनूमन्तमिवात्मवर्ग्याः ॥१३॥

पक्षे सोऽभिमन्युः पितृसोदरस्य युधिष्ठिरस्य मनोरथेनेव रथेन। शेषं समानम्। उभयत्रापि रथेनेव मनोरथेनेत्युत्प्रेक्षा ॥ ११ ॥

सइति। स बली बलवान् अङ्गदः बाणो वृक्षभेदः वंशो वेणुयष्टिः उच्चशरासनः उच्चशरदण्डवत् सरलोऽसनवृक्षश्च तैः स्फुरत् यत् कराग्रं तस्य रंहसा वेगेन अग्रतः कृतमार्गं विहितप्रवेशपथं परमण्डलं शत्रूणां व्यूहं सुरापगाया गङ्गायाः पूरः प्रवाहोऽम्भसां निधिं समुद्रमिव जवाद्वेगाज्जगाहे विलोड़यामास।

पक्षे सोऽभिमन्युः बाणवंशो बाणवर्गः उच्चशरासनं वृहद्धनुश्च ताभ्यां स्फुरतः कराग्रस्य रंहसा कृतमार्गम्। "पुंसि वंशः कुले वेणौ पृष्ठावयववर्गयोः" इति मेदिनी। शेषं समानम्। उपमा ॥ १२ ॥

तमाश्विति। परचक्रस्य शत्रुसैन्यस्य मर्दयतीति मर्दी विनाशकः। कर्तरि डः। तं तथा आशु शीघ्रं यान्तं गच्छन्तं तमङ्गदम् अन्ये वानरास्तदा अनुगन्तुं पश्चाद्यातुं न व्यषहन्त समर्था बभूवुः। व्यषहन्तेति सिवादेरड्व्यवायेऽपीति षात्विकं षत्वम्। उपमयेदं समर्थयति पुरा सीतान्वेषणकाले सिन्धूनां नदीनां राजा सिन्धुराजः समुद्रस्तेन द्राक् तत्त्वेन निरुद्धो मार्गो येषां तादृशा आत्मवर्ग्या जाम्बवदादयो हनूमन्तमिव यथा लङ्कामाशु यान्तं हनूमन्तम् आत्मवर्ग्या अनुगन्तुं न व्यषहन्त तथेत्यर्थः।

पक्षे परस्य चक्रमर्दं चक्रव्यूहमर्दकम् आशु यान्तं व्यूहं प्रविशन्तं तमभि-

परिभ्रमत्कुञ्जरनक्रचक्रं
व्याविद्धवाजिव्रजवीचिमालम्।
विचिक्षिपे तेन विपक्षसैन्यं
मन्थाचलेनेव महार्णवाम्भः ॥१४॥

वीरान् बहून् बाहुबलेन मुख्यान्
निघ्नन्तमेनं रणवेगनिघ्नम्।
न वीक्षितुं स्म प्रभवन्त्यमित्रा
नैदाघमर्कं नभसीव भान्तम् ॥१५॥

मन्युं सिन्धुराजेन जयद्रथेन द्राक् झटिति निरुद्धमार्गाः शिववरप्राप्त्या निवारितप्रवेशा अन्ये भीमादयः पुरा सीतान्वेषणकाले आत्मवर्ग्या वानराः हनूमन्तमिव अनुगन्तुं न व्यषहन्त। वानरा अपि सिन्धुराजेन समुद्रेण निरुद्धमार्गाः ततश्चैतत्पक्षे श्लेषानुप्राणितेयमुपमा ॥ १३ ॥

परिभ्रमदिति। तेनाङ्गदेन पक्षेऽभिमन्युना मन्थाचलेन महार्णवस्याम्भ इव विपक्षस्य रावणस्य पक्षे दुर्योधनस्य सैन्यं विचिक्षिपे विलोड्यामास। किम्भूतं परिभ्रमन्त कुञ्जरा नक्रा इव ते तथा। पुरुषव्याघ्रवदुपमितिसमासः। तेषां चक्रं समूहो यत्र तत्। अन्यत्र परिभ्रमतां कुञ्जराणां जलहस्तिनां नक्राणाञ्च चक्रं यत्र तत्। तथा व्याविद्धाश्चला वाजिव्रजा घोटकसमूहा वीचिमाला तरङ्गपरम्परेव यत्र तत् अन्यत्र व्याविद्धा वाजिव्रजा जलघोटकसमूहा यत्र तादृशी वीचिमाला यत्र तत्। उपमा ॥ १४ ॥

वीरानिति। अमित्राः शत्रवः बहूननेकान् मुख्यान् श्रेष्ठान् वीरान् बाहुबलेन निघ्नन्तं मारयन्तं तथा रणवेगस्य निघ्नं वशीभूतम् एनमङ्गदं पक्षेऽभिमन्युं नभसि गगनस्य मध्ये इत्यर्थः अन्यथा तत्प्रयोगस्य वैयर्थ्यापत्तेः। भान्तं दीप्यमानं नैदाघं ग्रीष्मकालीनमर्कमिव वीक्षितुं द्रष्टुमपि न प्रभवन्ति स्म समर्था बभूवुः। उपमा ॥ १५ ॥

मातङ्गैरिव गण्डशैलललिताः सिन्दूरसान्द्रत्विषः
क्षीणाभूषणभीषणैर्भटभुजैर्वल्गद्भुजङ्गप्रभैः।
व्याकृष्टध्वजकाननाः शरधनुश्चक्रासिनक्राकुलाः
संरुद्धध्वजिनीपथा रुधिरजाः प्रोहुर्महासिन्धवः॥१६॥

विरोधिनां निकरमपोढलक्ष्मणं
वितन्वता प्रसभमनेन वैरिणः।
परःशताः समरतले निपातिताः
प्रफुल्लभूरुह इव चण्डवायुना॥१७॥

मातङ्गैरिति। रुधिरजाः रणाहतयोधरक्तजनिता महासिन्धवो महानद्यः प्रोहुः युद्धभूम्यां प्रकर्षेण वहन्ति स्म। किम्भूताः मातङ्गैर्युद्धपतितहस्तिभिर्गण्डशैलललिता इव गिरिच्युतस्थूलोपलैर्युक्ता इवेत्युत्प्रेक्षा। सिन्धुष्वपि गण्डशैलास्तिष्ठन्ति। तथा सिन्दूरेण हस्तिभूषणसिन्दूरेण सान्द्रा अतिरक्ता त्विट् कान्तिर्यासां ताः, सिन्धवोऽपि प्रावृषि रक्तजला भवन्ति, तथा भूषणैः फणमणिसदृशैरङ्गदादिभिः क्षीणा भीषणैर्भयङ्करैर्वल्गद्भुजङ्गप्रभैश्चलत्सर्पसदृशैर्भटानां योधानां भुजैश्छिन्नैर्बाहुभिः कीर्णा व्याप्ताः, सिन्धुष्वपि भुजङ्गास्तिष्ठन्ति, तथा व्याकृष्टानि वेगेनाकृष्य नीतानि ध्वजकाननानि पताकासमूहा याभिस्ताः, सिन्धवोऽपि वेगेन काननान्याकृष्य नयन्ति। तथा शरा धनूंषि चक्राणि असयश्च ते एव नक्राः कुम्भीराः ते नक्रा इवेति वा तैराकुला व्याप्ताः, सिन्धवोऽपि नक्राकुला भवन्ति। तथा संरुद्धा ध्वजिनीपथाः सेनागमनमार्गा याभिस्ताः, सिन्धवोऽपि पन्थानं रुन्धन्ति। अत्र रक्तसिन्धुषु ताात्त्विकसिन्धुव्यवहारप्रतीतेः समासोक्तिः, सा च यथायथमुत्प्रेक्षादिभिरङ्गाङ्गितया सङ्कीर्णा, तया च तुमुलः संग्रामो बभूवेति वस्तु ध्वन्यते॥१६॥

विरोधिनामिति। विरोधिनां शत्रूणां निकरं समूहम् अपोढलक्ष्मणं निरस्तचिह्नं निरस्तशोकमित्यर्थः प्रसभं बलेन वितन्वता कुर्वता अनेनाकृष्टेन समरतले युद्धाङ्गने परःशता शताधिका असंख्या इत्यर्थः वैरिणः शत्रवः

वीरवर्गैकनिर्घातं विनाशितवृहद्बलम्।
द्विषन्नरान्तकः प्राप तं दुःशासनसम्भवः ॥१८॥

यशोनिधानस्य निदानभूतं
जगत्त्रयीविस्मयनीयकीर्त्ति।
सुराङ्गनासङ्गमलाभहेतु-
स्तयोरभूत् सङ्गरकर्म भीमम् ॥१९॥

चण्डवायुना प्रबलवातेन प्रफुल्लभूरुह इव पुष्पितवृक्षा इव निपातिताः विनाश्य शायिताः।

पक्षे विरोधिनां निकरम् अपोढलक्ष्मणं लक्ष्मणो नाम दुर्योधनपुत्रस्तद्रहितं वितन्वता अनेनाभिमन्युना। शेषं समानम्। दुर्योधनपुत्रं लक्ष्मणं विनाश्य बहवोऽन्ये विनाशिता इत्यर्थः। उपमा। अत्रोपमानगतप्रफुल्लत्वदर्शनात् उपमेयवैरिषु वेशभूषणोज्ज्वलत्वविशेषणं बोध्यम् अन्यथाधिकपदत्वदोषापत्तेः। रुचिरावृत्तम् ॥ १७ ॥

वीरेति। द्विषन् शत्रुर्नरान्तको नाम दुःखेन शास्यते इति दुःशासनो-रावणस्तस्मात् सम्भवो यस्य सः रावणपुत्रः वीरवर्गे एकः केवलो निर्घातः प्रहारो यस्य तम् अतएव विनाशितं बृहद्बलं महत् सैन्यं येन तादृशं तमङ्गदं प्राप युद्धार्थमिति शेषः।

पक्षे द्विषतां नराणामन्तको यम इव दुःशासनसम्भवो दुःशासनस्य पुत्रः विनाशितो बृहद्बलो नाम अयोध्याधिपतिर्येन तादृशं तमभिमन्युं प्राप। अन्यत् समानम् ॥ १८ ॥

यश इति। तयोरङ्गदनरान्तकयोः पक्षेऽभिमन्यु-दौःशासन्योर्भीमं भयङ्करं सङ्गरकर्म युद्धकृत्यम् अभूत्। किम्भूतं यश एव निधानं निहितवस्तु तस्य निदानभूतमादिकारणरूपं तथा जगत्त्र्याखिललोकया विस्मयनीया विस्मय-जनिका। क्वचित् करणसंप्रदानयोश्चेति करणेऽनीयङ्। कीर्त्तिर्यस्मात्तत् तथा सुराङ्गनानाम् अप्सरसां सङ्गमलाभे हेतुः युद्धमृतस्य स्वर्गलाभस्मरणादिति भावः। अत्रतयोरङ्गद-दौःशासनयोस्तु तदानीं सुराङ्गनासङ्गमलाभाभावेऽपि

मिथः समानं कृतसंप्रहारौ
दिव्यैर्जनैर्व्याहृतसाधुवादौ ।
जगत्प्रतिष्ठापितशुभ्रकीर्ती
स्वस्थावभूतामचिराद्‌भौ तौ ॥२०॥

तदा सौभद्रमाकर्ण्य कुमारं निहतं परैः ।
शुशोच राजा चित्तेन व्याकुलेन दशाननः ॥२१॥

न्यायेन जयिनः पुण्यजनने कालान्तरे तल्लाभहेतुत्वमव्याहतमेव ततश्च फलोपधायकत्वं स्वरूपयोग्यत्वञ्च द्विविधमेव हेतुत्वमिह बोध्यम् ॥ १९ ॥

मिथइति। मिथः परस्परं समानं तुल्यं यथा तथा कृतः संप्रहारो याभ्यां तौ तथा दिव्यैर्जनैर्युद्धदिदृक्षयागतैः सिद्धगन्धर्वादिभिर्व्याहृत उक्तः साधुवादो ययोस्तौ तथा जगति प्रतिष्ठापिता शुभ्रा शुद्धा कीर्तिर्याभ्यां तादृशौ तौ उभौ अङ्गदनरान्तकौ पक्षेऽभिमन्युदौःशासनी अचिरात् झटिति स्वस्थौ अभूतां नरान्तकः पक्षेऽभिमन्युश्च स्वः स्वर्गे तिष्ठतीति स्वस्थः युद्धमरणात् स्वर्गस्थोऽभूत्, अङ्गदः पक्षे दौःशासनिश्च स्वस्मिन् तिष्ठतीति स्वस्थः शत्रुविनाशात् सुखितोऽभूदित्यर्थः। अङ्गदस्तलप्रहारेण नरान्तकं जघान, दौःशासनिर्गदया अभिमन्युं जघानेत्यर्थः। स्वस्थशब्दस्य स्वर्गस्थार्थकत्वपक्षे 'कादियुक्ते शषसे लुग्वा' इति विसर्जनीयलोपः ॥ २० ॥

तदेति। तदा असौ राजा दशाननो रावणः भद्रं सुन्दरं कुमारं नरान्तकं परैः शत्रुभिर्निहतम् आकर्ण्य श्रुत्वा व्याकुलेन कातरेण चित्तेन शुशोच। हा पुत्र क्वासि गत इति तं प्रति शोकं चकार।

पक्षे राजा युधिष्ठिरस्तदा सौभद्रं सुभद्रायाः पुत्रं कुमारमभिमन्युं परैर्बहुभिः शत्रुभिर्मिलित्वा निहतम् आकर्ण्य दशयाकष्टावस्थया अननं जीवनं यस्य तादृशः सन् अतिकष्टेन प्राणान् धारयन्नित्यर्थः, यद्वा दशसु दिक्षु आननं यस्य सः। आकस्मिकशोकावेगेन हि दिशो दृश्यन्ते। अतएव नैषधे, "मुखानि लोलाक्षि दिशामसंशयं दशापि शून्यानि विलोकयिष्यसि" इति। व्याकुलेन चित्तेन शुशोच ॥२१॥

विनीयमानस्य सुहृद्वचोभि-
रशान्तकोपानलधूपितस्य ।
निबद्धवैरस्य विरोधिवर्गै-
र्न स्वास्थ्यमासीत् पितुरस्य चित्ते ॥२२॥
प्रधानहेतुभूतस्य निजात्मजनिपातने ।
पराक्रमं न मम्रषे वृद्धचत्रात्मजस्य सः ॥२३॥
औद्धत्यपश्चात्कृतसिन्धुराजे
पुनः प्रतिद्वन्द्विनि वीरचक्रे ।

विनीयमानस्येति । सुहृदां वचोभिः शोकापनोदनवाक्यैर्विनीयमानस्य बोध्यमानस्यापि अशान्तः न शान्तिं गतः कोप एवानलस्तेन धूपितस्य सन्तापितस्य सुहृद्वचोभिः शोके गतेऽपि कोपेन ज्वलितस्येत्यर्थः तथा विरोधिवर्गैः शत्रुवृन्दैः सह निबद्धवैरस्य संसक्तविरोधस्य अस्य नरान्तकस्य पितू रावणस्य पक्षेऽभिमन्योः पितुरर्जुनस्य चित्ते स्वास्थ्यं सुखित्वं नासीत् अपितु दुःखमेवासीदित्यर्थः । अत्रास्वास्थ्यं प्रति द्वितीयतृतीयविशेषणयोर्हेतुत्वात् काव्यलिङ्गम् ॥ २२ ॥

प्रधानेति । स रावणः निजात्मजस्य नरान्तकस्य निपातने अङ्गदेन कृतेऽपीति शेषः, प्रधानहेतुभूतस्य मुख्यकारणरूपस्य तेनैव वानरसैनाहरणादिति भावः । वृद्धो यः क्षत्रः क्षत्रियो दशरथस्तस्यात्मजस्य रामस्य पराक्रमं शौर्यं न मम्रषे सोढ्वान् । नरान्तकेऽङ्गदेन निपातितेऽपि रामं प्रति भृशं चुकोपेत्यर्थः ।

पक्षे सोऽर्जुनः निजात्मजस्याभिमन्योर्निपातने दौःशासनिना कृतेऽपीति शेषः प्रधानहेतुभूतस्य अनेनैव शिववरप्राप्त्या व्यूहभेदोद्यतभीमादीनां निवारणादिति भावः । वृद्धक्षत्रो नाम सिन्धुपतिस्तदात्मजस्य जयद्रथस्य पराक्रमं न मम्रषे, श्वो यावदादित्यस्तपति तावज्जयद्रथो मया हन्तव्यः, अन्यथा आत्मानं घातयिष्यामीति प्रतिज्ञां चकारेत्यर्थः । अत्र पराक्रमामर्षणं प्रति भूतान्तविशेषणस्य हेतुत्वात् काव्यलिङ्गम् ॥२३॥

रणाङ्गनं प्राप नरेन्द्रसेना
प्रातर्दिवं भानुमतः प्रभेव ॥२४॥
अथातिकायस्य जयद्रथस्य
वधाय वेगेन धृतप्रतिज्ञः।
धनुर्विधुन्वन् विजयस्थवीयः
परान् सरामावरजोऽभ्ययुङ्क्त ॥२५॥

औद्धत्येति। औद्धत्येन चापल्येन पश्चात्कृतो न्यक्कृतः सहयोकृत इति यावत् सिन्धुराजः समुद्रो येन तत्तथा तस्मिन् वीरचक्रे देवान्तकादिवीरसमूहे पुनः प्रतिद्वन्द्विनि प्रतिपक्षे सति योद्धुमुद्यते सतीत्यर्थः नरेन्द्रस्य रामस्य सेना वानरबलं भानुमतः सूर्यस्य प्रभा तेजः प्रातर्दिनादौ दिवमाकाशमिव रणाङ्गनं प्राप।

पक्षे औद्धत्येन बुद्धिचापल्येन पश्चात् शकटव्यूहस्य पश्चाद्भागे शूचिव्यूहे कृतः स्थापितः सिन्धुराजो जयद्रथो येन तत्तथा तस्मिन् वीरचक्रे द्रोणादिवीरवृन्दे पुनः प्रतिद्वन्द्विनि सति प्रातः पूर्वाह्णे नरेन्द्रस्य युधिष्ठिरस्य सेना भानुमतः प्रभा दिवमिव रणाङ्गनं प्राप। औद्धत्येति कृतप्रतिज्ञे कुपितेऽर्जुने को जयद्रथं रक्षितुमीष्टे इत्यविविच्य यदस्य व्यूहपश्चाद्भागे गोपनं कृतं तदेव विपक्षवीराणां बुद्धिचापल्यरूपमौद्धत्यमिति भावः। उपमा ॥ २४ ॥

अथेति। अथानन्तरं जयन् विजयी रथो यस्य स तथा तस्य अतिकायस्य तन्नामरावणपुत्रस्य वधाय धृता कृता प्रतिज्ञा येन तादृशः स रामस्य दाशरथेरवरजः कनिष्ठो लक्ष्मणः विजये स्थवीयः स्थूलतरं धनुर्विधुन्वन् कम्पयन् सन् परान् शत्रून् वेगेन अभ्ययुङ्क्त आक्रान्तवान्।

पक्षे अथातिकायस्य स्थूलदेहस्य जयद्रथस्य तन्नामसिन्धुराजस्य वधाय वेगेन सहसा धृतप्रतिज्ञः यावत् सूर्योऽस्ताचलं न गच्छति तावत् सिन्धुराजं हनिष्यामीति प्रतिज्ञां कुर्वन् विजयोऽर्जुनः स रामावरजः रामो बलभद्रस्तस्यावरजः कृष्णस्तेन सारथिना सहितः तथा स्थवीयो बृहत् धनुर्गाण्डीवं विधुन्वन् सन् परान् अभ्ययुङ्क्त। रामावरज इत्यत्र राजावरज इति क्वचित् पाठस्तत्र

गुरुणा कृतवर्मणा स्म योधि-
प्रतिपक्षेण सुदक्षिणेन भूयः ।
स विधाय महाहवं मनस्वी
परसेनाम्बुधिमध्यमाजगाहे ॥२६॥

अकलितलघुपातं संप्रविष्टेन दूरा-
दलघु विकिरतोच्चैर्विश्वतो विक्रमाग्निम् ।
रणभुवि परचक्रं व्याकुलं तेन तेने
त्रिपुरमिव पुरस्तात् सायकेन स्मरारेः ॥२७॥

राज्ञो रामस्य पक्षे युधिष्ठिरस्येत्यर्थः । अस्मिन् पक्षे विजयोत्तरस्य विसर्गस्य कादियुक्ते इत्यादिना लोपः ॥ २५ ॥

गुरुणेति । मनस्वी मानी स लक्ष्मणः गुरुणा प्रबलेन तथा कृतवर्मणा कृतसन्नाहेन तथा सुदक्षिणेन युद्धनिपुणेन योधी युद्धं कुर्वन् यः प्रतिपक्षः शत्रू-राक्षससेनापतिस्तेन सह महाहवं महद्युद्धं भूयोऽत्यन्तं विधाय कृत्वा परसेनैव दुरवगाहत्वादम्बुधिः समुद्रस्तस्य मध्यम् आजगाहे स्म विलोडयामास । स्मेति पादपूरणे, लिटैव भूतानद्यतनकालबोधनात् ।

पक्षे स मनस्वी अर्जुनः योधिप्रतिपक्षेण युध्यमानेन शत्रुणा गुरुणा द्रोणेन कृतवर्मणा हार्दिक्येन सुदक्षिणेन काम्बोजाधिपेन च सह क्रमेण भूयो महाहवं विधाय सुदक्षिणस्य हत्वेति शेषः । सुदक्षिणवधश्च वक्ष्यमाणश्रुता-युधवधात् परं भारते वर्णितः । परसेनाम्बुधिमध्यमाजगाहे स्म जयद्रथवधत्व-रयेति शेषः । योधिप्रतिपक्षेणेति गुर्वादित्रयस्य विशेषणम् । सेनाम्बुधीति निरङ्गरूपकम् । औपच्छन्दसकं वृत्तं लक्षणमुक्तं प्राक् ॥ २६ ॥

अकलितेति । अकलितोऽनङ्गीकृतो लघुपातो मन्दगमनं यत्र तद्यथा तथा रणभुवि संप्रविष्टेन तथा अलघु अमन्दं यथा तथा दूरात् विक्रमः पौरुषत्वादग्निरिव तं विश्वतः समन्तात् विकिरता विक्षिपता दूरेस्थित्वा विक्रमेण सर्वतो बाणान् विक्षिपतेत्यर्थः तेन लक्ष्मणेन पक्षेऽर्जुनेन परचक्रं

विन्दानुविन्दप्रतियोधिभेत्ता
प्रणीतसंसप्तकजीवमोक्षः।
सुदर्शनोद्योगहरः स सद्य-
श्चकार दुर्योधनमानभङ्गम् ॥२८॥
तिरोहिताकांशुचयैस्तदीयै-
र्निवार्यमाणे विशिखैर्विपक्षे।

शत्रुसैन्यं पुरस्तात् पूर्वं स्मरारेः शिवस्य सायकेन बाणेन त्रिपुरमिव व्याकुलं कातरं तेन कृतम्। स्मरारेः सायकोऽपि द्रुतं त्रिपुरं प्रविष्टः विश्वतोऽग्निं विक्षिप्तवांश्च। उपमा। मालिनी वृत्तम् ॥ २७ ॥

विन्देति। विन्दन्ति लभन्तइति विन्दाः प्रथमं युद्धस्थानमायाताः अनुविन्दाः पश्चादायाताश्च। विन्दतेरप्रादेरिति शङ्। तादृशा ये प्रति-योधिनः प्रत्यर्थिनस्तेषां भेत्ता विदारकः तथा प्रणीतः कृतः संसप्तकानां समयेन संग्रामादनिवर्तिसैन्यानां जीवस्य मोक्षः शरीरान्मोचनं येन सः तथा सुदर्शनानां सुदृश्यानां वीराणाम् उद्योगहरः उद्यमहन्ता स लक्ष्मणः सद्यस्तत्-क्षणात् दुर्योधनानां दुःखेन योध्यमानानामपि राक्षसवीराणां मानभङ्गं चकार सम्मानं नाशयामास तान् पराजितवानित्यर्थः। यद्वा मानस्य परि-माणस्य भङ्गं सङ्कोचं चकार बहुन्नाशयामासेत्यर्थः।

पक्षे विन्दानुविन्दौ अवन्तीश्वरौ तावेव प्रतियोधिनौ तयोर्भेत्ता बिदारकः तथा सुदर्शनस्य नृपविशेषस्य उद्योगहरः तेनाप्यवारित इत्यर्थः न तु तस्य विना-शकः सात्यकिना तद्विनाशनस्याकरे वर्णनात्। सोऽर्जुनः दुर्योधनस्य मानभङ्गं पराजयेनापमानं सद्यश्चकार। द्रोणाभिमन्त्रितेनाभेद्यकवचेन वर्मितो दुर्योधनो युध्यमानोऽर्जुनेन धनुश्छेदादिना पराजित इत्यर्थः। शेषं समानम् ॥ २८ ॥

तिरोहितेति। तिरोहित आवृतोऽकांशुचयः सूर्यकिरणसमूहो यैस्तै तथा तैस्तदीयैर्लक्ष्मणसम्बन्धिभिर्विशिखैर्वाणैर्विपक्षे राक्षससैन्ये निवार्यमाणे सति हरयो वानराः श्रमं विनीय तदवकाशेन युद्धश्रममपनीय ऊर्जिते महति

श्रमं विनीयोर्जितविक्रमस्था-
रयेण चक्रुर्हरयोऽस्य हर्षम् ॥२९॥
यया जघान दुर्द्धर्षं वीराणामृषभं हरिम्।
तयैव जघ्ने गदया रणे मत्तः श्रुतायुधः ॥३०॥

विक्रमे तिष्ठन्तीति तादृशाः सन्तः रयेण पुनर्युद्धवेगेन अस्य लक्ष्मणस्य हर्षं चक्रुः।

पक्षे तिरोहितांशुमयैः-स्वदीये-रर्जुनसम्बन्धिभि-र्विशिखैर्बाणैर्विपक्षे विन्दानुविन्दादिके शत्रुसमूहे निवार्यमाणे सति हरयोऽर्जुनरथाश्वाः श्रमं विनीय अर्जुनशराघातेन उत्पन्ने सरसि जलपानादिना परिश्रममपनीय ऊर्जिते महति विक्रमे गमने तिष्ठन्तीति तादृशाः सन्तः अस्यार्जुनस्य हर्षं चक्रुः ॥ २९ ॥

ययेति। रणे मत्तः पराक्रान्तः अमत्तोऽप्रमादी वा तथा श्रुतं प्रसिद्धम् आयुधं गदाशस्त्रं यस्य स महापार्श्वो नाम रावणभ्राता वीराणां दुर्द्धर्षं वीरैर्धर्षयितुमशक्यम् ऋषभम् ऋषभनामकं हरिं वानरं यया गदया जघान ताडयामास तयैव गदया जघ्ने हतः स्वयमिति शेषः। ऋषभविनाशाय महापार्श्वेन गदा प्रक्षिप्ता, ऋषभस्तु तां गृहीत्वा तत्प्रहारेण महापार्श्वं हतवानित्यर्थः। वीराणामृषभं श्रेष्ठं सुग्रीवमिति केचित्, तद्रामायणानवलोकनविजृम्भितम्।

पक्षे श्रुतायुधो नाम पर्णाशानदीतनयो वरुणस्यौरसो नृपविशेषः यया गदया वरुणदत्तयेति शेषः दुर्द्धर्षम् अन्यैरधर्षणीयं वीराणामृषभं श्रेष्ठं हरिं कृष्णं जघान, अस्मिन् मृते सर्वे पाण्डवा मरिष्यन्तीति बुद्ध्येति शेषः, तयैव गदया स्वयं जघ्ने यतो रणे मत्तः प्रमादी, प्रमादश्च—'अयुध्यति न योक्तव्या सा त्वय्येव पतेदिति। इत्यादेषा प्रतीपं हि प्रयोक्तारमपि प्रभो' इति वरुणवाक्यविस्मरणरूपः। अयमर्थः पर्णाशया पुत्रस्याजेयत्वायाभ्यर्थितो वरुणः पूर्वोक्तमुक्त्वा गदा दत्ता, यया च स श्रुतायुधनाम्ना प्रसिद्धोऽन्येषामजेयश्च जातः। अत्र तु तद्वरुणवचनं विस्मृत्य अयुध्यमानाय कृष्णाय प्रक्षिप्ता सा गदा ततः प्रतिनिवृत्य प्रक्षेप्तारं तमेव जघानेति ॥ ३० ॥

अथ सङ्गररङ्गमभ्युपेतौ
क्षपयामासतुरोजसा विपक्षम्।
पवमानशरीरजश्च भीमो
युयुधानश्च पतिर्वरूथिनीनाम् ॥३१॥

एकेन भग्नाङ्घ्रिपरंहसोच्चै-
रलं बलध्वंसकृतापरेण।
ताभ्यां निरासेऽयुतवैरिवृन्दं
यथान्धकारं शशिभास्कराभ्याम् ॥३२॥

अथेति। अथानन्तरं भीमो रिपुभयङ्करः पवमानस्य वायोः शरीरजः पुत्रो हनूमांश्च तथा युयुधानो युध्यमानो वरूथिनीनां सेनानां पतिर्नीलश्च उभौ सङ्गररङ्गं युद्धस्थानरूपनाट्यालयम् अभ्युपेतौ आगतौ सन्तौ ओजसा बलेन विपक्षं राक्षससैन्यं क्षपयामासतुः क्षीणं चक्रतुः।

पक्षे अथ वरूथिनीनां पतिः पवमानस्य शरीरजो वायुपुत्रो भीमो वृकोदरश्च तथा युयुधानः सात्यकिश्च उभौ अर्जुनस्यानिष्टशङ्कया युधिष्ठिरेण क्रमेण प्रेषिताविति शेषः तत्र प्रथमं सात्यकिः प्रेषितः ततःपरं भीमः प्रेषित इति बोध्यं सङ्गररङ्गं व्यूहमध्यम् अभ्युपेतौ प्रविष्टौ सन्तौ ओजसा विपक्षं दुर्योधनसैन्यं क्षपयामासतुः। औपच्छन्दसकं वृत्तम् ॥३१॥

एकेनेति। भग्ना अङ्घ्रिपा वृक्षा येन तादृशं रंहो युद्धवेगो यस्य स तथा तेन उच्चैर्महता एकेन हनूमता पक्षे भीमेन तथा अलमत्यर्थं बलध्वंसकृता शत्रुसैन्यक्षयं कुर्वता अपरेण नीलेन च पक्षे सात्यकिना च उभाभ्यां ताभ्याम् अयुतवैरिवृन्दम् अयुतसंख्यकशत्रुसमूहं शशिभास्कराभ्याम् अन्धकारं यथा ध्वान्तमिव निरासे निरस्तम्। अङ्घ्रिपेत्यत्र अङ्गपेति पाठं धृत्वा रामायणपक्षे अङ्गपावृक्षाः भारत-पक्षे अङ्गपोऽङ्गदेशाधिपः कर्णः इति व्याचक्षते केचित्। तत्र अङ्गपशब्दस्य वृक्षवाचकत्वे कोशो मृग्यः। उपमा ॥ ३२ ॥

दधज्जिगीषाधृतिमाञ्जनेयः
कृतावमानोऽपि सवृष्णिवीरः ।
त्वाष्ट्रस्य वज्रीव रणे त्रिमूर्द्ध्न-
श्चिच्छेद भूरिश्रवसः शिरोधिम् ॥३३॥
प्राप्य भङ्गमिनन्दनाद्यशः
पूरिताखिलजगन्महोदरात् ।

दधदिति । वृष्णिवीरः प्रचण्डवीरः । "वृष्णिर्ना यादवे मेषे त्रिषु पाषण्डचण्डयोः" इति शब्दरत्नावली । स आञ्जनेयोऽञ्जनापुत्रो हनूमान् कृतापमानोऽपि शक्त्या प्रहारेण मूर्च्छितत्वात्तिरस्कृतोऽपि जिगीषायां जयेच्छायां धृतिं धैर्यं दधद्धारयन् सन् भूरीणि बहूनि त्रिमूर्द्धत्वात् षट्संख्यकानीत्यर्थः श्रवांसि श्रवणानि यस्य स तथा तस्य त्रिमूर्द्ध्नः त्रिमूर्द्धेति यौगिकनामकस्य रावणपुत्रस्य त्वाष्ट्रस्य वृत्रस्य वज्री इन्द्र इव रणे शिरोधिं ग्रीवां चिच्छेद तलप्रहारेणाच्छिनत् । एतदुपलक्षणं देवान्तकमपि मुष्टिप्रहारेण हनूमान् जघानेति बोध्यम् ।

पक्षे यः कृतापमानोऽपि भूरिश्रवसा केशाकर्षणपादप्रहारादिना तिरस्कृतोऽपि जिगीषाः तज्जयेच्छा दधत् धारयन् तथा जने जनमध्ये धृतिमान् धैर्यशालित्वेन ख्यातः स वृष्णिवीरः यादवेषु शूरः सात्यकिः त्वाष्ट्रस्य त्वष्टुरपत्यस्य त्रिमूर्द्ध्नो विश्वरूपस्य वज्रीव भूरिश्रवसस्तन्नामकस्य सौमदत्तेः प्रायोपविष्टस्येति शेषः । रणे रणमध्ये शिरोधिं चिच्छेद, खड्गेनाच्छिनत् । भूरिश्रवाः किल शिवदत्तवरेण सात्यकिं जित्वा केशाकर्षणपादताड़नादिना तिरस्कृत्य खड्गेन हन्तुमुद्यतः तदवस्थस्य तस्यार्जुनो बाणेन हस्तं चिच्छेद, ततश्चार्जुनं गर्हयित्वा प्रायोपवेशेन मर्तुमुद्यतं तं सात्यकिरुत्थाय खड्गेन जघानेति भारती भारती । उपमा ॥३३॥

प्राप्येति । यशसा पूरितम् अखिलं जगत् येन सः तथा भीमो भयङ्करो विक्रमो यस्य सः नीलो नीलनामा वानरः इनं प्रभुं नृपं वा रावणं नन्दयति इति इननन्दनस्तस्मात् । "इनः पत्यौ नृपार्कयोः" इति मेदिनी । महो-

नील एव पुनरुद्बभौ मणिः
शाणघृष्ट इव भीमविक्रमः ॥३४॥

अथ रिपुवधपुष्यद्भूमिपार्थः प्रसर्पत्
प्रतिबलजलराशौ सायकैः साधिताध्वा।
त्वरितगति सुमित्रानन्दनः संप्रपेदे
तपन इव समीपं सिन्धुराजस्य शत्रोः ॥३५॥

दराम्महोदरनामकाद्रावणभ्रातुः सकाशात् भङ्गं पराजयं प्राप्य प्रथमं तेन विजित इत्यर्थः शाणघृष्टः शाणेनोल्लिखितो मणिरिव पुनरेव उद्बभौ। अधिकं शुशुभे। अधिकशोभाया जयजन्यत्वात् पुनर्महोदरं जित्वा शुशुभे इत्यर्थः-नीलो महोदरं जघानेति परमार्थः।

पक्षे भीमस्य वृकोदरस्य विक्रमः यशसा पूरितम् अखिलजगतो महोदरं महान्तरालं येन स तथा तस्मात् इननन्दनात् सूर्यपुत्रात् कर्णात् भङ्गं पराभवं प्राप्य शाणघृष्टो नीलो मरकतो मणिरिव पुनरेव उद्बभौ। असकृज्जितादपि कर्णात् कथञ्चित् किञ्चित् पराभवं प्राप्य भीमः पुनः सात्यकिरथमारुह्य शत्रुसैनाहननेन शुशुभे इत्यर्थः। उपमा। रथोद्धतावृत्तम् ॥३४॥

अथेति। अथानन्तरं रिपूणां वधेन पुष्यन् पुष्टिं गच्छन् जातप्राय इत्यर्थः भूमिपस्य रामस्य अर्थः प्रयोजनं राक्षसकुलक्षय इत्यर्थः यस्मात् सः तथा प्रसर्पत् समन्तात् प्रसरत् यत् प्रतिबलं शत्रुसैन्यं तदेव दुरवगाहत्वाज्जलराशिः समुद्रस्तत्र सायकैर्बाणैः साधितः कृतोऽध्वा प्रवेशमार्गो येन तादृशः सुमित्रानन्दनो लक्ष्मणः त्वरिता सत्वरा गतिर्यत्र तद्यथा तथा शत्रोरतिकायस्य समीपं संप्रपेदे प्राप। उपमया तयोरुत्कर्षं समर्थयति। तपन इवेति तपनः सूर्यो यथा सिन्धुराजस्य समुद्रस्य समीपं सायाह्ने संप्रपद्यते तथेत्यर्थः। एतेन लक्ष्मणस्य तपनवत्तेजस्वित्वम् अतिकायस्य च समुद्रवत् स्थिरत्वं प्रतिपादितम्।

पक्षे अथ रिपुवधेन पुष्यन्तौ पुष्टौ भवन्तौ भूमिर्यत्र तद्यथा तथा सुमित्राणां सद्बान्धवानाम् आनन्दनः पार्थोऽर्जुनः तपन इव साक्षात् सूर्य इवेत्युत्प्रेक्षा

विद्युल्लेखाविलसितमिव व्योम्नि सन्दर्शयद्भि-
र्निर्विच्छेदप्रसरशलभश्रेणिशोभां वहद्भिः ।
जज्ञे जन्यं सममथ तयोरर्द्धमार्गे फलानां
संघर्षोद्यद्‌हुतवहशिखालीढपक्षैः पृषत्कैः ॥३६॥

गगनातिविलङ्घनातिवेगा-
द्धरिचक्रेण तिरोहिते पतङ्गे ।
रजनीमुखशङ्कया जजृम्भे
निजकालागमसत्वरोविपक्षः ॥३७॥

शतोः सिन्धुराजस्य जयद्रथस्य समीपं संप्रपेदे । अन्यत् समानम् । मालिनी-वृत्तम् ॥३५॥

विद्युदिति । अथानन्तरं तयोर्लक्ष्मणातिकाययोः पक्षेऽर्जुनजयद्रथयोः पृषत्कैर्बाणैः कृत्वा समं तुल्यं जन्यं युद्धं जज्ञे बभूव । "युद्धमायोधनं जन्यम्" इत्यमरः । किम्भूतैः अर्द्धमार्गे फलानां वाणाग्राणां संघर्षात् परस्परसंयोगेन सम्यग्घर्षणात् उद्यन्नुद्भूतो यो हुतवहो वह्निस्तस्य शिखया आलीढो दग्धः पक्षो वाजो येषां तैः अतएव व्योम्नि आकाशे विद्युल्लेखायास्तड़िल्लताया विलसितं विलासमिव सन्दर्शयद्भिः । तथा निर्विच्छेदोऽविरलः प्रसरो गमनं यस्यास्तादृशी या शलभश्रेणिः पतङ्गपङ्क्तिस्तस्याः शोभां वहद्भिर्धारयद्भिः । अत्र प्रथमपादे उत्प्रेक्षा, द्वितीयपादे अन्यशोभाया अन्येन वहनासम्भवात् तद्वच्छोभेति बिम्बप्रतिबिम्बतायां पर्यवसानान्निदर्शना तदनयोः संसृष्टिः । मन्दाक्रान्तावृत्तम् ॥३६॥

गगनेति । गगने यदतिविलङ्घनं युद्धोत्साहेनोल्लम्फनं तत्रातिवेगो वेगातिशयः अतिवेगेनानवरतगगनोल्लम्फनमित्यर्थः तस्माद्धेतोः हरिचक्रेण वानरवृन्देन पतङ्गे सूर्ये । "दिनमणिहरिहेलिब्रध्नभाकोषभासुदरथिखग-पतङ्गेनाद्रयः सप्तसप्तिः" इति त्रिकाण्डशेषः । तिरोहिते आच्छादिते सति निजकालस्य रात्रेरागमे सत्वर उत्सुको विपक्षोऽतिकायः रजनीमुखस्य शङ्कया

ततो महन्मन्त्रवदस्त्रमुग्रं
सन्धाय सन्ध्यामुखसीम्नि शत्रोः।
मूर्द्धानमुद्दिश्य समीकमूर्द्धि
प्रायोजि पृथ्वीपतिसोदरेण ॥३८॥
अमुनास्य सुरद्विषेव राहोः
क्षपिते मूर्द्धि विहाय जीवलोकम्।

किमियं रात्रिरुपस्थितेत्याशङ्क्य जजृम्भे ववृधे सोत्साहो बभूवेत्यर्थः। राक्षसानां रजन्यामधिकतेजस्वित्वसम्भवादिति भावः।

पक्षे गगनातिविलङ्घनातिवेगात् अतिवेगेन गगनमध्यतोऽवतरणात् सायमतिवेगेन सूर्योऽस्तं गच्छतीति प्रसिद्धेरिति भावः। तथा हरेः कृष्णस्य चक्रेण योगेन। अत्र चकारोबोध्यः योगेन चेत्यर्थः। योगो व्याजः व्याजोत्पादिततमसेति परमार्थः। तथाच भारतं "योगमत्र विधास्यामि सूर्यस्यावरणं प्रतीत्युपक्रम्य ततोऽसृजत्तमः कृष्णः सूर्यस्यावरणं प्रति" इत्यादि। "चक्रः कोके पुमान् क्लीवं व्रजे सैन्यरथाङ्गयोः। राष्ट्रे दम्भान्तरे कुम्भकारोपकरणास्त्रयोः" इति मेदिनी। हरिचक्रेण सुदर्शनास्त्रेणेति केचित् तद्भारतविरुद्धम्। पतङ्गे तिरोहिते सति निजकालस्य स्वमृत्युसमयस्य दिवसस्य आगमे समाप्तौ सत्वरो विपक्षो जयद्रथः रजनीमुखशङ्कया सन्ध्येयमुपस्थितेति भ्रान्त्या जजृम्भे। "यद्यस्मिन्नहते पापे सूर्योऽस्तमुपयास्यति। इहैव संप्रवेष्टाहं ज्वलितं जातवेदसम्" इति प्रतिजानानोऽर्जुन एव वह्निं प्रवेक्ष्यतीति मत्वा हर्षेणात्मानं प्रकाशयामासेत्यर्थः। औपच्छन्दसकं वृत्तम् ॥ ३७ ॥

तत इति। ततः परं पृथ्वीपते रामस्य पक्षे युधिष्ठिरस्य सोदरेण भ्रात्रा लक्ष्मणेन पक्षेऽर्जुनेन सन्ध्यामुखसीम्नि सन्ध्याप्रारम्भकाले अर्द्धास्तमितभास्करे काले इत्यर्थः महत् वृहत् मन्त्रवत् समन्त्रकम् उग्रं भयदम् अस्त्रं बाणं सन्धाय धनुषि संयोज्य समीकमूर्द्धि रणमध्ये शत्रोरतिकायस्य पक्षे जयद्रथस्य मूर्द्धानम् उद्दिश्य प्रायोजि निक्षिप्तवान् ॥३८॥

अमुनेति। सुरद्विषा हरिणा राहोः सैंहिकेयस्येव अमुना लक्ष्मणेन अस्यातिकायस्य मूर्द्धि क्षपिते छिन्ने सति जीवलोकं भूमिं विहाय प्रचलन् ऊर्द्ध-

प्रचलन् गमितः कबन्धभावं
न रणे कस्य भयङ्करोतिकायः ॥३९॥
तदाननेनोत्पतता तदानी-
मसृक्स्रुता चित्रकिरीटभासा ।
व्यरोचताखण्डलचापलेखा
सीमन्तितप्रान्तमिवान्तरीक्षम् ॥४०॥
कृत्तं लसत्कुण्डलमुत्तमाङ्गं
शत्रोर्विवल्गत्कपिलक्ष्मणास्त्रैः ।

मुच्छलन् तथा कबन्धभावम् अपमूर्द्धत्वं गमितः लक्ष्मणेन प्रापितः । "कबन्धोऽस्त्री क्रियायुक्तमपमूर्द्धकलेवरम्" इत्यमरः । अतिकायः अतिकायदेहः रणे कस्यभयङ्करो न बभूवेति शेषः अपितु सर्वेषामेव, यथा मूर्ध्नि छिन्ने राहुरूर्द्धमाक्रमणात् सर्वेषां भयङ्करोऽभूत्तथेत्यर्थः ।

पक्षे अमुनार्जुनेन अस्य जयद्रथस्य तथाविधः कायो देहः रणे कस्य भयं न करोति चकार । लटः सर्वापवादकत्वाद्भूतेऽपि क्वचित् प्रयोगः साधुः आशंसायाम्बा । यद्वा अस्य अतिकायो दीर्घदेहः कस्य न भयङ्कर इत्यन्वयः । अन्यत् समानम् । अत्र पूर्वार्द्धगतया उपमया उत्तरार्द्धगतार्थापत्तिरङ्गाङ्गितया सङ्कीर्यते । औपच्छन्दसकं वृत्तम् ॥३९॥

तदेति । तदानीम् असृक्स्रुता रुधिरं क्षरता तथा चित्रा नानारूपाः किरीटस्य नानारत्नखचितमुकुटस्य भासः किरणा यत्र तेन उत्पतता ऊर्द्धमुच्छलता तस्यातिकायस्य पक्षे जयद्रथस्य आननेन कृत्वा अन्तरीक्षं गगनम् आखण्डलस्येन्द्रस्य चापलेखया धनुःखण्डेन ससीमन्तितः ससीमन्तीकृतः प्रान्तो यस्य तादृशमिवेत्युत्प्रेक्षा व्यरोचत शुशुभे । अत्रोत्प्रेक्षितार्थं प्रति असृक्स्रवणादेर्हेतुत्वात् काव्यलिङ्गं तेन चोत्प्रेक्षाङ्गित्वेन सङ्कीर्यते ॥४०॥

कृत्तमिति । विवल्गन्तो हर्षेण सञ्चलन्तः कपयो यत्र तद्यथा तथा लक्ष्मणस्यास्त्रैः कृत्तं छिन्नं तथा लसन्तौ कुण्डले यत्र तादृशं शत्रोरतिकायस्य

रणक्षितेः पातितमङ्कदेशे
तेने पितुः प्राणभयं निजस्य ॥४१॥
तदनु कदनभूमेः खेचरैःस्तूयमानः
प्रसभमवनिभर्तुः सोदरो निर्जगाम।
युधि समधिकधौतां कीर्तिमुद्धृत्य पृथ्वीं
प्रलयजलधिमध्याच्छ्रीवराहः पुरेव ॥४२॥

उत्तमाङ्गं शिरः रणक्षितेर्युद्धाङ्गनस्याङ्कदेशे मध्यप्रदेशे पातितं सत्। अत्रापि लक्ष्मणास्त्रैरित्यस्यानुषङ्गः। निजस्य पितूरावणस्य प्राणभयं तेने चकार। रावणः श्रुत्वा यदि महावीरोऽतिकायो निपातितस्तर्हि ममापि प्राणा न स्थास्यन्तीति भयं प्रापेत्यर्थः।

पक्षे कपिलक्ष्मणस्य कपिकेतनस्यार्जुनस्यास्त्रैः कृत्तं सकुण्डलं शत्रोर्जय-द्रथस्य शिरः रणक्षितेः सकाशात् निजस्य पितुः समन्तपञ्चकस्य बाह्यप्रदेशे तपस्यतो वृद्धक्षत्त्रस्य शरपरम्परया अङ्कदेशे क्रोड़मध्ये पातितं सत् कृष्णवच-सेति शेषः। वृद्धक्षत्त्रस्यैव प्राणभयं प्राणापगमभीतिं तेने, तं प्राणमुक्तं चकारे-त्यर्थः। अयमर्थः—जयद्रथे जाते, "किन्त्वस्य युध्यमानस्य संग्रामे क्षत्त्रियर्षभः। शिरश्छेत्स्यति संक्रुद्धः शत्रुरालक्षितो भुवि" इत्याकाशवाणीं श्रुत्वा वृद्धक्षत्त्रः। "धरण्यां मम पुत्रस्य पातयिष्यति यः शिरः। तस्यापि शतधा मूर्द्धा फलिष्यति न संशय" इत्यर्थमेवोद्दिश्य तपश्चचार, सिद्धिरपि तस्य जाता। एतत् सर्वं श्रीकृष्णमुखाच्छ्रुत्वार्जुनः जयद्रथस्य कृत्तं शिरः शरपरम्परया कदम्बकीकृत्य तत्रैव समन्तपञ्चकतीर्थस्य बाह्यप्रदेशे तपस्यतः कृतजप्यस्य वृद्धक्षत्रस्य क्रोड़े निपातयामास। उत्तिष्ठतश्च तस्य क्रोड़ात् तद्भूम्यां निपतितं, ततश्च तस्यापि शिरः शतधा खण्डितमभूत्, तेन च तस्य प्राणविगमो जात इति भारती भारती ॥४१॥

तदन्विति। तदनु तत्पश्चात् अतिकायवधानन्तरमित्यर्थः पक्षे जयद्रथ-वधानन्तरमित्यर्थः अवनिभर्तूरामस्य पक्षे युधिष्ठिरस्य सोदरो भ्राता लक्ष्मणः पक्षेऽर्जुनः पुरा पूर्वं श्रीवराहः धृतवराहमूर्तिः श्रीनारायणः प्रलयजलधि-

निशाकरेणेव नरेश्वरेण
प्रणीतभास्वज्जयमङ्गलश्रीः ।
रराज राजावरजो जनानां
मुदं वितन्वन्निव कामदेवः ॥४३॥

## इति राघवपाण्डवीये महाकाव्ये दशमः सर्गः ।

मध्यात् पृथ्वीमिव समधिकधौताम् अतिशुद्धाम् अन्यत्र प्रलयसमुद्रजलैः क्षालितां कीर्तिम् उद्धृत्य सञ्चित्य खेचरैः सिद्धगन्धर्वादिभिः स्तूयमानः सन् कदनभूमेः समराङ्गनात् प्रसभं तत्क्षणात् निर्जगाम स्वशिविरं जगाम इत्यर्थः ॥४२॥

निशेति । जनानां सुहृदां मुदं हर्षं वितन्वन् शत्रुवधेन जनयन् राजावरजो लक्ष्मणः पक्षेऽर्जुनः निशाकरेण चन्द्रेणेव नरेश्वरेण राज्ञा रामेण पक्षे युधिष्ठिरेण प्रणीता कृता भास्वती उज्ज्वला जये शत्रुजये मङ्गलश्रीर्निर्भ-र्त्सनादिमङ्गलसम्पत् यस्य तादृशः सन् कामदेवः कन्दर्प इव रराज । यथा जनानां सम्भोगिनां मुदं वितन्वन् कन्दर्पः विरहिजनजयाय निशाकरेण वर्द्धितश्रीः सन् राजति तथेत्यर्थः । अथच कामदेवनामा एतत् काव्यकारयिता नृप इव सोऽपि भास्वताम् उद्रिक्तशत्रूणां जयाय यात्रां कुर्वन् जन्मसप्तमादि-स्थानस्थितेन निशाकरेण बोधितमङ्गलश्रीर्बभूव । तथाच ज्योतिषम् । "सप्ताद्य-चन्द्रे ध्रुवमर्थलाभं षष्ठे तृतीये धनभोगमायुः । सर्वार्थसिद्धिं दशमे वदन्ति श्रीकादशे सर्वसुखानि चैव" इति । अस्मिन् सर्गे पौर्वापर्यभङ्गेन प्रकृतावर्ण-नादिना च आकरविरोधः, श्लेषमनुरुन्धानस्य कवेर्नात्यन्तापराधमावहतीति ध्येयम् ॥४३॥

इति श्रीप्रेमचन्द्रतर्कवागीशभट्टाचार्यविरचितायां कपाटविपाटिकाख्यायां राघवपाण्डवीयटीकायां दशमः सर्गः ।

---

## एकादशः सर्गः ।

अथ परिभवरोषात् प्रेरितास्तेन राज्ञा
रजनिचरचमूभिः सङ्गताः सैन्यनाथाः ।
त्वरिततरमरौत्सुर्धर्मराजस्य सेनां
भुवमिव तिमिराणां राशयो वासरान्ते ॥१॥

व्यूहावुभौ सम्मुखतामुपेतौ
मिथो बलाङ्गानि बभञ्जतुस्तौ ।
सद्यो जगन्तीव युगान्तकाले
पूर्वापरावम्बुनिधी प्रसक्तौ ॥२॥

अथेति । अथानन्तरं परिभवेण पुत्रभ्रातृवधरूपेण तिरस्कारेण जनितो यो रोषस्तस्माद्धेतोस्तेन राज्ञा रावणेन प्रेरिता युद्धाय विसर्जिताः रजनिचरचमूभी राक्षससेनाभिः सङ्गताः सहिताः सैन्यनाथा इन्द्रजित्प्रधानाः सेनापतयः वासरान्ते दिवसापगमे तिमिराणां राशयो भुवमिव धर्मप्रधानो राजा धर्मराजो रामस्तस्य सेनां त्वरिततरं शीघ्रतरम् अरौत्सुः रुरुधुः ।

पक्षे अथ परिभवरोषात् जयद्रथवधजनितकोपात् तेन राज्ञा दुर्योधनेन प्रेरिताः रजन्यां चरन्ति युद्धार्थं धावन्तीति रजनिचर्यो रात्रियुद्धसमर्था इत्यर्थः तादृशीभिश्चमूभिः सङ्गताः सैन्यनाथा द्रोणकर्णादयः धर्मराजस्य युधिष्ठिरस्य सेनां त्वरिततरम् अरौत्सुः । अन्यत्तुल्यम् । दुर्योधनस्यापि राक्षससैन्यानां स्थितत्वादेतत्पक्षेऽपि रजनिचरचमूभी राक्षससेनाभिरिति व्याचक्षते केचित् । उपमालङ्कारः । मालिनीवृत्तम् ॥१॥

व्यूहाविति । तौ उभौ वानरराक्षसीयौ पक्षे पाण्डवकौरवीयौ व्यूहौ विन्यस्तबलसमूहौ सम्मुखताम् उपेतौ प्राप्तौ सन्तौ मिथः परस्परं बलाङ्गानि बलानामङ्गानि करचरणादीनि हस्त्यश्वादीनि च । "हस्त्यश्वरथपादातं सेनाङ्गं

अविरलरणधूलीध्वान्तरुद्धेऽन्तरीक्षे
ज्वलितदशदिगन्ता तीव्रहेतिप्रदीपैः ।
द्रुतकवलितरोदःकन्दरोदारघोर-
ध्वनिरजनि रणश्रीः सेनयोः संप्रवृत्ते ॥३॥

रणे रिपूणां बलभिद्विजेता
गुरुप्रभावाद्भृशदुर्निरीक्ष्यः ।
महास्त्रधारानिकरैः प्रवीरा-
नपेतसंग्रामदपश्चकार ॥४॥

ख्याच्चतुष्टयम्" इत्यमरः । सद्यो बभञ्जतुः मर्दयामासतुः । उपमयेदं समर्थयति, युगान्तकाले प्रलयसमये प्रसक्तौ परस्परसंसक्तौ पूर्वपरौ पूर्वपश्चिमौ अम्बुनिधी समुद्रौ जगन्तीव लोकानिव ॥२॥

अविरलेति । अन्तरीक्षे आकाशे अविरला निविड़ा या रणधूल्यस्ता एव ध्वान्तमन्धकारः ताभिर्बहुलीकृतं ध्वान्तमिति वा तेन रुद्धे आवृते संप्रवृत्ते जाते सति सेनयोः रामरावणबलयोः पक्षे कुरुपाण्डवबलयोः रणश्रीर्युद्धशोभा अजनि बभूव । किम्भूता तीव्राः शाणिता हेतयोऽस्त्राण्येव प्रदीपास्तैः कृत्वा ज्वलितानि प्रकाशितानि दशदिशामन्तानि यत्र सा प्रदीपा अपि अन्धकार-रुद्धेऽप्यन्तरीक्षे दिगन्तानि प्रकाशयन्ति । तथा द्रुतं कवलितो ग्रस्तः व्याप्त इति यावत् रोदोद्यावाभूम्यन्तरालं तदेव कन्दरो दरो येन तादृश उदारो विकटो घोरो गभीरो ध्वनिः कलकलो यस्याः सा । रूपकाणां संसृष्टिः ॥३॥

रणइति । गुरोरुपास्यदेवस्य ब्रह्मणः प्रभावात् ब्रह्मदत्तब्रह्मास्त्रप्रतापादित्यर्थः यद्वा गुरुरग्निर्द्विजातीनामिति स्मरणात् गुरोर्निकुम्भिलायां हूयमानस्याग्नेः प्रभावात् भृशदुर्निरीक्ष्यः शत्रुभिरत्यन्तं द्रष्टुमशक्यः बलभिद इन्द्रस्य विजेता मेघनादः रणे महास्त्रस्य ब्रह्मास्त्रस्य धारानिकरैः निशितमुखसमूहैः कृत्वा रिपूणां मध्ये प्रवीरान् अतिशूरान् अपेता विगता संग्रामदद् युद्धाभि-

भिन्नाङ्गदं त्रस्तबलाधिनाथं
भ्राम्यद्गजं विह्वलदश्विपुत्रम्।
अभीमसंरम्भमनेन भग्नं
रराज नाजौ नरदेवसैन्यम् ॥५॥
तदा तदीये ज्वलति प्रतापे
ज्ञात्वा महो ब्राह्ममभेद्यमन्यैः
विष्णोर्जगत्क्षेमकरोऽवतारः
स्वपक्षपीड़ां कथमप्यसोढ़ ॥६॥

लाघो येषां तादृशांश्चकार सर्वान् विजितवानित्यर्थः। अन्यापि तृट् जलधारानिकरैरपगच्छति।

पक्षे रणे रिपूणां बलभित् सामर्थ्यनाशकस्तथा विजेता च दुर्योधनः गुरुर्महान् यः प्रभावस्तस्मात् गुरोर्द्रोणस्य प्रभावादिति वा भृशदुर्निरीक्ष्यः सन् महतामस्त्राणां धारानिकरैः प्रवीरान् भीमादीन् अपेतसंग्रामतृषश्चकार ॥४॥

भिन्नेति। आजौ युद्धे नरदेवस्य रामस्य सैन्यम् अनेनेन्द्रजिता भग्नं पीड़ितं सत् न रराज। किम्भूतं भिन्नश्छिन्नगात्रोऽङ्गदो बालिपुत्रोयत्र तत् तथा त्रस्तो भीतो बलाधिनाथः सुग्रीवो यत्र तत् तथा भ्राम्यन् भयचञ्चलो गजो वानरविशेषो यत्र तत् तथा विह्वलन्तौ भयव्याकुलौ अश्विनोः पुत्रौ मैन्दद्विविदौ यत्र तत् तथा नास्तिभीमो भयङ्करः संरम्भो योद्धृणां कोपो यत्र तत्।

पक्षे आजौ अनेन द्रोणेन भग्नं नरदेवस्य युधिष्ठिरस्य सैन्यं न रराज। किम्भूतं भिन्नाङ्गदं दलितकेयूरं त्रस्तबलाधिनाथं भीतधृष्टद्युम्नं भ्राम्यद्गजं चलत्करिसैन्यं विह्वलदश्विपुत्रं व्याकुलनकुलसहदेवं तथा नास्ति भीमस्य वृकोदरस्य संरम्भो यत्र तत् ॥ ५ ॥

तदेति। तदा तदीये इन्द्रजित्सम्बन्धिनि प्रतापे ज्वलति दीप्यमाने सति जगतां क्षेमकरो दुष्टजनवधेन मङ्गलकरोऽपि विष्णोरवतारो रामः ब्रह्मणः प्रजापतेरिदं ब्राह्मं महस्तेजः ब्रह्मणःसकाशाल्लब्धं ब्रह्मास्त्रमित्यर्थः अन्यैरभेद्यम् अवार्यं ज्ञात्वा स्वपक्षपीड़ां ब्रह्मास्त्रप्रयोगेण इन्द्रजित्कृतां

स्वशक्तिजृम्भाभिरिवौषधीभि-
र्निवारितारातिमहास्त्रपीडम्।
तज्जीवयन् राजबलं त्रिलोकीं
विस्मापयामास हरेः कुमारः ॥७॥
वीरेषु वैरात् परचक्रमध्यं
विशत्स्वनालोचितकालमेव।

स्वयोर्वानराणाञ्च व्यथां कथमपि कष्टेन असोढ़ सहतेस्म। ब्रह्मास्त्रमर्यादा-रक्षणाय इन्द्रजित्कृतपीड़ामङ्गीकृत्य रणाङ्गने शिश्ये इत्यर्थः।

पक्षे तदीये द्रोणसम्बन्धिनि प्रतापे ज्वलति सति ब्रह्मणो विप्रस्येदं ब्राह्मं महः। "ब्रह्मा विप्रः प्रजापतिः" इत्यमरः। अन्यैरभेद्यम् अभेदयोग्यं ज्ञात्वा, "आचार्यञ्च प्रवक्तारं पितरं मातरं गुरुम्। नहिंस्याद्ब्राह्मणान् गाश्च सर्वांश्चैव तपस्विन" इत्यादिमन्वादिवचनादिति भावः। जगत्क्षेमकरो विष्णोरवतारः कृष्णः स्वपक्षाणां पाण्डवानां द्रोणकृतां पीड़ां कथमप्यसोढ। ब्राह्ममर्यादारक्षणाय कियन्तं कालं द्रोणकृतां पाण्डवानां पीड़ां सहतेस्मेत्यर्थः ॥ ६ ॥

स्वशक्तीति। हरेः केशरिवानरस्य कुमारो हनूमान् स्वशक्तिजृम्भाभिः साक्षात् स्वेषां सामर्थ्यस्फुरणैरिवेत्युत्प्रेक्षा, औषधीभिः गन्धमादनादानीताभि-र्विशल्यकरण्यादिभिः कृत्वा निवारिता अरातेरिन्द्रजितो महास्त्रेण कृता पीड़ा यस्य तादृशं तत् राज्ञो रामस्य बलं सैन्यं जीवयन् सन् त्रिलोकीं लोकत्रयं विस्मापयामास विस्मितां चकार, एतदुपलक्षणं रामलक्ष्मणावपि विशल्यौ चकारेति बोध्यम्।

पक्षे हरेरिन्द्रस्य कुमारोऽर्जुनः ओषधीभिरिव स्वस्य शक्तेस्तेजसो जृम्भाभिः प्रकाशनैः कृत्वा निवारितारातिमहास्त्रपीडं तत् राज्ञो युधिष्ठिरस्य बलं जीवयन् शत्रुतो रक्षन् सन् त्रिलोकीं विस्मापयामास। उभयत्राप्युत्प्रेक्षा ॥७॥

वीरेष्विति। ततोऽनन्तरं वीरेषु हनूमदादिषु पक्षे भीमादिषु परचक्रस्य शत्रुपुरस्य लङ्कायाः पक्षे शत्रुसैन्यस्य मध्यम् अनालोचितकालमेव अपराह्ण-

ततः क्षपायुद्धमवर्ततोल्का-
करालदीपक्षपितान्धकारम् ॥८॥

तत्रातिमात्रं रविनन्दनस्य
तेजो दिदीपे परवाहिनीषु।
निषिद्धनासत्यसुतोद्यमस्य
रक्षोवधाय स्वयमुद्यतस्य ॥९॥

तमभ्यधावत् क्षतशत्रुरक्षो-
घटोत्कचस्फीतविटङ्कमौलिः।
चलाचलाकारकरीन्द्रपाली
कुम्भप्रणुन्नाम्बुदसंहतिश्रीः ॥१०॥

समयमेव यथा स्यात्तथा विशल्ल्यं सत्सु सुग्रीवस्य पक्षे युधिष्ठिरस्यादेशात्क्षा-दाहार्थं पक्षे द्रोणाक्रमणार्थमिति शेषः उल्का उल्मुकान्येव कराला अधिकोज्ज्वला दीपास्तैः क्षपिता निराकृतोऽन्धकारो यत्र तादृशं क्षपायुद्धं रात्रौ युद्धम् अवर्तत बभूव ॥ ८ ॥

तत्रेति। तत्र रात्रियुद्धे रविनन्दनस्य सुग्रीवस्य तेजः पराक्रमः पर-वाहिनीषु शत्रुसेनासु अतिमात्रं दिदीपे ववृधे। किम्भूतस्य निषिद्धो वारितो नासत्यसुतयोरश्विनीकुमारपुत्रयोर्मैन्दद्विविदयोरुद्यमो येन तस्य तथा रक्षसां रावणप्रेरितकुम्भादीनां वधाय स्वयमुद्यतस्योद्युक्तस्य।

पक्षे निषिद्धो विकलीकृतो नासत्यसुतस्य सहदेवस्योद्यमो येन तस्य सहदेवं जितवत इत्यर्थः तथा रक्षसो घटोत्कचस्य वधाय स्वयमुद्यतस्य रविनन्दनस्य कर्णस्य तेजः तत्र परवाहिनीषु पाण्डवसेनासु अतिमात्रं दिदीपे ॥९॥

तमिति। कुम्भेन कुम्भकर्णपुत्रेण प्रणुन्ना प्रेरिता रक्षोघटा राक्षससैन्यं क्षताः शत्रवो वानरा यत्र तद्यथा स्यात्तथा तं सुग्रीवम् अभिलक्षीकृत्य अधावत् युद्धार्थं जगाम। किम्भूता उत्कचैरूर्द्ध्वकेशैः कृत्वा स्फीता विटङ्कवत् कपोत-

भ्रान्तान्तर्गिरिनक्रचक्रमचिरादुद्घूर्णितैरर्णवै-
राघ्राताहितजीवितैः प्रहरणैराक्रान्तरोदोऽन्तरम् ।
ध्वस्तद्वास्थविरिञ्चिलोकमपुनर्व्यावृत्तिनिष्ठैर्भटै-
र्गीर्वाणाददृशुः सविस्मयधियो दूरात्तयोः सङ्गरम् ॥ ११ ॥

पालिकावदुच्चा मौलयो मस्तकानि यस्याः सा। "कपोतपालिकायान्तु विटङ्कं पुंनपुंसकम्" इत्यमरः। राक्षसानामूर्द्ध्वकेशत्वञ्च प्रसिद्धम्। तथा चला गच्छन्तो येऽचलाः पर्वतास्तेषामिव आकारो यस्यास्तादृशी करीन्द्रपाली हस्तिश्रेष्ठश्रेणी यत्र सा तथा अम्बुदसंहतेः सजलमेघवृन्दस्येव श्रीः शोभा यस्याः सा अतिकृष्णवर्णेत्यर्थः।

पक्षे चता शक्ती रक्षा स्वव्यूहरक्षणं येन तादृशो घटोत्कचो हैडिम्बिस्तं कर्णम् अभ्यधावत्। किम्भूतः स्फीतो महाकिरीटेनोच्चो विटङ्कवन्मौलिर्यस्य सः तथा चलाचलाकारा चलत्पर्वतसदृशाकारा या करीन्द्रपाली दिग्दन्तिश्रेणी तस्याः कुम्भैः प्रणुन्ना वर्षणाय प्रेर्यमाणा या अम्बुदसंहतिस्तस्या इव श्रीः श्यामला कान्तिर्यस्य सः ॥ १० ॥

भ्रान्तेति। गीर्वाणा देवाः सविस्मयधियो विस्मितबुद्धयः सन्तः तयोः सुग्रीवकुम्भयोः पक्षे कर्णघटोत्कचयोः सङ्गरं युद्धं दूराददृशुः। युद्धस्य विस्मयजनकत्वं विशेषणैः प्रतिपादयति, किम्भूतम् अचिरात्तत्क्षणमेव उद्घूर्णितैः युद्धवेगकृतक्षोभेण वेलामुल्लङ्घ्य समन्ताच्चलितैरर्णवैः समुद्रैर्हेतुभिः अन्तर्गिरि गिरिषु। सप्तम्यर्थेऽव्ययीभावः अन्तःशब्दोऽव्ययं सप्तम्यर्थे वृत्तिरिति गोयीचन्द्रः। नदीपौर्णमास्याग्रहायणीगिरिभ्यश्चेति पाक्षिकसमासान्तविधेरभावः। भ्रान्तमिति भावे क्तः। अन्तर्गिरि गिरिषु भ्रान्तं भ्रमणं यस्य तद्भ्रान्तान्तर्गिरि। गड्वादेः सप्तम्यन्तं परमिति अन्तर्गिरीत्यस्य परभावः। तादृशं नक्रचक्रं कुम्भीरकुलं यत्र तत् तथा आघ्रातानि उपात्तानि। तत्त्वमसीत्यादिवत् गन्धोपादानार्थकस्य घ्राधातोरुपादानमात्रभागे लक्षणा। अहितानां शत्रूणां जीवितानि यैस्तादृशैः प्रहरणैरस्त्रैराक्रान्तं व्याप्तं रोदसीर्द्यावाभूम्योरन्तरं मध्यं यत्र तत् तथा अपुनर्व्यावृत्तौ पुनःसंसाराप्रवेशे निष्ठा येषां तादृशैर्भटैः धर्मयुद्धेन हतैर्वीरैः कर्तृभिर्ध्वस्ता ध्वंसिता निराकृता इत्यर्थः। अन्तर्भावितण्यर्थं

ताभ्यामन्योन्यसैन्ये समरभुवि मुहुर्मथ्यमाने महास्त्रैः
सद्यो भारावतारात्क्षितिरतिसुवहा भोगिभर्तुर्बभूव।
वीरैर्द्वाराणि भङ्क्त्वाप्यहमहमिकया गाहमानैः समन्ता-
दाक्रान्तोद्यानहर्म्यस्थलमणिभवना द्यौर्ननामातिभारात्
॥१२॥

चरन् धरण्यामुत तूर्णमम्बरे
पुरोऽथ पश्चादपि पार्श्वयोर्द्वयोः।

त्वात्कर्मणि क्तः। तादृशा द्वास्था हठप्रवेशप्रतिकूला द्वारपाला यत्र तादृशो विरिञ्चिलोको ब्रह्मलोको यत्र तत्। अत्र विशेषणत्रयार्थानाम-सम्बन्धेऽपि तत्सम्बन्धवर्णनात् अतिशयोक्तीनां संसृष्टिः तया चानुप्राणितं विशेषणत्रयस्य विस्मयं प्रति हेतुत्वात् काव्यलिङ्गम् ॥ ११ ॥

ताभ्यामिति। ताभ्यां सुग्रीवकुम्भाभ्यां पक्षे कर्णघटोत्कचाभ्यां समरभुवि युद्धभूम्याम् अन्योन्यस्य परस्परस्य सैन्ये महास्त्रैः क्रत्वा मुहुर्मथ्यमाने बध्यमाने सति क्षितिर्भूमिः सद्यस्तत्क्षणमेव भारस्य वीरगणकृतगौरवस्य अवतारात् अपनयनात् भोगिभर्तुरनन्तस्य अतिसुवहा अत्यन्तं सुखेन धारणीया बभूव। अपि किञ्च द्यौः स्वर्लोकः अहमहमिकया परस्परमहङ्कारेण। "अहमहमिका तु सा स्यात् परस्परं यो भवत्यहङ्कार" इत्यमरः। द्वाराणि स्वर्गप्रवेशमार्गान् भङ्क्त्वा तत्रापि वीररसस्यानुवृत्तत्वादिति भावः। समन्ताद्गाहमानैर्विलोड-यद्भिर्वीरैः धर्मयुद्धहतैः शूरैः कर्तृभिराक्रान्तानि उद्यानानि नन्दनादीनि हर्म्याणि वैजयन्तादीनि स्थलानि चत्वराणि मणिभवनानि मणिनिर्मित-गृहाणि च यस्यास्तादृशी सती अतिभारान्ननाम नम्रा बभूव। अत्र क्षितेः सुवहनीयत्वस्य दिवश्च भारावनम्रत्वस्यासम्बन्धेऽपि तत्सम्बन्धकल्पनादति-शयोक्तिद्वयं संसृष्टम् ॥ १२ ॥

चरन्निति। कदाचित् धरण्यां रणभूम्यां चरन् भ्रमन् उत अथ तूर्णम् अम्बरे आकाशे चरन् तथा पुरोऽग्रे चरन् अथानन्तरं पश्चादपि चरन् तथा

बलानि भिन्दन् बहुहेतिसञ्चयै-
र्न राक्षसेन्द्रो निरचीयतापरैः ॥१३॥
तदनु रविसुतेन प्रस्फुरच्छक्तिरुच्चै-
र्बृहदवयवभारक्षुण्णदिग्दन्तिकुम्भः ।
रजनिचरचमूपः संयुगान्ते युगान्ते
गिरिरिव पवनेन क्ष्मातले पातितोऽभूत् ॥१४॥
तस्मिंस्तदोपेयुषि दीर्घनिद्रां
बभूव शोकाकुलितः स्वपक्षः ।

द्वयोः पार्श्वयोश्चरन् तथा बहुहेतिसञ्चयैरनेकैरस्त्रसमूहैर्बलानि सैन्यानि भिन्दन् नाशयन् राक्षसेन्द्रः कुम्भः पक्षे घटोत्कचः अपरैर्जनैर्न निरचीयत किमाधारो युध्यत इति नालक्ष्यत। अत्र पुरःप्रभृतिकं सङ्गतत्वात् प्रतियोगिनो बोध्यम् ॥ १३ ॥

तदन्विति। तदनु तदनन्तरं रविसुतेन सुग्रीवेण प्रस्फुरन्ती शक्तिर्युद्ध-सामर्थ्यं यस्य तादृशोऽपि रजनिचरचमूपो राक्षससेनापतिः कुम्भः संयुगस्य युद्धस्यान्ते बहुविधमायायुद्धानन्तरमित्यर्थः उच्चैर्दीर्घाणां बृहतां स्थूलानाञ्चावयवानां भारेण क्षुण्णाः पिष्टा दिशो दन्तिनश्च यत्र तद्यथा तथा युगान्ते प्रलये पवनेन गिरिरिव क्ष्मातले युद्धाङ्गने पातितोऽभूत् विनाशित इत्यर्थः।

पक्षे रविसुतेन कर्णेन प्रस्फुरन्ती स ंलग्ना भवन्ती शक्तिः कर्णक्षिप्ता इन्द्र-दत्ता एकपुरुषघातिनी यस्मिन् तादृशो रजनिचरचमूपो राक्षसगणाधिपो घटोत्कचः उच्चैर्बृहदवयवभारेण क्षुण्णा दिशो दन्तिनां कुम्भाश्च येन तादृशः सन् क्ष्मातले पातितोऽभूत्। अर्जुनवधाय चिररक्षितया इन्द्रदत्तया एकपुरुषघातिन्या शक्त्या कर्णोऽत्युद्रिक्तं कथमप्यदम्यमानं घटोत्कचं जघान, स चाहतो बृहदवयव-भारेण पतित्वा विपक्षसैन्यसमूहं विनाश्य मृत इत्यर्थः। शेषं समानम्। उपमा ॥ १४ ॥

तस्मिन्निति। तस्मिन् कुम्भे पक्षे घटोत्कचे दीर्घनिद्रां मरणम् उपेयुषि

विरोधिवर्गः सुतरां जहर्ष
न कोऽपि सर्वप्रियतामुपैति ॥१५॥
तदनु किल निकुम्भः कोष्ठशूलं यथोग्रं
निधिमिव सलिलानामुद्धृतं कुम्भजन्मा ।
रणभुवि रिपुसैन्यं शून्यतामाशु निन्ये
भुवनकुहरदाहारम्भतीव्रास्त्रतेजाः ॥१६॥

प्राप्ते सति तदा स्वपक्षो निकुम्भादिः पक्षे युधिष्ठिरादिः शोकाकुलितः प्रियविच्छेदात् शोकार्तो बभूव विरोधिवर्गस्तु सुतरामतितरां जहर्ष शत्रुनाशात् हृष्टोऽभूत्। स्वपक्षविपक्षभेदेनास्य शोकहर्षजनकत्वं समर्थयति न कोऽपीति, कोऽपि जनः सर्वेषां स्वपक्षाणां विपक्षाणाञ्च प्रियतां प्रेमास्पदत्वं न उपैति प्राप्नोति । अत्र सामान्येन विशेषस्य समर्थनादर्थान्तरन्यासः ॥१५॥

तदन्विति। तदनु तत्पश्चात् किलेति प्रसिद्धौ भुवनकुहरस्य जगन्मध्यस्य दाहारम्भे तीव्रमस्त्रतेजो यस्य तादृशो निकुम्भः कुम्भकर्णस्य पुत्रः कुम्भभ्राता रणभुवि रिपुसैन्यं वानरबलं शून्यतां वीरगणरिक्तताम् आशु निन्ये प्रापयामास, तद्भयेन वीराणामन्यत्र पलायनात् केषाञ्चिद्विनाशनाच्चेति भावः। उपमाभ्यामिदं समर्थयति, यथा निकुम्भो दन्तीवृक्षः उग्रम् उत्कटं कोष्ठशूलम् उदरवेदनाम् आशु शून्यतां विनाश्यतां नयति तथेत्यर्थः। "निकुम्भः कुम्भकर्णस्य तनये दन्तिकौषधौ" इति मेदिनी। दन्तीवृक्षो हि कोष्ठवेदनां निवारयतीति वैद्यकम्। अत्र निकुम्भपदम् उपमानोपमेयवाचकत्वात् श्लिष्टम्। तथा कुम्भजन्मा अगस्त्यः उद्धृतं करतलेनोत्तोलितं सलिलानां निधिं समुद्रमिव अगस्त्यो यथा समुद्रं जलशून्यतां आशु निन्ये तथेत्यर्थः।

पक्षे कुम्भजन्मा द्रोणः निकुम्भो दन्तीवृक्ष उग्रं कोष्ठशूलं यथा कुम्भजन्मा अगस्त्य उद्धृतं सलिलानां निधिमिव च रणभुवि रिपुसैन्यं युधिष्ठिरबलं आशु शून्यतां निन्ये। शेषं समानम्। अत्रापि कुम्भजन्मेति पदमुपमानोपमेयवाचकत्वात् श्लिष्टम्। अत्र पक्षद्वयेऽप्येकस्योपमेयस्य द्वाभ्यामुपमानाभ्यामुत्कर्षणान्मालोपमा ॥१६॥

वाणार्णवौघैर्गमितेषु भूयो-
ऽनेकेषु नाकं बलनायकेषु ।
युधः पलायन्त युधिष्ठिरस्य
सैन्या निकुम्भोद्भवभीतियोगात् ॥१७॥

ततः कुमारव्यसनोग्रवार्तां
गुरोर्विदित्वा सुकरं निपातम् ।
हरिर्मरुन्नन्दन उद्यतात्मा
समादधे तन्निधनाय यत्नम् ॥१८॥

वाणेति । वाणा एव अविच्छिन्नपातित्वाद्भयङ्करत्वाच्च अर्णवस्तस्य ओघैः समूहैः कृत्वा अनेकेषु बहुषु बलनायकेषु सेनापतिषु भूयः पुनर्नाकं स्वर्गं गमितेषु सत्सु निकुम्भेनेति शेषः युधि युद्धे स्थिरस्य नतु स्वयं पलायमानस्यापि रामस्य सैन्याः सेनायां समवेता वीराः । "सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते" इत्यमरः । निकुम्भादुद्भवो यस्यास्तादृशी या भीतिस्तस्या योगात् सम्बन्धात् युधो युद्धस्थानात् पलायन्त ।

पक्षे भूयो वाणार्णवौघैर्द्रोणस्य वाणसमूहैः कृत्वा अनेकेषु बलनायकेषु विराटद्रुपदादिषु नाकं गमितेषु सत्सु युधिष्ठिरस्य धर्मराजस्य सैन्यानि बलानि कुम्भोद्भवो द्रोणस्तस्माद्या भीतिस्तस्या योगात् युधः पलायन्त ॥१७॥

तत इति । मरुन्नन्दनो हरिर्वानरो हनूमान् ततोऽनन्तरं कुमारस्य निकुम्भस्य व्यसनं विपत् विनाश इत्यर्थः तस्य या उग्रा दुःसहा वार्ता तामेव गुरोस्तत्पितृव्यस्य रावणस्य सुकरं सुखेन क्रियमाणं निपातं नाशं विदित्वा निकुम्भनिपातश्रवणशोकार्तो रावणः सुखेन निपातनीयो भविष्यतीति मत्वेत्यर्थः तन्निधनाय निकुम्भवधाय उद्यतात्मा उद्युक्तमनाः सन् यत्नं समादधे चकार ।

पक्षे ततः जीवति द्रौणौ कौरवसैन्यस्याजेयत्वनिश्चयानन्तरं मरुतो देवान् नन्दयति असुरांशरूपचमूविनाशनेन सन्तोषयतीति मरुन्नन्दनो हरिः कृष्णः

कृतास्त्रसन्तानविघातवार्ता-
मनीश्वरः सोढुमसौ समन्युः।
प्राणच्छिदः शत्रुबलस्य मध्ये
नेता बलानां विससर्ज हेतिम् ॥१९॥

धृष्टद्युम्नः सपदि पवमानोद्भवस्तीव्रकर्मा
निर्मुक्तास्त्रप्रकरमभितस्तं सवैरोऽभ्युपेतः।

कुमारस्याश्वत्थाम्नो व्यसनस्य या उग्रवार्ता तामेव गुरोर्द्रोणस्य सुकरं निपातं विदित्वा अश्वत्थाम्नो मरणवार्तां श्रुत्वा शोकजडं न्यस्तशस्त्रं द्रोणं धृष्टद्युम्नः अनायासेन निपातयिष्यतीति निश्चित्येत्यर्थः तस्य द्रोणस्य निधनाय उद्यतात्मा सन् यत्नं समादधे। अश्वत्थामनामकं कश्चिद्गजं घातयित्वा अश्वत्थामा हत इति भीमादिभिः श्रावणार्थं चेष्टामकरोदित्यर्थः ॥१८॥

कृतास्त्रेति। कृतः शत्रुभिर्विहितो योऽस्त्रसन्तानस्यास्त्रसमूहस्य विघातो नाशस्तं तस्य वार्तामपि सञ्जातत्वाद्वार्तापिबोध्यः सोढुमनीश्वरोऽसमर्थः असौ बलानां नेता नायको निकुम्भः समन्युः सक्रोधः सन् प्राणच्छिदः परप्राणापहारकस्य शत्रुबलस्य मध्ये हेतिं परिघास्त्रं विससर्ज चिक्षेप हनूमन्तं प्रतीति शेषः।

पक्षे कृतास्त्रः शिक्षितास्त्रो यः सन्तानः पुत्रोऽश्वत्थामा तस्य विघातो वधस्तस्य वार्ताम् अश्वत्थामा हत इति भीमयुधिष्ठिरादिभिः कथितं वृत्तान्तं सोढुमनीश्वरोऽसौ बलानां नेता द्रोणः समन्युः सशोकः सन्। "मन्युः पुमान् क्रुधि। दैन्ये शोके च यज्ञे च" इति मेदिनी। प्राणच्छिदः शत्रुबलस्य मध्ये रणाङ्गनमध्ये इत्यर्थः हेतिं विससर्ज अस्त्रन्यासं चकार। शोकेन न्यस्तशस्त्रो भूत्वा योगेन ईश्वरमुखिरचुर्ध्याननिष्ठोऽभूदित्यर्थः ॥१९॥

धृष्टेति। धृष्टं प्रगल्भं द्युम्नं बलं यस्य सः। "द्युम्नं वित्ते बलेऽपि च" इति मेदिनी। तथा तीव्रमुत्कटं कर्म यस्य सः तथा सवैरो विरोधी पवमानोद्भवो वायुपुत्रो हनूमान् अभितः समन्तात् निर्मुक्तो वानरेषु क्षिप्तोऽस्त्रप्रकरो येन तादृशं तं निकुम्भं सपदि तत्क्षणमेव अभ्युपेतः आभिमुख्येन प्राप्तः सन् तस्य स्कन्धमारूढः

कुर्वन् कायात् पृथगथ शिरः कौरवान् क्षोभयित्वा
संग्रामाग्रे त्रिदिवपदवीपान्थमेनं व्यधत्त ॥२०॥
सन्नद्धवैरापि निरस्तधैर्या
विभ्रष्टनानायुधयोधवाहा ।
दशेव पुंसां प्रतिकूलदैवात्
सेना परेषामभवत् पराची ॥२१॥

सन्नित्यर्थः संग्रामाग्रे रणसम्मुखे कुरवं कुत्सितरवमर्हन्तीति कौरवा राक्षसा-स्तान् क्षोभयित्वा क्षुब्धान् कृत्वा । कौ पृथिव्यां रवान् क्षोभयित्वेति केचित् । अथानन्तरं निकुम्भस्य कायात् शिरः पृथक् कुर्वन् बाहुभ्यां छिन्दन् सन् एनं निकुम्भं त्रिदिवपदव्याः स्वर्गमार्गस्य पान्थं पथिकं व्यधत्त चकार अवधी-दित्यर्थः ।

पक्षे पवमानोऽरणिनिर्मन्थनोत्पन्नो गार्हपत्याग्निः । तथाच मात्स्ये, "अथ यः पवमानस्तु निर्मथ्योऽग्निः स उच्यते । सचवै गार्हपत्योऽग्निः प्रथमो ब्रह्मणः स्मृत" इति । तस्मादुद्भवो यस्य सः द्रोणविनाशाय याजोपयाजद्वयमान-यज्ञाग्नेरुत्पन्न इत्यर्थः । तथा तीव्रकर्मा क्रूरकर्मा तथा सवैराश्वत्थवैरी धृष्टद्युम्नो द्रुपदपुत्रः निर्मुक्तास्त्रप्रकरम् अश्वत्थामवधवार्ताश्रवणेन शोकाकुलतया न्यस्त-शस्त्रसमूहं तं द्रोणम् अभित आभिमुख्येन सपदि अभ्युपेतः प्राप्तः सन् अथ संग्रामाग्रे कौरवान् कुरुवंश्यान् दुर्योधनादीन् क्षोभयित्वा द्रोणस्य शिरः कायात् पृथक् कुर्वन् खड्गेन छित्वा एनं द्रोणं त्रिदिवपदवीपान्थं व्यधत्त ॥२०॥

सन्नद्धेति । परेषां राक्षसानां पक्षे कौरवाणां सेना सन्नद्धवैरापि प्रकृ-ष्टासक्तविद्वेषापि निरस्तधैर्या सेनापतेर्निकुम्भस्य पक्षे द्रोणस्य वधात् धैर्य-रहिता तथा विभ्रष्टानि करेभ्यः स्खलितानि नानायुधानि येषां तादृशा योधा येषु तादृशा वाहा अश्वा यत्र तादृशी च सती प्रतिकूलदैवात् पुंसां दशा अवस्थेव पराची रणात् पराङ्मुखी अभवत् । उपमा ॥२१॥

पितुर्निपातादनुबन्धिवैरः
पत्युर्बलानां तनयः खरस्य ।
रोषेण मूर्च्छन् मकराच उच्चै-
र्युगक्षये चाब्धिरिवोच्चचाल ॥२२॥

अभीतिभाजा विहिताभियोग-
स्तेन क्षणात् क्षौणिपतेर्बलौघः ।
नारायणास्त्राभिहतो बभूव
राहोरधःकाय इवापचेष्टः ॥२३॥

पितुरिति । युगक्षये चेत्यत्र चकार आनन्तर्यार्थः रावणनियोगानन्तर-मित्यर्थः बलानां चतुर्दशसहस्रराक्षसयोधानां पत्युः खरस्य खरनामकस्य राक्षसस्य तनयो मकराक्षः मकराक्षनामा राक्षसः पितुः खरस्य निपातात् दण्डकारण्ये रामेण वधाद्धेतोः अनुबन्धि अनुदिनं वर्द्धमानं वैरं यस्य सः, तथा रोषेण मूर्च्छन् मोहं गच्छन् सन् युगक्षये प्रलये अब्धिरिव उच्चैरतितराम् उच्चचाल, रामवधार्थं चञ्चलो बभूव । अत्रापि रोषेणेत्यस्यानुषङ्गः ।

पक्षे खरस्य तीव्रकर्मणो बलानां पत्युर्द्रोणस्य तनयोऽश्वत्थामा च पितु-र्द्रोणस्य निपातात् धृष्टद्युम्नेन वधाद्धेतोः अनुबन्धिवैरः पुनरपि विवर्द्धमान-विद्वेषः सन् युगक्षये मूर्च्छन्तो जलक्षोभेण मुह्यन्तो मकरा अक्षा सर्पाश्च यत्र तादृशः । "अक्षो ज्ञातार्थशकटव्यवहारेषु पाशके । रुद्राक्षेन्द्राक्षयोः सर्पे विभीतकतरावपि" इति मेदिनी । अब्धिरिव रोषेण उच्चैरुच्चचाल भृशं जज्वाल । मकरस्येव अक्षिणी यस्य स मकराक्ष इत्यश्वत्थामविशेषणमिति केचित् । उपमा ॥ २२ ॥

अभीतीति । अभीतिभाजा भयरहितेन तेन मकराक्षेण विहितः कृतोऽभियोग आक्रमणं यस्य तादृशः क्षौणिपते रामस्य बलौघः सैन्यसमुदायः नारायणस्यास्त्रेण चक्रेण अभिहतश्छिन्नकण्ठो राहोरधःकायः कबन्ध इव क्षणात् अपचेष्टः समरचेष्टारहितो बभूव ।

तदुन्मुक्तनिराबाधबाणैर्वाडवबह्निभिः ।
क्षोणिपालबलाम्भोधिः क्षणात् क्षणमनीयत ॥२४॥
मुक्तायुधमहायोधा सम्भ्रान्तपवनात्मजा ।
रामावरजवाचा सा पर्यवस्थापिता चमूः ॥२५॥

पक्षे तेनाश्वत्थाम्ना नारायणास्त्रेण नारायणदैवतबाणेन अभिहतः शरव्यीकृतः क्षोणिपतेर्युधिष्ठिरस्य बलौघः राहोरधःकाय इव क्षणात् अपचेष्टो बभूव। पितृवधामर्षितेनाश्वत्थाम्ना सर्वपाण्डवबलविनाशाय नारायणास्त्रं प्रक्षिप्तं, तद्दृष्ट्वा सर्वैः शीघ्रं स्वानि स्वान्यस्त्राणि त्यज्यन्ताम् अस्त्रमिदं निरस्त्रं न हन्तीति भगवता कृष्णेनोक्ते सर्वो युधिष्ठिरबलौघः अस्त्रं त्यक्त्वा युद्धचेष्टारहितो बभूवेत्यर्थः। अन्यत् समानम्। उपमा ॥ २३ ॥

तदुन्मुक्तेति। वाडवबह्निभिर्वाडवाग्निस्वरूपैः तेन मकराक्षेण पक्षे अश्वत्थाम्ना उन्मुक्ताः क्षिप्ता निराबाधा निष्प्रतिबन्धा अवार्या इत्यर्थः ये बाणास्तैः कृत्वा क्षोणिपालस्य रामस्य पक्षे युधिष्ठिरस्य बलमेव अम्भोधिः समुद्रः क्षणात् क्षणं व्यापारविकलत्वं निर्व्यापारस्थितिमित्यर्थः अनीयत प्रापितः। एकत्र शत्रोर्लघुहस्ततया योद्धुमसामर्थ्यात् अपरत्र पूर्वोक्तकृष्णवचसा स्वस्वास्त्रपरित्यागादिति भावः। "क्षणः कालविशेषे स्यात् पर्वण्यवसरे महे। व्यापारविकलत्वे च परतन्त्रत्वमध्ययोः" इति हेमचन्द्रः। अन्योऽप्यम्भोधिः वाडवबह्निभिः क्षणम् अवदारणं नाशं नीयते। अत्र साङ्गस्याम्भोधिरूपणात् साङ्गरूपकं, क्षणशब्दस्य श्लिष्टत्वाच्च श्लेषानुप्राणितं, "दृश्यन्ते क्वचिदारोप्याः श्लिष्टाः साङ्गेऽपि रूपके" इत्युक्तेः। क्षणमित्यत्र क्षयमिति क्वचित् पाठः स भारतपक्षे सङ्गतत्वाभावान्न मनोज्ञः ॥ २४ ॥

मुक्तेति। मुक्तानि त्यक्तानि आयुधान्यस्त्राणि यैस्तादृशा महायोधा यत्र सा रामेणैव युयुत्सतो मकराक्षस्य तुच्छत्वेनापरिगृहीतानां वानराणां युद्धाभावादायुधत्याग इति भावः। तथा सम्भ्रान्तः मकराक्षविक्रमदर्शनेन ससम्भ्रमः पवनात्मजो हनूमान् यत्र तादृशी सा चमूर्वानरसेना रामस्य अवरजा निकृष्टा या वाक् मकराक्षं प्रति कटूत्तरं तया पर्यवस्थापिता

श्रीकण्ठकण्ठमचिरादिव कालकूटं
पूर्वं पयोनिधिमिवौर्वमुनेः प्रकोपः ।
आसाद्य मानवतनुं पुरुषं पुराणं
तस्य प्रतापमहिमा प्रशशाम शत्रोः ॥२६॥

स्थिरीकृता मकराक्षविक्रमवचनेन विजयसंशयाना वानराः पुनरपि रामस्य विक्रमवचनं श्रुत्वा विजयनिश्चयेन स्थिरा बभूवुरित्यर्थः । रामावरजस्य लक्ष्मणस्य वाचेति केचित् तद्रामायणविरुद्धम् ।

पक्षे मुक्तायुधा नारायणास्त्रस्य मोघत्वाय त्यक्तास्त्रा महायोधा भीमभिन्न-महावीरा यत्र सा तथा संभ्रान्तः सम्यग्भ्रान्तियुक्तः पवनात्मजो भीमो यत्र तादृशी सा चमूः पाण्डवसेना रामावरजस्य कृष्णस्य वाचा पर्यवस्थापिता । कृष्णवाक्येन नारायणास्त्रप्रतिघाताय सर्वेष्वपि सैन्येषु त्यक्तशस्त्रेषु भीमो वीर्यमदात् यन्नायुधं तत्याज, स एव तस्य सम्भ्रम इति भावः । तादृशञ्च भीमं नारायणास्त्रेणाक्रान्तं कृष्णार्जुनौ स्वयमागत्य रथादवरोपितं त्याजितास्त्रञ्च चक्रतुः" इति भारतम् । कृष्णवाक्य । "शीघ्रं न्यस्यत शस्त्राणि वाहेभ्यश्चावरोहत । एष योगोऽत्र विहितः प्रतिघाते महात्मना । द्विपा-श्वस्यन्दनेभ्यश्च क्षितिं सर्वेऽवरोहत । एवमेतन्न वो हन्यादस्त्रं भूयो निरायुधान्" इत्यादिरूपा ज्ञेया ॥२५॥

श्रीकण्ठेति । तस्य शत्रोर्मकराक्षस्य प्रतापमहिमा पराक्रमातिशयः मानवतनुं लीलया मनुष्यमूर्तिं वस्तुतः पुराणं सर्वप्रपञ्चेभ्यः प्राचीनं पुरुषं परमात्मानं रामम् आसाद्य प्राप्य प्रशशाम प्रशान्तो बभूव । रामो मकराक्षं जघानेति वाक्यार्थः । एतमर्थमुपमाभ्यामुत्कर्षयति—श्रीकण्ठस्य शिवस्य कण्ठम् आसाद्य अचिरात् शीघ्रं कालकूटमिव, तथा पूर्वं प्राक् पयोनिधिम् आसाद्य और्वमुनेः प्रकोपः क्रोध इव, सहि वाडवाग्निरूपेण परिणतः समुद्राभ्यन्तरे निलीन इति पौराणिकी कथा ।

पक्षे तस्य शत्रोरश्वत्थाम्नः प्रतापमहिमा नारायणास्त्रकृततेजस्वित्वातिशयः मानवतनुं पुराणं पुरुषं कृष्णम् आसाद्य प्रशशाम । पूर्वोक्तकृष्णयुक्त्यैव नाराय-

प्रतापमाग्नेयमिवास्त्रमस्य
रुद्ध्वा जितारिं नरदेवपुत्रम्।
तं वीरलक्ष्मीर्जुषते स्म नक्तं
शृङ्गारलक्ष्मीरिव कामदेवम् ॥२७॥

इति राघवपाण्डवीये महाकाव्ये एकादशः सर्गः।

वास्त्रप्रतिघातादिति भावः। अन्यत् समानम्। अत्र एकस्योपमेयस्योपमानत्रयेनोत्कर्षख्यापनान्मालोपमा ॥२६॥

प्रतापेति। अस्य मकराक्षस्य प्रतापमिव साक्षात् पराक्रममिवेत्युत्प्रेक्षा आग्नेयम् अस्त्रं रुद्ध्वा स्वास्त्रेण प्रतिहत्य जितो विनाशितोऽरिर्मकराक्षो येन तादृशं तं नरदेवपुत्रं रामं कामदेवं कन्दर्पम् अथच एतत्काव्यकारयितृनृपविशेषं शृङ्गारलक्ष्मीः शृङ्गारशोभेव नक्तं रात्रौ वीरलक्ष्मीः शूरत्वशोभा जुषते स्म सिषेवे।

पक्षे साक्षादाग्नेयास्त्रमिव अश्वत्थाम्नः प्रतापं नारायणास्त्रप्रयोगजनितपराक्रमं रुद्ध्वा श्रीकृष्णोपदेशेन निवार्य जिताः पराभूता अरयः कौरवा येन तादृशं तं नरदेवपुत्रं युधिष्ठिरं नक्तं कामदेवं शृङ्गारलक्ष्मीरिव वीरलक्ष्मीर्जुषते स्म उत्प्रेक्षोपमयोः सङ्करः ॥२७॥

इति श्रीप्रेमचन्द्रतर्कवागीशभट्टाचार्यविरचितायां राघवपाण्डवीयटीकायां कपाटविपाटिकाख्यायामेकादशः सर्गः।

—••—

## द्वादशः सर्गः ।

अथ गोप्तारमङ्गानां जिष्णोर्जेतारमाहवे ।
सम्भाव्योद्योजयामास सदृशाख्यो जनेश्वरः ॥१॥

स शक्रचापच्छवि मेघनादो
धुन्वन् धनुर्ज्याशरसङ्गि कर्णः ।
रणाय भर्तुर्जयकारणाय
जवेन जैत्रं रथमारुरोह ॥२॥

अथेति। अथ मकराक्षवधानन्तरं स जनेश्वरो राक्षसजननाथो दशाख्यो दशमुखो रावणः जिष्णोरिन्द्रस्य जेतारं मेघनादम् अङ्गानां हस्त्यश्वरथपादातरूपाणां सेनाङ्गानां गोप्तारं रक्षितारं सम्भाव्य इन्द्रजितैव सैन्यानां रक्षणं तेन च वानरचमूनिपातो भविष्यतीति निश्चित्येत्यर्थः। आहवे युद्धे उद्योजयामास। मेघनादं सेनापतिं निश्चित्य युद्धाय सैन्योद्योगमकल्पयदित्यर्थः।

पक्षे अथ द्रोणवधानन्तरं सतामशाख्योऽशासनीयो जनेश्वरो राजा दुर्योधनः अङ्गानां देशविशेषाणां गोप्तारं रक्षितारं कर्णम् आहवे जिष्णोरर्जुनस्य जेतारं सम्भाव्य कर्णएव अर्जुनजयं करिष्यतीति मोहान्निश्चित्येत्यर्थः उद्योजयामास। कर्णं सेनापतिं कृत्वा सैन्यानि प्रेरयामासेत्यर्थः। "जिष्णुर्ना वासवेऽर्जुने" इति विश्वः ॥ १ ॥

स इति। स मेघनाद इन्द्रजित् शक्रचापस्य इन्द्रधनुष इव छविः शोभा यस्य तादृशं धनुर्धुन्वन् कम्पयन् तथा ज्या मौर्वी तदारोपितः शरो बाणः ज्याशरः। शाकपार्थिवादित्वात् कर्मधारयः। तत्सङ्गी कर्णौ दक्षिणश्रवणं यस्य सः कर्णान्तकृष्टमौर्वीक इत्यर्थः। तादृशश्च सन् भर्तू रावणस्य जयकारणाय जयार्थं रणाय रणं कर्तुम्। तुमर्थात् कर्मणि इति चतुर्थी। जवेन वेगेन जैत्रं बहुषु युद्धेषु जयप्रदं रथम् आरुरोह।

उत्सर्पत्कलकलघोषभीषणाभि-
र्व्यालोलध्वजपटलीढदिक्तटीभिः ।
संग्रामप्रमदभरादसम्भ्रमाभि-
र्वीराणामथ समनाहि वाहिनीभिः ॥३॥

समिद्धराधेयभुजप्रतापे
द्विषद्बले दृग्विषयं प्रपन्ने ।
चमूभृता वह्निभवेन गुप्ता
नरेन्द्रसेना त्वरते स्म योद्धुम् ॥४॥

पक्षे शक्रचापेन छविर्यस्य तादृशो यो मेघस्तस्येव नादः सिंहनादो यस्य तादृशः स कर्णः व्याघ्रसङ्गि मौर्वीबाणयुक्तं धनुर्धुन्वन् सन् भर्तुर्दुर्योधनस्य जयकारणाय रणाय जवेन जैत्रं रथम् आरुरोह। अत्र पूर्वपक्षे शक्रचापच्छवीत्यत्र लुप्तोपमा उत्तरत्र च मेघनाद इत्यत्र ॥ २ ॥

उत्सर्पदिति। अथानन्तरं वीराणां बलनायकशूराणां वाहिनीभिः सेनाभिः समनाहि युद्धाय सन्नद्धम्। भावे लुङ्। किम्भूताभिः उत्सर्पता उद्गच्छता कलकलघोषेण कोलाहलेन भीषणाभिर्भयङ्करीभिः तथा व्यालोलाश्चञ्चला ये ध्वजपटास्तैर्लीढा व्याप्ता दिक्तट्यो दिक्प्रान्ता याभिस्तास्तथा ताभिः तथा संग्रामे संग्रामाय वा यः प्रमदभरो हर्षातिशयस्तस्माद्धेतोरसम्भ्रमाभिर्निर्भयाभिः। प्रहर्षणीवृत्तं,—"त्र्याशाभिर्मनजरगैः प्रहर्षणीयम्" इति लक्षणात् ॥ ३ ॥

समिद्धेति। समिद्धरायां युद्धभूमौ आधेयौ धारयितुं योग्यौ भुजप्रतापौ यस्य तादृशे यद्वा राधा धन्विनां चित्रभेदः वेधविशेष इति यावत्। "राधो मासान्तरे राधा चित्रभेदे च धन्विनाम्" इति मेदिनी। "राधा विशुविशाखयोः। विष्णुक्रान्तामलक्योश्च गोपीवेधविशेषयोः" इति हेमचन्द्रश्च। तत्र साधू राधेयः समिद्ध उद्दीप्त उत्कृष्ट इत्यर्थः राधेयौ भुजप्रतापौ यस्य तादृशे द्विषद्बले शत्रुसैन्ये दृग्विषयं दृष्टिगोचरतां प्रपन्ने प्राप्ते सति चमूभृता सेनापतिना

रभसचलितनानाहेतिबालप्रवाले
प्रतिमुखमुपनीते मृत्युना मन्युना च।
द्रुतमिव वनराजीनिर्गते निम्नगे द्वे
रणभुवि जघटाते ते उभे राजसैन्ये ॥५॥

आहूतामरलोकवारवनितं दिग्व्यापि भेरीरवै-
र्दूराकृष्टकबन्धभारमचिरात् सान्द्रैरसृक्सिन्धुभिः।
सम्बाधीकृतनाकनायकपुरं संसक्तकश्रेणिभि-
र्दन्तादन्ति कचाकचि द्रुतमभूद्युद्धं तलातल्यपि ॥६॥

वह्निभवेन नीलेन गुप्ता रचिता नरेन्द्रस्य रामस्य सेना योद्धुं त्वरतेस्म सत्वरा बभुव।

पक्षे समितौ राधेयस्य कर्णस्य भुजप्रतापो यत्र तादृशे द्विषद्दले दुर्योधनसैन्ये दृग्विषयं प्रपन्ने सति वह्निभवेन यज्ञीयवह्निकुण्डोत्पन्नेन धृष्टद्युम्नेन चमूभृता गुप्ता नरेन्द्रस्य युधिष्ठिरस्य सेना योद्धुं त्वरतेस्म ॥ ४ ॥

रभसेति। मृत्युना यमेन मन्युना रोषेण च कर्त्रा प्रतिमुखं परस्परसम्मुखम् उपनीते प्रापिते ते उभे राज्ञो रामरावणयोः पक्षे युधिष्ठिरदुर्योधनयोः सैन्ये रणभुवि द्रुतं जघटाते संसक्ते बभूवतुः। उत्प्रेक्षय विशिनष्टि,—रभसेन वेगेन चलिताश्चञ्चला नाना बहुविधा हेतयोऽस्त्राण्येव बाला नवीनाः प्रवालाः किशलया ययोस्तादृशे वनराजीभ्यां निर्गते द्वे निम्नगे नद्याविव अन्यत्रापि वननद्योः प्रवालास्तिष्ठन्ति। अत्र हेतिषु प्रवालत्वारोपादुपमा तेन चोत्प्रेक्षाङ्गाङ्गितया सङ्कीर्णा। मालिनीवृत्तम् ॥ ५ ॥

आहूतेति। तयोः सैन्ययोर्द्रुतं युद्धमभूत्। किम्भूतं दिग्व्यापिभिर्दिगन्तगामिभिर्भेरीरवैः कृत्वा आहूताः हतवीरगणग्रहणार्थं ज्ञाताह्वाना अमरलोकवारवनिताः स्वर्वेश्या यत्र तत् तथा अचिरात् झटिति प्रवर्तमानैः सान्द्रैर्निविडैर्वेगवत्प्रवाहैरित्यर्थः असृक्सिन्धुभिः रुधिरनदैः। "सिन्धुर्वमथुदेशाब्धिनदे ना सरिति स्त्रियाम्" इति मेदिनी। दूराकृष्टा दूरं नीता

विधाय निस्पन्दमिवारिवृन्दं
स तीव्रधामप्रभवः प्रतापैः ।
विवेश वीरः स्वनिवेशभूमिं
द्वीपान्तरं सूर्य इवोपसन्ध्यम् ॥७॥
प्रगे सहस्रांशुरिवोज्ज्वलप्रभः
सवेगसज्जीकृतभीमकार्मुकः ।

कबन्धभारा निर्मस्तककलेवरसमूहा यत्र तत् तथा संसप्तकप्रेषिभिः युद्धव्रतैः समर्थैन संग्रामादनिवर्तिसैन्यसमूहैः कर्दमिः सम्बाधीकृतं समन्तादाक्रान्तं नाकनायकस्य इन्द्रस्य पुरं यत्र तत् तथा दन्तादन्ति दन्तैश्च दन्तैश्च प्रहृत्य प्रवृत्तम् । तृतीयासप्तम्यन्तयोः सरूपयोर्युद्धे क्रियाव्यतीहारे इति बहुव्रीहिः । इच्क्रियाव्यतीहारे इतीच्समासान्तः क्वचिदन्यत्रापीति दीर्घः इच्प्रत्ययान्त इत्यनेन च तिष्ठद्वादित्वविधानादव्ययीभावनिपातनेनाव्ययत्वम् एवमग्रेऽपि । तथा कचाकचि कचेषु कचेषु गृहीत्वा प्रवृत्तं कचाः केशाः । तथा तलातलि तलैश्च तलैश्च प्रहृत्य प्रवृत्तं तलाश्चपेटाः । "तलश्चपेटे तालद्रौ" इति हेमचन्द्रः । शार्दूलविक्रीडितं वृत्तम् ॥ ६ ॥

विधायेति । तीव्रधामा उत्कटतेजा रावणस्तत्प्रभवस्तत्सुतः स वीर इन्द्रजित् ध्वस्तरथसारथिर्भूमिष्ठो युध्यन्निति शेषः अरिवृन्दं वानरसमूहं प्रतापैर्निस्पन्दमिव सुप्तमिव विधाय कृत्वा उपसन्ध्यं सन्ध्यासमये । विभक्त्यर्थेऽव्ययीभावः । सूर्यो द्वीपान्तरमिव स्वनिवेशभूमिं स्वनिलयनस्थानं लङ्कापुरमित्यर्थः विवेश प्रविष्टवान् ।

पक्षे तीव्रधामा सूर्यस्तत्प्रभवः स वीरः कर्णः अरिवृन्दं पाण्डवसैन्यसमूहं प्रतापैः स्वभुजपराक्रमैर्निस्पन्दमिव विधाय उपसन्ध्यं सन्ध्यायां स्वनिवेशभूमिं स्वशिबिरस्थानं सूर्यो द्वीपान्तरमिव विवेश सन्ध्यायामुपस्थितायां बलानि अवहृत्य निजशिबिरं जगामेत्यर्थः । उत्प्रेक्षोपमयोः संसृष्टिः ॥७॥

प्रगे इति । प्रगे सहस्रांशुरिव प्रातःकालीन सूर्य इव उज्ज्वला प्रभा

रथेन भूयः समराय निर्ययौ
विपक्षवाञ्छानुगशल्यसारथिः ॥८॥
निर्यतीषु परितो वरूथिनी-
ष्वाहवाय परिपाकदारुणः।
श्रूयते स्म चकितैश्चमूचरैः
कर्णशल्यपरुषोक्तिविस्तरः ॥९॥

कान्तिर्यस्य सः तथा वेगेन झटिति सज्जीकृतं सगुणीकृतं भीमं भयङ्करं कार्मुकं धनुर्येन सः तथा विपक्षवाञ्छा शत्रुवधेच्छा तस्या अनुगानि अनुकूलानि शल्या-न्यस्त्रविशेषाः सारथिश्च यस्य तादृश इन्द्रजित् भूयः पुनः रथेन रथमारुह्य। तदर्थमेव तस्य लङ्काप्रवेशादिति भावः। समराय समरं कर्तुम्। तुमर्थात् कर्मणा इति चतुर्थी। निर्ययौ लङ्कातो निर्जगाम।

पक्षे सहस्रांशुरिव उज्ज्वलप्रभः स कर्णः प्रगे प्रातः कृताह्निक इति शेषः भूयः पुनः परदिने इत्यर्थः रथेन समराय निर्ययौ शिविरान्निर्जगाम। अस्मिन् पक्षे रथेनेति स्वरूपकथनमात्रम्। किम्भूतः विपक्षाणां युधिष्ठिरादीनां या वाञ्छा अभिलषितं कटूक्त्या कर्णस्य तेजोवध इत्यर्थः तदनुगस्तत्कारी शल्यो मद्राधिपः सारथिर्यस्य सः अर्जुनस्य कृष्णः सारथिर्मम तु तथाविधः सारथिश्चेत्तं जेतुं शक्नोमीति कर्णेनोक्ते दुर्योधनेनानुरुध्य शल्यः कर्णस्य सारथिः कृत इत्यर्थः। स च पूर्वं दुर्योधनेन स्वपक्षतां नीतोऽपि कर्णस्य सारथिर्भूत्वा युष्माकं पाण्डवानामानुकूल्याय तस्य तेजोवधं करिष्यामीति प्रतिज्ञातवानि-त्यस्य विपक्षवाञ्छानुगत्वम्। शेषं समानम्। प्रथमपादे उपमा ॥८॥

निर्यतीष्विति। वरूथिनीषु उभयसेनासु आहवाय युद्धार्थं परितः समन्तान्निर्यतीषु सतीषु चमूचरैः सैनिकैश्चकितैर्भीतैः सद्भिः परिपाके परिणामे अनन्तरमेव महायुद्धरूपतदर्थानुष्ठाने इत्यर्थः दारुणो भयङ्करः कर्णयोः शल्य-रूपाः श्रवणव्यथाजनिका इत्यर्थः याः परुषोक्तयः परस्परं कटूक्तयस्तासां विस्तरः श्रूयते स्म श्रुतः।

पक्षे परिपाकदारुणः कर्णस्य तेजोवधहेतुत्वात् परिणामभयङ्करः कर्ण-

अनुकूलजुषा सोऽथ वीरः सारथिना पुरः ।
अंशुमानरुणेनेव नीयमानरथो बभौ ॥१०॥

दिग्भित्तिप्रतिघट्टनोद्भटमहाघोषैर्जगद्भीषणो
बाणासारसृजा धनुर्जलमुचा तन्वन्नसृङ्निम्नगाः ।
नानावीरविमर्दनर्तितभुजाकण्डूविनोदः क्षणा-
दभ्यर्णं प्रलयार्णवप्रतिनिधिः पृथ्वीपतेः प्राप सः ॥११॥

अन्ययोः राधेयमद्राधिपयोः परुषोक्तिविस्तरः श्रूयते स्म । शेषं समानम् । रथोद्धता वृत्तं,—"रान्नराविह रथोद्धता लगौ" इति लक्षणात् ॥ ९ ॥

अनुकूलेति । अथानन्तरं स वीर इन्द्रजित् पुरः पुरोवर्तिना अनुकूलजुषा अनुकूलानुकूल्यकारिणा सारथिना नीयमानो रथो यस्य तादृशः सन् अरुणेन गरुडाग्रजेन नीयमानरथः अंशुमान् सूर्य इव बभौ ।

पक्षे अथ परस्परकलहानन्तरम् अनुकूलजुषा प्रकृतकार्यस्यावश्यानुष्ठेयत्वज्ञानेनानुकूल्यं भजता सारथिना शल्येन नीयमानरथः स वीरः कर्णः । शेषं तुल्यम् । पुर इत्यत्र पर इति पाठे परः शत्रुरित्यर्थः । उपमा ॥१०॥

दिग्भित्तीति । स इन्द्रजित् क्षणाच्छीघ्रं पृथ्वीपते रामस्य रामसैन्यस्येत्यर्थः अभ्यर्णं समीपं प्राप । किम्भूतः दिश एव भित्तयस्तत्र प्रतिघट्टनेन प्रतिध्वानेन उद्भटा उत्कटाः ये महाघोषाः सिंहनादास्तैः कृत्वा जगद्भीषणः जगतां भयङ्करः तथा बाणानाम् आसारो वेगेन वर्षणं तत्सृजा तत्कारिणा धनुरेव जलमुचा मेघस्तेन असृङ्निम्नगाः रुधिरनदीस्तन्वन् विस्तारयन् तथा नानावीराणाम् अनेकशूराणां विमर्दे रणसम्मर्दे नर्तिता आस्फालिता या भुजा बाहवस्तासां कण्डूः रणेच्छया स्फुरणस्य विनोदोऽपनयनं यस्मात् सः तथा प्रलयार्णवस्य प्रतिनिधिः सदृशः अत्युद्भट इत्यर्थः ।

पक्षे स कर्णः पृथ्वीपतेर्युधिष्ठिरस्याभ्यर्णं प्राप शेषं समानम् । अत्र दिग्भित्तीति धनुर्जलमुचेति च रूपकं, प्रलयार्णवप्रतिनिधिरित्युपमा, तदनयोः संसृष्टिः । शार्दूलविक्रीडितं वृत्तम् ॥ ११ ॥

कुर्वाणौ बाणवर्षैर्वियति दिविषदां स्वैरयानान्तरायं
हुङ्कारैः कर्षयन्तौ बहलमदनदीनिर्गमं दिग्गजानाम्।
सद्यः प्रत्यर्थिवर्गैरपि गुणविवशैस्तूयमानप्रकर्षौ
प्रायुध्येतां प्रवीरौ सुभटजनदृशां लक्ष्यभूतावुभौ तौ॥१२

स वाक्शरैराहितमर्मघट्टन-
श्चकार पीड़ां महतीं महीपतेः।
क्षणेन सीताक्षपणव्यलीकतः
कृषीवलस्येव महानवग्रहः ॥१३॥

कुर्वाणाविति। तावुभौ प्रवीरौ प्रकृष्टशूरौ हनूमदिन्द्रजितौ, मायासीता-वधात् पूर्वं हनूमत एवाकरे युद्धवर्णनात्, पक्षे युधिष्ठिरकर्णौ प्रायुध्येतां प्रकर्षेण युयुधाते। किम्भूतौ बाणवर्षैर्निरन्तरबाणविक्षेपैः कृत्वा वियति गगने दिविषदां देवानां स्वैरयानायाः स्वच्छन्दभ्रमणस्य अन्तरायं विघ्नं कुर्वाणौ, बाणेति युद्धास्त्रमात्रोपलक्षणं, तथा हुङ्कारैर्हुमिति शब्दैः कृत्वा दिग्गजानां ऐरावतादीनां बहलमदस्य प्रभूतमदजलस्य नद्या निर्गमं कृदभिहितभावत्वात् निर्गतां नदीमित्यर्थः कर्षयन्तौ दूरं नयन्तौ, हुङ्कारश्रवणभयेन दिग्गजान् बहलमदस्राविणः कुर्वन्तावित्यर्थः, भयेनापि गजा मदं मुञ्चन्तीति प्रसिद्धेः। तथा प्रत्यर्थिवर्गैरपि का कथा आत्मीयोदासीनानां शत्रुवृन्दैरपि गुणविवशैः तयोः शौर्यमोहितैः सद्भिः सद्यः स्तूयमानप्रकर्षौ प्रशंसितयुद्धोत्कर्षौ तथा सुभटजनदृशां सुयोद्धृजनचक्षुषां लक्ष्यभूतौ सुयोद्धृभिः साभिनिवेशं दृष्टा-वित्यर्थः। अत्र बाणवृष्ट्या देवानां गगनसञ्चारनिवारणस्य, हुङ्कारेण दिग्ग-जमदनदीनिर्गमनस्य चासम्बन्धेऽपि तत्सम्बन्धकथनादतिशयोक्तिद्वयं, तृतीयपादे च अपिकारादर्थापत्तिस्तदासां संसृष्टिः। स्रग्धरावृत्तम्॥ १२॥

स इति। स इन्द्रजित् वाचः शरा इव वाक्च शराश्चेति वा वाक्शराः तैः कृत्वा आहितं कृतं मर्मघट्टनं हनूमदादीनां मर्मपीड़ा येन तादृशः सन् क्षणेन तत्क्षणमेव सीतायाः मायारचितायाः जानक्या यत् क्षपणं वधस्तदेव व्यलीकं

**नैर्घृण्यात् सव्यथं शत्रोर्नरदेवमुपस्थितः ।**
**तद्गिराफल्गुनोऽप्याप भ्राता चित्तस्य विक्रियाम् ॥१४॥**

अत्यन्ताप्रियकर्म । "अलीकं त्वप्रियेऽनृते" इत्यमरः । तस्माद्धेतोर्महीपते रामस्य महतीं पीड़ां चकार, हनूमदादिमुखेन इन्द्रजित्कर्तृकसीतावधं श्रुत्वा रामः शोकेन मुमोहेत्यर्थः । उपमयेदं द्रढ़यति सीता लाङ्गलपद्धतिः । "सीता लाङ्गलपद्धतिर्वैदेहीस्वर्गगङ्गासु" इति मेदिनी । तस्याः उपघातसम्भवस्तदेव व्यलीकं तस्माद्धेतोः कृषीवलस्य कर्षकस्य महानत्यन्तोऽवग्रहो वृष्टिप्रतिबन्ध इव । अवाद्वृष्टिप्रतिबन्धे इत्यवपूर्वाद्ग्रहातेर्डः । अवग्रहो यथा सीतोपघात-रूपाप्रियात् कर्षकस्य महतीं पीड़ां करोति तथेत्यर्थः ।

पक्षे स कर्णः शराश्च वाचश्च वाक्शराः । अल्पाच्त्वात् वाचः प्राग्भावः । तैः कृत्वा आहितमर्मघट्टनः सन् प्रथमं शरैः पश्चात् वाचा च आहितमर्मघट्टन इत्यर्थः । तादृशी वाक् च,—"कथं नाम कुले जातः क्षत्रधर्मे व्यवस्थितः । प्रजह्यात् समरं भीतः प्राणान्रक्षन्महाहवे" इत्यादिका भारतोक्ता ज्ञेया । महीपतेर्युधिष्ठिरस्य पीड़ां चकार । उपमानयोजनं पूर्ववत् । कर्णेन विहत-रथसारथिर्वाक्शरैर्भिन्नमर्मा युधिष्ठिरः समरं तत्याजेत्यर्थः । पूर्वत्र श्लेषानु-प्राणितः परत्र केवल उपमालङ्कारः ॥१३॥

नैर्घृण्यादिति । शत्रोरिन्द्रजितो नैर्घृण्यात् अकारणसीतावधेन निर्दय-त्वात् । "कारुण्यं करुणा घृणा कृपा दया" इत्यमरः । सव्यथं शोक-पीड़ितं नरदेवं रामम् उपस्थितः प्राप्तो भ्राता लक्ष्मणः तस्य रामस्य गिरा दीनवचसा अफल्गुनोऽपि ससारस्यापि हर्षशोकाद्यनभिभूतत्वादत्युत्कृष्टस्या-पीत्यर्थः । "फल्गु सारेऽभिधेयवत्" इति मेदिनी । तादृशस्य चित्तस्य विक्रियां विकारम् आप प्राप्तवान् । सीतावधशोकार्तस्य रामस्य दीनवचनं श्रुत्वा लक्ष्मणोऽपि शोकेन विकृतचेता बभूवेत्यर्थः ।

पक्षे शत्रोः कर्णस्य नैर्घृण्यात् सव्यथं कर्णस्य निर्दयवाणप्रहारेण व्यथितं नरदेवं युधिष्ठिरं शिविरमागत्य विश्राम्यन्तमिति शेषः उपस्थितो भ्राता फल्गुनोऽपि अर्जुनोऽपि । "फाल्गुनः फल्गुन" इत्यमरटीका । तस्य युधि-ष्ठिरस्य गिरा 'धिग्गाण्डीवं धिक् च ते बाहुवीर्यम्' इत्यादिवचनेन चित्तस्य विक्रियां क्रोधविकारम् आप । क्रोधेन युधिष्ठिरं हन्तुमुद्यतो बभूवेत्यर्थः ॥१४॥

कृतानुशययोरन्तः प्रतियोगि विभीषणः ।
अपनिन्ये तयोः कृष्णः कार्यज्ञो मन्युमूर्च्छनम् ॥१५॥

कृतप्रसादेन ततो नृपेण
वधाय शत्रोः प्रहितः कनीयान् ।
बलेन सार्द्धं वृहता बलीयान् ।
रोद्धुं द्विषामुद्यममुद्यतोऽभूत् ॥१६॥

कृतेति। कृष्णः राक्षसत्वात् कृष्णवर्णः तथा कार्यज्ञः मायाविहितराक्षसकार्यवेत्ता विभीषणः कृतानुशययोः सीतावधश्रवणेन कृतानुतापयोस्तयोरामलक्ष्मणयोरन्तर्मनसि प्रतियोगि प्रकृतकार्यविरोधि मन्योः शोकस्य मूर्च्छनं वृद्धिम् अपनिन्ये, मिथ्यैतत् भवतां मोहनार्थमिन्द्रजिता मायारचिताया एव सीताया वधः कृतो न तात्त्विकायाः इत्यादिना तौ शोकशून्यौ चकारेत्यर्थः।

पक्षे प्रतियोगिविभीषणः शत्रुभयङ्करः तथा कार्यज्ञः एतयोरेवमवस्थायाम् असुरांशनृपबलविनाशमन्तरेण प्रकृतकार्यभूभारहरणं न स्यादित्येवं जानन् कृष्णो वासुदेवः कृतानुशययोः कृतपश्चात्तापयोस्तयोर्युधिष्ठिरार्जुनयोरन्तर्मनसि प्रवृत्तं मन्योर्दैन्यस्य मूर्च्छनम् अपनिन्ये। "मन्युः पुमान् क्रुधि। दैन्ये शोके च यज्ञे च" इति मेदिनी। गाण्डीवादिनिन्दया कुपितेऽर्जुने प्रतिज्ञारक्षार्थं युधिष्ठिरं हन्तुमुद्यते कृष्णोपदेशेन वधप्रतिनिधीभूतं तिरस्कारं कुर्वति च तच्छ्रुत्वा युधिष्ठिरे च निर्वेदात् वनं प्रस्थिते पुनरर्जुने च स्वात्मानं हन्तुमुद्यते कृष्णस्तयोर्विविधोक्तिभिर्मन्युमपनीतवानिति भारतोक्तमनुसन्धेयम् ॥१५॥

कृतेति। ततो विभीषणवचनानन्तरं बलीयान् अतिबलवान् कनीयान् कनिष्ठो लक्ष्मणः कृतप्रसादेन प्रसन्नेन नृपेण रामेण शत्रोरिन्द्रजितो वधाय प्रहितः प्रेरितः सन् वृहता महता बलेन सैन्येन सार्द्धं सह द्विषामिन्द्रजिदादीनाम् उद्यमं निकुम्भिलायां होमपूर्वकं युद्धोद्योगं रोद्धुं निवारयितुम् उद्यतोऽभूत्, तदर्थं निकुम्भिलासमीपं न्यग्रोधमूलं जगाम। निकुम्भिलायां हुते वह्नौ इन्द्रजिदवध्यो भवति। तस्मात् होमात् प्रागेवाक्रमणीय इति विभीषणोक्तेः तदर्थं निकुम्भिलाद्वारमवष्टभ्य लक्ष्मणस्तस्थावित्यर्थः।

अतुलबलहनूमत्कल्पितस्यन्दनश्री-
र्दवदहन इवासौ वैरिकक्षान् विगाह्य ।
प्रतिहतवृषसेनाडम्बरं तूर्णमेनं
प्रसभमकृत बाह्वोर्विक्रमाणां निकाषम् ॥१७॥
अत्रान्तरे पार्ष्णिममुष्य गृह्णन्
विभीषणः संयति भीमसेनः ।

पक्षे ततः कृष्णवचनानन्तरं बलीयान् कर्णजयसमर्थः कनीयान् अर्जुनः शत्रोः कर्णस्य वधाय कृतप्रसादेन नृपेण युधिष्ठिरेण प्रहितः सन् अनन्तरं समरभूमिं गत्वा बृहता बलेन सार्द्धं द्विषां कर्णादीनाम् उद्यमं सोमकसृञ्जय-पाञ्चालसैन्यवधोद्योगं रोद्धुम् उद्यतोऽभूत् ॥ १६ ॥

अतुलेति । अतुलबलोऽतितेजा यो हनूमान् तेन कल्पिता स्यन्दन-श्रीरथशोभा येन तादृशः हनूमत्पृष्ठमारूढ इत्यर्थः असौ लक्ष्मणः दवदहन इव वनाग्निरिव वैरिणः कक्षाः शुष्कवनानीव ते तथा तान् विगाह्य प्रताप्य। "कक्षो वीरुधि दोर्मूले कच्छशुष्कवने तृणे" इति हेमचन्द्रः। प्रतिहतो वृषसेनाया इन्द्रसैन्यस्य आडम्बरः संरम्भो येन तादृशम्। "आडम्बरस्तु संरम्भे गजेन्द्राणां च गर्जिते तूर्यनिस्वने" इति हेमचन्द्रः। एनमिन्द्रजितं तूर्णं प्रसभं बलेन बाह्वो-र्विक्रमाणां निकाषं निकषणशिलां अकृत चकार। इन्द्रजिति बाहुबलं प्रका-शयामासेत्यर्थः ।

पक्षे अतिबलेन हनूमता कल्पिता जनिता स्यन्दनस्य श्रीर्यस्य तादृशो-ऽसौ अर्जुनः प्रतिहतो वृषसेनस्य तन्नामकर्णपुत्रस्याडम्बरो यत्र तथा तथा कर्णसमक्षं कर्णपुत्रं वृषसेनं विनाश्येत्यर्थः एनं कर्णं बाह्वोर्विक्रमाणां निकाषम् अकृत। अन्यत् समानम्। निकाषेति अधिकरणे घञ्। अत्र द्वितीय-पादे उपमा, चतुर्थे निकषणशिलाया आरोप्यमाणत्वाद्रूपकं तदनयोः संसृष्टिः ॥१७॥

अत्रेति। अत्रान्तरे एतस्मिन्नवकाशे भीमा सेना यस्य तादृशो विभीषणः अमुष्य लक्ष्मणस्य पार्ष्णिं सैन्यपृष्ठभागं गृह्णन्नाश्रयन् सन्। "पार्ष्णिः स्त्रीष्णुत-

दुःशासनं वैरिबलं प्रमथ्य
बलेन बाह्वोर्यमसाच्चकार ॥१८॥
अरातिरक्तच्चरणातिरौद्रं
भ्राम्यद्गदाभीषणबाहुदण्डम् ।
तथा तमालोक्य रणे चरन्तं
साक्षात् कृतान्तं मनुते स्म लोकः ॥१९॥
तद्वै भीषणमालोक्य रणकर्म महाजनः ।
राजदारोपरोधस्य फलं प्राप्तममन्यत ॥२०॥

स्त्रियाम् । स्त्रियां द्वयोः सैन्यपृष्ठे पादग्रन्थ्याधरेऽपि च" इति मेदिनी । संयति युद्धे दुःशासनं दुःखेन शासनीयं वैरिबलमिन्द्रजित्सैन्यं बाह्वोर्बलेन प्रमथ्य आहत्य यमसाच्चकार यमाय देयं कृतवान् यमलोकं प्रेषयामासेत्यर्थः ।

पक्षे अमुष्यार्जुनस्य पार्ष्णिं गृह्णन् तथा बिभीषणः शत्रूणां भयङ्करो भीमसेनो वृकोदरः बाह्वोर्बलेन वैरिबलं दुर्योधनसैन्यं प्रमथ्य दुःशासनं तन्नामानं दुर्योधनभ्रातरं यमसाच्चकार । अन्यत्तुल्यम् ॥१८॥

अरातीति । लोकस्तं विभीषणं पक्षे भीमम् आलोक्य साक्षात् कृतान्तं यमं मनुतेस्म । किम्भूतम् अरातीनां रक्तच्चरणेन च्चरितरक्तसम्पर्केण अतिरौद्रम् अत्युग्रं तथा भ्रामन्त्या गदया भीषणौ बाहुदण्डौ यस्य तं किञ्च तथा तेन तेन प्रकारेण रणे चरन्तम् ॥१९॥

तदिति । महाजनः वैभीषणं विभीषणसम्बन्धि । तस्येदमितिटण् । तत् रणकर्म आलोक्य प्राप्तमुपस्थितं राज्ञो रामस्य दाराः सीता तेषामुपरोधस्य हृत्वा लङ्कायां स्थापनस्य फलम् अमन्यत । सीतोपरोध एव राक्षसगणक्षयरूपेण परिणमते इति ज्ञातवानित्यर्थः ।

पक्षे वै पादपूरणे निश्चये वा । भीषणं भयङ्करं रणकर्म भीमस्य युद्धक्रियां राज्ञो युधिष्ठिरस्य दारा द्रौपदी तेषामुपरोधः सभाप्रवेशपूर्वककेशवसनाकर्षणादिः । शेषं तुल्यम् ॥ २० ॥

तदा सौमित्रिणा बाणैर्जिष्णुना संमुखीकृतः।
अङ्गानामीश्वरः क्षुभ्यन्मेघनादो रुषं दधौ ॥२१॥

बलभारनिरन्तरा धरित्री
गगनं निर्विवरञ्च दिव्यलोकैः।
रजसा पिहितं दिगन्तरालं
न विभागो निरनीयत त्रिलोक्याः ॥२२॥

प्रथममतनुभिस्तौ जघ्नतुः सिंहनादैः
परमपि च महोल्काक्षेपरूक्षैः कटाक्षैः।

तदेति। तदा जिष्णुना जयिना सौमित्रिणा लक्ष्मणेन बाणैः सम्मुखीकृतः सम्मुखतां नीतः लक्षीकृत इत्यर्थः अतएव क्षुभ्यन् प्रतिचिकीर्षया क्षोभं गच्छन् तथा अङ्गानां हस्त्यश्वादिसेनाङ्गानां ईश्वरः प्रभुर्मेघनाद इन्द्रजित् रुषं दधौ कुपितोऽभूत्।

पक्षे तदा मेघस्येव नादो यस्य तादृशोऽसौ अङ्गानां देशविशेषाणाम् ईश्वरो राजा कर्णः मित्रिणा कृष्णरूपमित्रवता जिष्णुना अर्जुनेन बाणैः सम्मुखीकृतः सन् अतएव क्षुभ्यन् सन् रुषं दधौ ॥ २१ ॥

युद्धाडम्बरं वर्णयति।

बलेति। धरित्री रणभूमिः बलभारेण सैन्यवृन्देन निरन्तरा निरवकाशा बलैः समन्तात् व्याप्तेत्यर्थः। तथा गगनञ्च दिव्यलोकैर्युद्धदर्शनार्थमागतैर्देवादिभिः पक्षे कर्णपक्षपातिभिः सूर्यादिभिः अर्जुनपक्षपातिभिरिन्द्रादिभिश्चेत्यर्थः निर्विवरं निरवकाशं तथा दिशामन्तरालं मध्यं रजसा रेणुना पिहितमाच्छादितम् अतएव त्रिलोक्याः लोकत्रयस्य विभागः संस्थानं न निरनीयत निर्णीतो नाभूत्। यद्यपि वाक्यत्रयेण द्यावाभूम्योरेव विभागानिर्णयस्य ज्ञापनात् त्रिलोक्या इत्यसङ्गतं स्यात् तर्हि त्रिलोकीपदस्यात्र द्यावाभूमिपरत्वे लक्षणा बोध्या। क्वचित् द्विलोक्या इत्येव पाठः। अत्र चतुर्थपादार्थं प्रति वाक्यत्रयार्थस्य हेतुत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गम्। औपच्छन्दसकं वृत्तम् ॥२२॥

अथच वचनवाणैर्मर्मभेदप्रवीणै-

स्तदनु वलितकायैः सायकानां निकायैः ॥२३॥

नभश्चरैर्मार्गणपातभीतै-

रभ्यर्णमुत्सृज्य विलोकयद्भिः ।

सविस्मयव्याहृतसाधुवादं

तयोः समानं समरं बभूव ॥२४॥

निर्भिन्नधाराधरगर्भनिर्यत्-

कीलालकुल्योक्षितभूमिभागाः ।

प्रथममिति । तौ लक्ष्मणेन्द्रजितौ पक्षे कर्णार्जुनौ प्रथमम् अतनुभिर्म-हद्भिः सिंहनादैः कृत्वा जघ्नतुः परस्परं पीड़यामासतुः । परमपि च ततः परञ्च महोल्काक्षेपवत् विक्षिप्तमहोल्काभिरिव रूक्षैरचिक्कणैः कठिनैरित्यर्थः । "रूक्ष-स्त्वप्रेम्ण्यचिक्कणे" इति मेदिनी । कटाक्षैः सकोपचक्षुःप्रान्तवीक्षणैः कृत्वा जघ्नतुः । अथच अनन्तरञ्च मर्माणि देहस्थितप्राणावस्थानस्थानानि तथाच वैद्यकम् । "सन्निपातः शिरास्नायुसन्धिमांसास्थिसम्भवः । मर्माणि तेषु तिष्ठन्ति प्राणाः खलु विशेषतः । सप्तोत्तरं शतं सन्ति देहे मर्माणि देहिनाम्" इति । प्रकृते वचनपीड्यत्वानुरोधात्तदधिष्ठितहृदये लक्षणा । तस्य भेदे पीड़ने प्रवीणै निंपुणैः वचनानि कटूक्तय एव वाणास्तैः कृत्वा जघ्नतुः । तदनु तत्पश्चाच्च वलितकायै र्विदारिताङ्गैः । कलितेति पाठे स एवार्थः । सायकानां वाणानां निकायैः समूहैः कृत्वा जघ्नतुः । अत्र महोल्काक्षेपवक्षैरिति लुप्तोपमा, वचनवाणैरिति रूपकं, तदनयोः संसृष्टिः ॥२३॥

नभश्चरैरिति । मार्गणानां वाणानां पातः स्वाङ्गेषु पतनशङ्का तस्माद्भीतैः अतएव अभ्यर्णं समरसमीपम् उत्सृज्य परित्यज्य विलोकयद्भिः दूरे स्थित्वा पश्य-द्भिर्नभश्चरैर्देवादिभिः कर्तृभिः सविस्मयं यथा तथा व्याहृत उक्तः साधुवादः साध्वेतौ युध्येते इति वचनं यत्र तादृशं तयोर्लक्ष्मणेन्द्रजितोः पक्षे कर्णार्जुनयोः साध्वेतौ रणः । "अस्त्रियां समरानीकरणा"इत्यमरः । समानं तुल्यं बभूव ॥२४॥

भुवं चरन्तो विशिखास्तदीया
दिशां शिरावेधमिवान्वतिष्ठन् ॥२५॥

दृष्टानेकपुराणवीरसमरश्रीभिः समं खेचरै-
रारब्धस्तुति नारदेन मुनिना निर्णीयमानान्तरम्।
भेरीध्वानभवद्भयाश्रितमहादिक्कुञ्जदिक्कुञ्जरं
युद्धं वञ्चितपक्षपातमुभयोः प्रैक्षन्त देवासुराः ॥२६॥

निर्भिन्नेति। निर्भिन्नेभ्यो विदारितेभ्यो धाराधरगर्भेभ्यो मेघमध्येभ्यो निर्यन्ति निःसरन्ति यानि कीलालानि जलानि तेषां या कुल्या क्षुद्रकृत्रिमसरित्। "कुल्याल्पा कृत्रिमा सरित्" इत्यमरः। तथा उक्षितः सिक्तो भूमिभागो यैस्ते तथा भुवं चरन्तो व्याप्नुवन्तस्तदीया लक्ष्मणेन्द्रजित्सम्बन्धिनः पक्षे कर्णार्जुनसम्बन्धिनो विशिखा बाणा दिशां शिरावेधमिव शिराणां भेदनमिव अन्वतिष्ठन् चक्रुः। अन्यस्यापि सशोथव्यथा शिरा अस्त्रेण भिद्यते, ततश्च निःसृतेन पूयशोणितादिना भूमिभागः सिक्तो भवति। अत्र पूर्वार्द्धे असम्बन्धे सम्बन्धरूपयातिशयोक्त्या चतुर्थपादगतोत्प्रेक्षाङ्गाङ्गितया सङ्कीर्यते ॥ २५ ॥

दृष्टेति। देवाश्चासुराश्च ते उभयोर्लक्ष्मणेन्द्रजितोः पक्षे कर्णार्जुनयोर्युद्धं वञ्चितस्त्यक्तः पक्षपातं एकतरपक्षानुग्राहकत्वं यत्र तद्यथा तथा प्रैक्षन्त ददृशुः। किम्भूतं दृष्टा अनेकेषां पुराणानां प्राचीनानां वीराणाम् इन्द्रवृत्रादीनां समरश्रीर्युद्धशोभा यैस्तादृशैरपि खेचरैः सिद्धगन्धर्वादिभिः समं समानं यथा तथा सहेति वा आरब्धा प्रस्तुता स्तुतिर्यस्य तत् तथा नारदेन मुनिना निर्णीयमानं निश्चीयमानम् अन्तरं भेदः प्राचीनयुद्धेभ्यो वैलक्षण्यमित्यर्थः यस्य तत् तथा भेरीणां ध्वानाच्छब्दाद्भवज्जायमानं यद्भयं तस्मादाश्रिता महान्तो दिशां कुञ्जा दिगन्तवर्तिलताद्याच्छन्नस्थानानि यैस्तादृशा दिक्कुञ्जरा ऐरावतादयो यस्य तत्। अत्रासम्बन्धे सम्बन्धरूपयातिशयोक्त्या प्राचीनयुद्धापेक्षया वैलक्षण्यबोधाद्व्यतिरेको ध्वन्यते ॥ २६ ॥

विरचितमरिणाहि क्रूरबाणप्रयोक्त्रा
सहचरहरिशक्तिव्याहताराति वाञ्छः।
रणभुवि नृपसूनुर्मौलिरत्नापहारं
भुजग इव न सेहे स्तोकमप्याशुभङ्गम् ॥२७॥
आशु रोषवशवर्तिनामुना
ज्यानिनादकृततीव्रभर्त्सनाः।

विरचितमिति। सहचराः सहायभूता ये हरयो वानरास्तेषां शक्तिभिः पराक्रमैः कृत्वा व्याहता विघटिता अरातेरिन्द्रजितो वाञ्छा स्वपराजयेच्छा येन तादृशो नृपसूनुर्लक्ष्मणः रणभुवि हीतिपादपूरणे यद्वा अहिः सर्पस्तद्वत् क्रूरस्तीक्ष्णो यो बाणः मयदत्तः शरस्तस्य प्रयोक्त्रा क्षेपकेण अरिणा इन्द्रजिता आशु विरचितं कर्तुमध्यवसितं स्तोकमपि स्वल्पमपि भङ्गं स्वकर्मकपराजयं मौलिरत्नापहारं भुजग इव न सेहे न मम्रषे।

पक्षे सहचरो यो हरिः कृष्णस्तस्य शक्त्या कर्णाभिप्रेतज्ञानसामर्थ्येन रथचक्राणां किञ्चिद्भूमिप्रवेशनसामर्थ्येन च व्याहता अरातेः कर्णस्य वाञ्छा शिरश्छेदनेच्छा येन तादृशो नृपसूनुरर्जुनः अहिः सर्पः सर्पमुख इत्यर्थः तादृशः क्रूरः कठोरः अथच अहिना अर्जुनशत्रुणा अश्वसेननागेन क्रूरः अधिष्ठानाद्विषमो यो बाणस्तस्य प्रयोक्त्रा अरिणा कर्णेन रणभुवि विरचित कृतम् आशु शीघ्रो भङ्गो मुकुटस्य भञ्जनं यस्य एतादृशं स्तोकमपि मौलिरत्नस्य रत्नमयमुकूटस्य अपहारं सर्पमुखबाणेन छित्वा भूमौ पातनं भुजग इव न सेहे। भुजगो यथा मौलिस्थरत्नापहारं न सहते, तथायमपि किञ्चिन्मुकुटच्छेदं न सेहे इत्यर्थः। मुकुटच्छेदानन्तरमतिरुषा जज्वालेति भावः। अयमर्थः,—अर्जुनवधाय चिरसञ्चितं सर्पमुखं खाण्डवदाहे जातवैरेणाश्वसेननागेन तदानीमधिष्ठितं कञ्चित् प्रसिद्धममोघबाणं कर्णोऽर्जुनं प्रति चिक्षेप, तमापतन्तं दृष्ट्वा सर्वज्ञेन भगवता कृष्णेन रथे किञ्चिदवनामिते स च बाणः अर्जुनस्य ग्रीवामप्राप्य च मुकुटाग्रं तच्चिच्छेद। ततश्चार्जुनः कर्णं प्रति चुक्रोधेति। उपमा ॥२७॥

आश्विति। रोषवशवर्तिना रुष्टेन अमुना लक्ष्मणेन प्रत्यराति अरातौ

प्रत्यराति विशिखाः प्रतेनिरे
कर्णकुण्डलविघट्टनोत्कटाः ॥२८॥
ग्रस्तचक्रस्य धरया निस्पन्दस्यन्दनापदः ।
रणकर्म महच्छत्रोर्नासोढ़ नरदेवजः ॥२९॥
ततः प्रतीतो जगतीन्द्रसूनुः
समाप्तिमिच्छन् समरार्णवस्य ।

इन्द्रजिति। सप्तम्यर्थेऽव्ययीभावः, अरातेराभिमुख्येनेत्याभिमुख्येऽव्ययीभावो वा। विशिखा वाणाः आशु शीघ्रं प्रतेनिरे विक्षिप्ताः। किम्भूताः ज्याया मौर्व्या निनादेन टङ्कारध्वनिना कृता भर्त्सना शत्रुं प्रति तिरस्कारो यैस्ते, अत्र भर्त्सनाकारणस्य सम्भाव्यमानत्वादिवादिप्रयोगाभावाच्च ज्यानिनादेन भर्त्सनां कुर्वन्त इवेति प्रतीयमानोत्प्रेक्षा। तथा कर्णकुण्डलयोरिन्द्रजितः श्रवण-स्थितयोर्भूषणविशेषयोः। कर्णस्थितत्वबोधाय कर्णशब्दः। विघट्टने स्खनिवा-रणसम्भ्रमोत्पादनेनातिचालने उत्कटा उद्रिक्ताः ते अत्यर्थं चालयन्त इत्यर्थः।

पक्षे अमुनार्जुनेन कर्णस्य राधेयस्य कुण्डलयोर्विघट्टने भेदने उत्कटाः। शेषं समानम्। रथोद्धतावृत्तम् ॥२८॥

ग्रस्तेति। नरदेवजो लक्ष्मणः धरया रणभूम्या ग्रस्तचक्रस्य कवलितसैन्यस्य हतानां रणभूम्यां शयनादिति भावः। "चक्रं प्रहरणे गणे। कुलालाद्युप-करणे राष्ट्रे सैन्यरथाङ्गयोः" इति हेमचन्द्रः। तथा निस्पन्दं वानरैर्भग्नत्वाद-चलं यत् स्यन्दनं रथस्तस्मात्तदेव वा आपद्यस्य ईदृशस्यापि शत्रोरिन्द्रजितो महदतिशयितं रणकर्म नासोढ़ मर्षितवान्।

पक्षे नरदेवजो नरो नरावतारो देवजो महेन्द्रपुत्रोऽर्जुनः धरया ग्रस्तचक्रस्य भार्गवशापात् भूमिनिमग्नरथाङ्गस्य अतएव निस्पन्दस्यन्दनापदः शत्रोः कर्णस्य। शेषं तुल्यम् ॥२९॥

तत इति। ततस्तस्मादनन्तरं समरएव दुरवगाहत्वादर्णवस्तस्य समाप्ति-मिच्छन् शत्रुवधेन पारं जिगमिषुः तथा प्रतीतः ख्यातो जगतीन्द्रसूनुः राजपुत्रो लक्ष्मणः सन्ध्यां प्रतिज्ञां, नाहत्वा तं निवर्तिष्ये इत्यादिरूपाम्। "सन्ध्या

सन्धाय सन्ध्यां सफलीकरिष्यन्
कर्णान्तसज्जं शरमुत्ससर्ज ॥३०॥
उद्यताञ्जलिकेनासौ नानाविक्रमशोभितः ।
विशिखं विशिखेन घ्नन् विस्मयं कस्य नाकरोत् ॥३१॥
क्षिप्रोत्क्षिप्तभ्रुकुटिभुजगाभीलभालं पुरस्ता
न्न्यस्तापाङ्गं विशिखशिखया साकमेवारिकण्ठे ।

पितृप्रसूनयोः प्रतिज्ञाचिन्तयोः स्थितौ" इति भूरिः । निर्यकारपाठे स एवार्थः । सफलीकरिष्यन् सफलां कर्तुम् । लक्षणहेत्वोः क्रियाया इति हेतौ शतृ । कर्णान्ते श्रवणप्रान्ते सज्जं सम्भृतम् । "सन्नद्धे संभृते सज्ज" इति विश्वः । आकर्णान्तकृष्टमित्यर्थः शरं सन्धाय शत्रुवधानुगुण्येन धनुष्यारोप्य उत्ससर्ज चिक्षेप ।

पक्षे जगति प्रतीत इन्द्रसूनुरर्जुनः कर्णस्य राधेयस्य अन्ताय नाशाय सज्जं सज्जितं शरमुत्ससर्ज । अन्यत्तुल्यम् ॥ ३० ॥

उद्यतेति । नाना बहुविधा ये विक्रमाः पराक्रमा गतिभेदा वा तैः शोभितोऽसौ लक्ष्मणः पक्षेऽर्जुनः उद्यतश्चासावञ्जलिकोऽञ्जल्याकारत्वादञ्जलीक-नामा चेति विशेषणयोः कर्मधारयः । तादृशेन विशिखेन बाणेन कृत्वा विशिखं शत्रोर्बाणं घ्नन् निवारयन् सन् कस्य विस्मयं नाकरोत् अपि तु सर्वस्येत्यर्थः । यद्यपि रामायणेऽञ्जलिकबाणप्रयोगो नोक्तस्तथापि विशेषोऽपि नोक्त इति न दोषः, यद्वा उद्यतः प्रणामार्थं शत्रुभिर्विरचितोऽञ्जलिः करसंपुटो यस्य स तथा तेन, यं दृष्ट्वा भयेन शत्रवोऽञ्जलिं कृत्वा प्रणम्य पलायन्ते तेनेत्यर्थः, कथमप्य-प्रतिकार्येणेति परमार्थः ॥३१॥

क्षिप्र इति । जिष्णोर्जयिनो लक्ष्मणस्य पक्षे जिष्णोरर्जुनस्य तेनेषुणा बाणेन विशिखशिखया शत्रुप्रक्षिप्तबाणाग्रेण साकमेव सहैव प्रसभं झटिति लूनं छिन्नं द्वेष्टुः शत्रोरिन्द्रजितः पक्षे कर्णस्य मुखं भूमिं समराङ्गनं भूषयामास, छिन्नं सत् भूमौ पपातेत्यर्थः । किम्भूतं पुरस्तात् प्रथमं क्षिप्रं शीघ्रम् उत्क्षिप्ता क्रोधेनोर्द्ध्वं नीता या भ्रुकुटिः सैव भीषणत्वात् भुजगः सर्पस्तेन आभीलं भीषणं

लूनं तेन प्रसभमिषुणा भूषयामास भूमिं
जिष्णोर्द्दष्टमुखमशनकैर्मुक्तहुङ्कारमेव ॥३२॥
अङ्गभर्तुः शिरश्छिन्नमितिगद्गदवादिनी ।
प्रपलायत संग्रामात् सा परेषां पताकिनी ॥३३॥
समं सुहृद्भिर्जयिनं समेतं
तं भूपतिर्भ्रातरमभ्यनन्दत् ।
उपेन्द्रमग्रे प्रणतं महेन्द्रः
पुरेव वैरोचनिभङ्गहृष्टः ॥३४॥
चमूपतिर्मारुतिरश्विनन्दनौ
गदाधरः पुण्यजनेश्वरस्तथा ।

भालं ललाटं यस्य तत् "आभीलं भीषणे कृच्छ्रे" इति हेमचन्द्रः । "भालं तेजोललाटयोः" इति मेदिनी । ततश्च अरेर्लक्ष्मणस्य पक्षेऽर्जुनस्य कण्ठे व्याला-पाङ्गं शरव्यत्वाय व्यापारितनेत्रप्रान्तं तथा अशनकैरुच्चैर्यथातथा मुक्तहुङ्कार-मेव । मुच्यमानहुङ्कारसहितमेव । मन्दाक्रान्तावृत्तम् ॥३२॥

अङ्गेति । अङ्ग भो लङ्कावासिनः भर्तुरस्माकं सेनापतेरिन्द्रजितः अङ्ग-भर्तुश्चतुरङ्गसेनापतेरिति वा पक्षे अङ्गदेशाधिपस्य कर्णस्य शिरश्छिन्नमिति-गद्गदवादिनी इत्थं शोकभयाभ्यामस्पष्टमुच्चरन्ती सा परेषां पताकिनी सेना संग्रामात् प्रपलायत द्रुतं पलायितवती ॥३३॥

सममिति । भूपतीरामः पक्षे युधिष्ठिरः सुहृद्भिर्विभीषणादिभिः पक्षे कृष्णादिभिः समं सह समेतं समागतं तथा अग्रे प्रणतं तथा जयिनं शत्रुं जितवन्तं तं भ्रातरं लक्ष्मणं पक्षेऽर्जुनम् अभ्यनन्दत् प्रशशंस । उपमयेदं समर्थयति,—पुरा वैरोचनेर्विरोचनतनयस्य बलेर्यो भङ्गः त्रिपादभूमिग्रहणा-च्छलेन स्वराज्याद्भ्रंशनं तेन हृष्टो महेन्द्रः अग्रे प्रणतं भ्रातरम् उपेन्द्रं वामन-मिव । उपमा ॥३४॥

चमूपतिरिति । चमूपतिर्नीलः मारुतिर्हनूमान् अश्विनन्दनौ मैन्दद्विविदौ

पुरःस्फुरत्कीर्तिधनञ्जयं प्रभो-
स्तमृक्षराजेन समं प्रतुष्टुवुः ॥३५॥
रणातिभूमिः कटकद्वये सा
शोकप्रहर्षाविभजत् समानम्।
निवेशयोर्वारिजकैरवाणां
निद्राप्रबोधौ युगपन्निशेव ॥३६॥
तदाहवे तीव्रकरस्य सूनो-
र्नक्तञ्चरेभ्यो निधनं निशम्य।

तथा गदां धरतीति गदाधरः गदया कृतयुद्धः पुण्यजनानां राक्षसानामीश्वरो विभीषणश्च एते ऋक्षराजेन जाम्बवता समं सह पुरोऽग्रे स्फुरन्ती दृश्यमानेव या कीर्तिः सैव धनं यत्र तादृशं प्रभोरामस्य तं जयं शत्रुविजयं प्रतुष्टुवुः प्रशशंसुः। प्रकृत्या कृतस्य सांख्यपुरुष इव लक्ष्मणाकृतस्यापि जयस्य प्रभौ रामे आरोपात् प्रभोर्जयमिति नासङ्गतम्।

पक्षे चमूपतिर्धृष्टद्युम्नः मारुतिर्भीमः अश्विनन्दनौ नकुलसहदेवौ तथा पुण्यजनानां पवित्रजनानामीश्वरः पालकी गदाधरः कृष्णश्च एते प्रभोर्युधिष्ठिरस्य पुरः स्फुरन्ती कीर्तिर्यत्र तद्यथा तथा धनञ्जयमर्जुनम् ऋक्षेषु नक्षत्रेषु राजते इति ऋक्षाणां राजेति वा तेन चन्द्रेण समं सदृशं यथा तथा प्रतुष्टुवुः, चन्द्रेण समं धनञ्जयमिति वा। अस्मिन् पक्षे उपमा ॥ ५ ॥

रणेति। सा रणस्यातिभूमिरुत्कर्षः कटकद्वये सेनाद्वये। "कटकस्त्वद्रि-नितम्बे बाहुभूषणे। सेनायां राजधान्याञ्च" इति हेमचन्द्रः। शोकप्रहर्षौ समानं यथा तथा अभजत् समानं विभज्य स्थापयामासेवेति प्रतीयमानोत्प्रेक्षा। एकत्र सेनापतिनाशात् शोकः अपरत्र विजयलाभात् प्रहर्ष इति भावः। उपमयेदं समर्थयति,—निशेव रात्रिर्यथा वारिजकैरवाणां कमलकुमुदानां निवेशयोराकरयोः निद्राप्रबोधौ सङ्कोचस्फुटने युगपदेकदा समानं विभजति तथेत्यर्थः ॥ ३६ ॥

शुशोच राजा बहुधार्तराष्ट्रः
स्वदुर्नयस्यानुभवन् फलानि ॥३७॥
स्वामिना दशमुखेन नोदिता
दिङ्मुखानि रजसा निरुन्धती।
प्रत्यराति विचचाल वाहिनी
धीरनादपरशल्यनायका ॥३८॥

तदेति। राजा रावणः तदाहवे तस्मिन् युद्धे तीव्रं क्रूरं कर्म करोतीति तीव्रकरः तीव्र स्तीव्रकर्मकारी करो हस्तो यस्येति वा तीक्ष्णप्रताप इति वा तादृशस्य सूनोः पुत्रस्येन्द्रजितः नक्तञ्चरेभ्यो राक्षसेभ्यो निधनं मरणं निशम्य श्रुत्वा आर्तम् इन्द्रजिच्छोकेन पीड़ितं राष्ट्रं राज्यं यस्य तादृशः तथा स्वदुर्नयस्य परदारहरणादिरूपनिजदुर्नीतेः फलानि परिपाकान् अनुभवन् मन्यमानश्च सन् बहुधा नानाप्रकारं शुशोच शोकं चकार।

पक्षे धार्तराष्ट्रो धृतराष्ट्रपुत्रो राजा दुर्योधनः तदाहवे तीव्रकरस्य सूर्यस्य सूनोः कर्णस्य नक्तं रात्रौ चरेभ्यः प्रणिधिभ्यः सकाशात् निधनं निशम्य स्वदुर्नयस्य द्यूतच्छलादिना पाण्डवेषु क्लेशदानरूपस्य फलानि अनुभवन् सन् बहु अत्यन्तं यथा तथा शुशोच। यद्यपि दुर्योधनः स्वसमक्षमेव कर्णवधं ददर्शेति भारते वर्णितस्तथापि पुनश्चरेभ्यः श्रुत्वा अत्यन्तं शुशोचेति नाकरविरोधः ॥३७॥

स्वामिनेति। अनन्तरं स्वामिना दशमुखेन रावणेन नोदिता प्रेरिता तथा रजसा स्वगमनविमर्दोत्थापितेन रेणुना दिङ्मुखानि निरुन्धती आच्छादयन्ती तथा धीरनादा गभीरारावा च परेषां शल्यभूता नायकाः सेनापतयो यत्र सा चेति विशेषणयोः कर्मधारयः। तादृशी वाहिनी राक्षससेना प्रत्यराति अरातीनामाभिमुख्येन। आभिमुख्येऽव्ययीभावः। विचचाल जगाम।

पक्षे स्वामिना दुर्योधनेन मुखेन निजमुखेनैव नत्विङ्गितादिना नोदिता तथा रजसा दशदिङ्मुखानि निरुन्धती तथा धीरनादपरो गभीरसिंहनादासक्तः शल्यो मद्राधिपो नायकः सेनापतिर्यत्र तादृशी वाहिनी कौरवसेना

ततः श्रितव्यूहमुखाश्चमूभृता
स्फुरत्प्रभावानरनाथसैनिकाः।
समभ्ययुर्भेत्तुमरातिमण्डलं
निशान्धकारं द्युमणेरिवांशवः ॥३९॥
भ्रमदविरलधूलिध्वान्तरुद्धान्तरीक्षं
विघटितसुरलोकद्वारशाखाकवाटम्।

प्रत्यरातिं विचचाल। कर्णवधानन्तरं प्रभातायां रजन्यां दुर्योधनः शल्यं सेनापत्येऽभिषिच्य तेन सह स्वसेनां पुनरपि युद्धाय प्राहिणोदित्यर्थः। रथोद्धतावृत्तम् ॥ ३८ ॥

तत इति। ततो विपक्षसेनागमनानन्तरं चमूभृता सेनापतिना नीलेन श्रितमाश्रितं व्यूहस्य मुखं सम्मुखभागो येषां ते तथा स्फुरन्ती प्रभा कान्तिर्येषां तादृशा वानरनाथस्य सुग्रीवस्य सैनिकाः सैन्याः। "सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते" इत्यमरः। द्युमणेः सूर्यस्य अंशवो निशाया अन्धकारमिव अरातिमण्डलं शत्रुवृन्दं भेत्तुं विदारयितुं समभ्ययुः अभिजग्मुः।

पक्षे चमूभृता धृष्टद्युम्नेन श्रितव्यूहमुखाः तथा स्फुरत्प्रभावाः प्रतापिनो नरनाथस्य युधिष्ठिरस्य सैनिकाः। अन्यत्तुल्यम्। उपमा ॥३९॥

भ्रमदिति। ध्वजिन्योस्तयोः सेनयोर्युद्धमासीत्। किम्भूतं भ्रमन्त्य उत्थाय उपरिघूर्णन्त्योऽविरला निविड़ा या धूलयस्ता एव दृष्टिप्रतिरोधकत्वात् ध्वान्तानि तज्जनितानि ध्वान्तानि वा तैः कृत्वा रुद्धमन्तरीक्षं यत्र तत् तथा विघटितानि उन्मोचितानि सुरलोकस्य स्वर्गस्य द्वाराणां शाखा इव बाहव इव कवाटानि यत्र तत् मृतवद्दुर्योधगमनादिति भावः। "शाखा पक्षान्तरे बाह्यो वेदभागद्रुमाङ्गयोः" इति मेदिनी। द्वारशाखा उपद्वाराणीति केचित्। तथा समदा बहुवीरदर्शनेन हृष्टाः सगर्वा वा या विबुधनार्योऽप्सरसस्तासां नेत्रेभ्यो दत्ता अनु पश्चात् यात्रा उत्सवो येन तत्। "यात्रा तु यापनेऽपि स्याद्गमनोत्सवयोः स्त्रियाम्" इति मेदिनी। तथा त्वरिताः सत्वरा विविधा योधा

समदविबुधनारीनेत्रदत्तानुयात्रं
त्वरितविविधयोधं युद्धमासीद्द्विजिन्योः ॥४०॥

अभिशत्रु समापतन्नितान्तं
पृतनानां पतिरेधिताननश्रीः ।
रजसा पिहितांशुमद्रराज
स्थगयन् व्योम गभीरवीरनादैः ॥४१॥

जनितशङ्करवानरकुञ्जर
क्षतजरञ्जितदिक् त्रिदिवौकसाम् ।
प्रतिभटावटशल्यमुखोद्भटा
परचमूर्मनुजेश्वरमावृणोत् ॥४२॥

यत्र तत् । अत्र द्वितीयपादार्थस्य वस्तुतोऽसम्बन्धेऽपि तत्सम्बन्धकथनादतिशयोक्तिः । मालिनीवृत्तम् ॥४०॥

अभीति । अभिशत्रु शत्रूणामाभिमुख्येन । आभिमुख्येऽव्ययीभावः । समापतन् युद्धार्थं गच्छन् तथा नितान्तमत्यर्थं एधिता युद्धहर्षात् वृद्धिं गता आननश्रीर्मुखशोभा यस्य सः पृतनानां सेनानां पतिर्विरूपाक्षः गभीरैर्गम्भीरैः वीरनादैर्वीरध्वनिभिः सिंहनादैरित्यर्थः रजसा पिहित आच्छादितोऽंशुमान् सूर्यो यत्र तादृशं व्योम गगनं स्थगयन् पूरयन् सन् रराज ।

पक्षे पृतनानां पतिर्मद्रराजः शल्यः गभीरवीरनादैः कृत्वा रजसा पिहिता अंशवः सूर्यकरा यत्र तादृशं व्योम स्थगयन् सन् अभिशत्रु समापतत् युद्धार्थगमकृत् । अन्यत्तुल्यम् । औपच्छन्दसकं वृत्तम् ॥ ४१ ॥

जनितेति । परचमूराक्षससेना त्रिदिवौकसां देवानां जनितं राक्षसविनाशेन सम्पादितं शं मङ्गलं येन तादृशं, मनुजो वैवस्वतमनुवंशजो राम ईश्वरः प्रभुर्यस्य तं सुग्रीवं आवृणोत् रुरोध । मनुजेश्वरं राममिति व्याख्यानमाकरविरुद्धम् । किम्भूता खरा उग्रा ये वानरकुञ्जरा वानरश्रेष्ठास्तेषां क्षतजेन रक्तेन रञ्जिता दिशो यया सा, तथा प्रतिभटेषु विपक्षसैन्येषु अवटा

नरेश्वरशरच्छिन्ननानावीरशिरस्तृतम्।
भूभारभरसंहारि प्रधनं तत्र पप्रथे ॥४३॥

रथाश्वमातङ्गनिरन्तराणि
बलानि हत्वा द्विषतां बहूनि।
क्षणेन धर्मप्रभवः क्षितीशः
शक्त्या क्षितेरुद्धरतिस्म शल्यम् ॥४४॥

कुहकपरा मायाविनीत्यर्थः। "अवटः स्यात् खिले गर्त्ते कूपे कुहकजीविनी" इति मेदिनी। तथा शल्यमस्त्रभेदस्तदुन्मुखं यस्याः सा च तथा उद्भटा रणोद्रिक्ता चेति विशेषणयोः समासः।

पक्षे परचमूर्दुर्योधनसेना मनुजेश्वरं नरपतिं युधिष्ठिरम् आवृणोत्। किम्भूता—जनितः शङ्करवो यया सा तथा नराश्च कुञ्जराश्च तेषां क्षतजेन रञ्जितदिक् तथा त्रिदिवौकसां प्रतिभटा प्रतिपक्षा तथा अवटः कुहकजीवी शल्यः मद्राधिपो मुखं प्रधानं यस्याः सा, यद्वा अवटोऽतुल्यो यः शल्यस्तत्प्रधाना। "वटो गोले गुणे भक्ष्ये वृक्षे साम्यशराटयोः" इति हेमचन्द्रः। तथा उद्भटा। द्रुतविलम्बितं वृत्तम् ॥ ४२ ॥

नरेश्वरेति। नरो राम ईश्वरो यस्य स नरेश्वरः सुग्रीवः तथा शरो हिंस्रो राक्षसः विरूपाक्ष इत्यर्थः। शृ हिंसायामित्यस्य रूपम्। ताभ्यां छिन्नानि यानि नानावीराणां शिरांसि तैः स्तृतं व्याप्तं, तथा भुवो भारभरस्य भारातिशयस्य संहारि नाशकं प्रधनं युद्धं तत्र देशे पप्रथे विस्तीर्णमभूत्।

पक्षे नरेश्वरौ राजानौ युधिष्ठिरशल्यौ तयोः शरैर्बाणैश्छिन्नैर्नानावीरशिरोभिः स्तृतं प्रधनं पप्रथे। अन्यत्तुल्यम् ॥ ४३ ॥

रथाश्वेति। धर्मस्य प्रभवो यस्मात् स धर्मप्रभवो धार्मिकः क्षितीशो राजा सुग्रीवः रथैरश्वैर्मातङ्गैश्च निरन्तराणि निरवकाशानि द्विषतां शत्रूणां बहूनि बलानि सैन्यानि हत्वा शक्त्या बलेन क्षितेः पृथिव्याः शल्यं शल्यवत् पीड़ाकरं विरूपाक्षं क्षणेन उद्धरति स्म निःसारयामास। तलप्रहारेण विरूपाक्षं जघानेत्यर्थः।

विननाश विरूपाक्षस्तीव्रतापनिपातितः।
यथा विपक्षः शकुनिः सहदेवनिपीडनैः ॥४५॥
सुग्रीवेण दृढाङ्गदेन मथितं भीमेन विद्विट्शतं
सेनानीर्युयुधान एष न जहे प्रौढारिहासज्जयम्।
उच्चाश्चक्रतुरश्विनोश्च तनयौ क्षौणिं द्विषच्छोणितै-
र्ऋच्छाणामधिपेन पद्मवनवद्धस्ताः परे जिष्णुना ॥४६॥

पक्षे धर्मप्रभवो धर्मात्मजः क्षितीशो युधिष्ठिरः शक्त्या अश्वमेदेन क्षितेः सकाशात् शल्यं मद्राधिपं क्षणेन उद्धरति स्म जघानेत्यर्थः। अन्यत् समानम् ॥ ४४ ॥

विननाशेति। तीव्र उग्रस्तापः प्रभावो यस्य स तीव्रतापः सुग्रीवस्तेन निपातितस्तलप्रहारेण भूमौ पातितो विरूपाक्षो राक्षससेनानीः विपक्षः पक्षरहितः शकुनिर्यथा पक्षीव देवनिपीड़नैः देवकर्मकपीड़नैः सह विननाश ममार। देवपीड़कस्य विरूपाक्षस्य विनाशेन तत्कृतानि देवनिपीड़नान्यपि विनेशुरित्यर्थः।

पक्षे तीव्रतापेन युधिष्ठिरक्षिप्तशक्तेरुग्रतेजसा निपातितः शल्यः विरूपे प्राणवियोगदुःखेनान्यथाभूते अक्षिणी यस्य तादृशः सन् सहदेवः कनिष्ठ-पाण्डवस्तस्य निपीड़नैः प्रहारैः विपक्षश्चिरविरोधी शकुनिर्यथा सौवलइव विननाश। "शकुनिः पुंसि विहगे सौवले करणान्तरे" इति मेदिनी। यथा सहदेवहतः शकुनिर्ममार तथा युधिष्ठिरहतः शल्य इत्यर्थः। पूर्वत्र सहोक्त्युपमयोः संसृष्टिः परत्र केवलमुपमा। अत्र च हंसश्चन्द्र इवाभातीतिवत् द्वयोरप्युपमानोपमेययोः प्रकृतत्वम् ॥ ४५ ॥

सुग्रीवेणेति। भीमेन भयङ्करेण तथा दृढो युद्धादचलोऽङ्गदो वालिपुत्रो यस्य स तथा तेन सुग्रीवेण वानरराजेन विद्विट्शतं मत्तो-न्मत्तप्रधानं शत्रुसमूहं मथितं विनाशितं, तथा युयुधानो युद्धं कुर्वन् एष सेनानीः सेनापतिर्नीलः प्रौढ़ उद्रिक्तः अरिहासः शत्रुविषयकहास्यं यत्र तादृशं जयं न जहे न तत्याज। तथा अश्विनोश्च तनयौ मैन्दद्विविदौ क्षिपतां

विलयं व्रजति क्रमाद्बलौघे
नृपसेनामसुयोधनां विलोक्य।
गुरुपुत्त्रकृपानुबद्धभावः
कृतकर्मा सुभटो विदूरमागात् ॥४७॥

युद्धहतानां शत्रूणां शोणितैः कृत्वा चोणिम् उक्षाञ्चक्रतुः सिषिचतुः। तथा जिष्णुना जयिना ऋक्षाणां भालूकानां अधिपेन जाम्बवता परेऽन्ये राक्षसाः पद्मवनवत् पद्मवनानीव विना क्लेशमित्यर्थः ध्वस्ता ध्वंसिताः अन्तर्भावितण्यर्थत्वात् ध्वंसतेः सकर्मकत्वम्।

पक्षे सुग्रीवेण शोभनग्रीवावता तथा दृढाङ्गदेन दृढनिबद्धकेयूरेण भीमेन वृकोदरेण विद्विट्शतं मथितं, तथा प्रौढारिहा उद्रिक्तशत्रुघाती सेनानीः धृष्टद्युम्नः युयुधानः सात्यकिश्च सञ्जयं पलायमानं गावल्गनिं न जह्रे जग्राहेत्यर्थः, ततश्च व्यासवचनात्तं पश्चान्मुमोचेति बोध्यम्। अश्विनोस्तनयौ च नकुलसहदेवौ द्विषच्छोणितैः चोणिम् उक्षाञ्चक्रतुः, तथा जिष्णुना अर्जुनेन ऋक्षाणामधिपेन भल्लूकश्रेष्ठेन पद्मवनवत् परे ध्वस्ता यद्वा ऋक्षाणां नक्षत्राणामधिपेन चन्द्रेण चन्द्रो यथा पद्मवनानि सङ्कोचयति तथार्जुनः शत्रुमित्यर्थः। उपमा ॥४६॥

विलयमिति। बलौघे निजसैन्यसमूहे क्रमाद्विलयं नाशं व्रजति सति नृपस्य रामस्य सेनाम् असुयोधनां दुर्योध्यां विलोक्य कृतवर्मा कृतसन्नाहोऽपि तथा सुभटः सुयोद्धापि अर्थात् प्राकरणिको रावणः गुरुर्महान् यः पुत्त्र इन्द्रजित् तस्मिन् या कृपा तत्र अनुबद्धो निबद्धो भाव आशयो यस्य तादृशः सन् इन्द्रजिच्छोकार्तः सन्नित्यर्थः विदूरं समराङ्गनाद्दूरस्थानम् आगात् आजगाम।

पक्षे सुभटः कृतवर्मा हार्दिक्यः नृपसेनाम् असुयोधनां दुर्योधनरहितां विलोक्य गुरुपुत्त्रोऽश्वत्थामा कृपः शारद्वतः तयोरनुबद्धो भावः प्रीतिर्यस्य तादृशः सन् विदूरमागात् दुर्योधनान्वेषणार्थमिति शेषः। अन्यत्तुल्यम्। हतप्रायं स्वबलं विलोक्य गदामात्रसहाये दुर्योधने रणादपयाय द्वैपायनह्रदं प्रविष्टे तमनालोक्य कृपाश्वत्थामकृतवर्माणस्त्रयः शिष्टा महारथास्तदन्वेषणाय तत्रैव जग्मुरित्यर्थः। औपच्छन्दसकं वृत्तम् ॥४७॥

**आग्नेयेन रणे धृष्टद्युम्नेनान्ये द्विषो हताः।**
**वसन्ते कामदेवेन प्रोषिता इव रागिणः ॥४८॥**

## इति राघवपाण्डवीये महाकाव्ये द्वादशः सर्गः।

आग्नेयेनेति। रणे धृष्टं प्रगल्भम् उद्रिक्तमित्यर्थः द्युम्नं बलं यस्य स तथा तेन। "द्युम्नं वित्ते बलेऽपि च" इति मेदिनी। आग्नेयेन अग्निपुत्रेण नौलेन अन्ये द्विषः शत्रवो हताः वसन्ते कामदेवेन कन्दर्पेण रागिणः सकामाः प्रोषिताः प्रवासिन इव। कामदेवेनेत्यनेन एतत्काव्यकारयितुः कामदेवनृपस्याप्युद्दङ्कनं कृतम्।

पक्षे आग्नेयेन यज्ञाग्निकुण्डोत्पन्नेन धृष्टद्युम्नेन तन्नामकेन द्रौपदेयेन। शेषं समानम्। उपमा ॥४८॥

इति श्रीप्रेमचन्द्रतर्कवागीशभट्टाचार्यविरचितायां कपाटविपाटिकाख्यायां राघवपाण्डवीयमहाकाव्यटीकायां द्वादशः सर्गः।



## त्रयोदशः सर्गः ।

अथ स्फुरद्दक्षिणबाहुरुच्चै-
रङ्गारशेषानलसन्निभस्य ।
अल्पावशिष्टात्मबलस्य शत्रो-
र्नराधिपो निर्गममन्वियेष ॥१॥

रिपोरसहमानास्ते हरिमुख्या विलम्बनम् ।
रुरुधुस्तदधिष्ठानं सरोवरमिव द्विपाः ॥२॥

अथेति। अथ विरूपाक्षमत्तोन्मत्तवधानन्तरम् उच्चैरतितरां स्फुरन् स्पन्दमानो दक्षिणबाहुर्यस्य सः। पुंसां दक्षिणभुजस्पन्दनमिष्टसमागमसूचकम् इति सामुद्रकम्। नराधिपो रामः अल्पावशिष्टमात्मबलं स्वसैन्यं यस्य स तथा तस्य अतएव अङ्गारशेषोऽङ्गारमात्रावशिष्टो योऽनलस्तत्सन्निभस्य तत्तुल्यस्य शत्रोरावणस्य निर्गमं युद्धार्थमागमनम् अन्वियेष आकाङ्क्षितवान्। इदानीं रावणः स्वयमागच्छतु तं हत्वा कृतकृत्यो भवेयमित्यचिन्तयदित्यर्थः।

पक्षे अथ शकुनिसुशर्मादिवधानन्तरं नराधिपो युधिष्ठिरः शत्रोर्दुर्योधनस्य। अन्यत् समानम् ॥ १ ॥

रिपोरिति। ते हरिमुख्या वानरश्रेष्ठा रिपोरावणस्य विलम्बनं युद्धार्थागमनविलम्बम् असहमानाः औत्सुक्याधिक्यात् सोढुमशक्ताः सन्तः द्विपा हस्तिनः सरोवरमिव तस्य रावणस्य अधिष्ठानं निवासस्थलं लङ्कां रुरुधुः आवव्रुः, आवृत्य उपद्रवं चक्रुरित्यर्थः। अयुध्यमाने हि शत्रावेवं कर्तव्यं। यदाह मनुः,—"उपरुध्यारिमासीत राष्ट्रञ्चास्योपपीडयेत्। दूषयेच्चास्य सततं यवसान्नोदकेन्धनम्" इति।

पक्षे हरिः कृष्णो मुख्यः प्रधानं येषां तादृशास्ते पाण्डवाः रिपोर्दुर्योधनस्य विलम्बनं विडम्बनं पलायनरूपं प्रतारणमित्यर्थः असहमानाः सन्तः द्विपाः सरोवरमिव तस्य दुर्योधनस्य अधिष्ठानं जलस्तम्भनेनाश्रयस्थानं सरोवरं

तत: सगर्वं निरगादराति-
विपक्षसिंहध्वनिकीर्णकर्णः ।
ह्रदान्महानाग इव स्वधाम्नः
सन्दर्शितोत्साहमहीनलक्ष्मा ॥३॥

दोर्विक्षेपैरमन्दैः परिघशतमिव व्योम्नि सञ्चारयन्तं
दृक्चारीमण्डलेषु प्रतिदिशमशनैर्दर्शितानेकवक्त्रम्
कुर्वाणं दृष्टिपातैरनलकवलितान्येव सैन्यानि दूरात्
तं कोपादापतन्तं कथमपि ददृशुः प्रत्यनीकप्रवीराः ॥४॥

द्वैपायनह्रदं रुरुधुः । दुर्योधनो द्वैपायनह्रदं प्रविष्टोऽस्माभिर्दृष्ट इति व्याधेभ्यः श्रुत्वा तत्र गत्वा रुरुधुरित्यर्थः । अस्मिन् पक्षे सरोवरमिति युक्तत्वादुपमानमुपमेयञ्च ॥ २ ॥

तत इति । ततोऽरातीरावणः विपक्षाणां सिंहध्वनिभिः सिंहवद्गर्जनैः कीर्णकर्णः पूरितकर्णकुहरः तच्छ्रवणकुपित इत्यर्थः तथा अहीनम् अच्युतं लक्ष्म राजचिह्नं युद्धचिह्नं वा यस्य तादृशः सन् सगर्वं सन्दर्शितोत्साहश्च यथा तथा ह्रदान्महानाग इव स्वधाम्नः स्वालयात् लङ्कानगरान्निरगात् युद्धार्थं निश्चक्राम। पक्षे अरातिर्दुर्योधनः महानागइव स्वस्य धाम्नो विश्रामस्थानात् ह्रदात् द्वैपायनसरसो निरगात्। अन्यत्तुल्यम् । उपमा ॥ ३ ॥

दोरिति । प्रत्यनीकप्रवीरा विपक्षशूराः कोपादापतन्तं तं रावणं पक्षे—दुर्योधनं कथमपि दूरात् ददृशुः सभयं पश्यन्तिस्मेत्यर्थः किम्भूतम् अमन्दैरविरलैर्दोर्विक्षेपैर्बाहुक्षेपैः कृत्वा व्योम्नि परिघशतमिव लगुडशतमिव सञ्चारयन्तं भ्रामयन्तं, तथा प्रतिदिशं दिशि दिशि अशनैर्झटिति दृक्चारीमण्डलेषु परबलालोकनार्थं चक्षुर्विक्षेपसमूहेषु दर्शितानि अनेकानि वक्त्राणि मुखानि येन तं एकत्र दशाननत्वात् अपरत्र मुहुर्मुहुरावर्तनादिति भावः । तथा दृष्टिपातैः कृत्वा सैन्यानि विपक्षबलानि अनलकवलितान्येव वह्निपरीतानीव कुर्वाणम् । एवकार इवार्थे । अत्र भारतपक्षे वक्त्रस्यानेकत्वाभावात् दर्शितानेकवक्त्रमिवेति

तमाहवायाह्वत दूषणघ्नो
वृकोदरः काल इवात्तकोपः।
उत्तेजितश्रीर्वृषभध्वजेन
भर्ता भृगूणामिव कार्तवीर्यम् ॥५॥

मुखारविन्दैः सुरसुन्दरीणां
नभो बभूवेह सहस्रचन्द्रम्।
सहस्रगङ्गञ्च तदुत्सुकानां
विमानहंसावलिभिः सुराणाम् ॥६॥

सम्भावनायां पर्यवसानात् प्रतीयमानोत्प्रेक्षा। अन्यत्र इव प्रयोगाद्वाच्येत्युत्प्रेक्षाणां निरपेक्षतयावस्थानात् संसृष्टिः। स्रग्धरा वृत्तम् ॥४॥

तमिति। आत्तकोपः कुपितो वृकोदरः काल इव चतुर्दशयमान्तर्गतवृकोदरनामा यम इवेत्युत्प्रेक्षा। वृकोदराय चित्रायेत्यादिभविष्यपुराणीयमन्त्रलिङ्गात् कालस्य वृकोदरसंज्ञकत्वं। दूषणं रक्षोविशेषं हतवानिति दूषणघ्नो रामः। रामस्य नारायणावतारत्वेनामनुष्यत्वात्। अमनुष्यकर्तृकाश्चेति इन्त्तेष्टः एवं पक्षान्तरेऽपि भीमस्य ब्रह्माण्डान्तरीयेन्द्रावतारत्वेनामनुष्यत्वादिति बोध्यम्। तं रावणम् आहवाय युद्धाय वृषभध्वजेन शिवेन उत्तेजिता धनुर्वेदार्पणेन वर्द्धिता श्रीः शोभा यस्य तादृशो भृगूणां भृगुवंश्यानां भर्ता पालकः परशुरामः कार्तवीर्यं हैहयार्जुनमिव आह्वत आहूतवान्।

पक्षे आत्तकोपः काल इव दूषणघ्नः पुरुषदोषत्यागी वृकोदरो भीमस्तं दुर्योधनं आहवाय आह्वत। अन्यत् समानम्। अत्रोत्प्रेक्षोपमयोः परस्परमनपेक्षतयावस्थानात् संसृष्टिः ॥५॥

मुखेति। इह आहवे सुरसुन्दरीणां युद्धदिदृक्षया आगतानामप्सरसां मुखान्यरविन्दानीव तानि तथा तैः अत्युत्कृष्टमुखैरित्यर्थः नभः समरसन्निकृष्टमाकाशं सहस्रचन्द्रम् असंख्यचन्द्रान्वितं बभूव, तथा उत्सुकानाम् औत्सुक्येन युद्धं द्रष्टुमागतानां सुराणां या विमानहंसावलयः विमानानां वाहनभूतराजहंसश्रेणयस्ताभिः कृत्वा तन्नभः सहस्रगङ्गञ्च असंख्यमन्दाकिनीयुक्तञ्च

सरस्वतीपूततनुस्तरस्वी
चिराय जायाविरही व्रतस्थः ।
उपेयिवान् संयुगधाम रामो
हरिप्रधानैर्ददृशे सुहृद्भिः ॥७॥
जज्ञे तयोरथं ददद्भुवनाय भीतिं
स्फीताङ्गदोज्ज्वलमहाभुजयोः समीकम् ।

बभूव । हंसावलीनां शुक्लत्वात् प्रवाहतुल्यतयावस्थानाच्चेति भावः । अत्र नभसि सहस्रचन्द्रवत्त्वसहस्रगङ्गावत्त्वयोरसम्बन्धेऽपि तत्कल्पनादतिशयोक्तिद्वयं तेन च मुखहंसावलिषु चन्द्रत्वगङ्गात्वारोपप्रतीतिरूपकद्वयं ध्वन्यते । वस्तुतस्तु— "विदधे मधुपश्रेणीमिह भ्रूलतया विधिः" इत्यादिवद्वैयधिकरण्येऽपि रूपकदर्शनाद्वाच्यमेवात्र तत् ॥६॥

सरस्वतीति । सरस्वत्या वाण्या विद्ययेत्यर्थः पूता तनुर्यस्य सः, तथा तरस्वी युद्धार्थं वेगवान्, तथा चिराय बहुकालं जायाविरही सीतावियुक्तः, तथा व्रतस्थः नियमस्थः ईदृशो रामो दाशरथिः संयुगधाम रणस्थलम् उपेयिवान् उपगतः सन् हरिप्रधानैर्वानरमुख्यैः सुहृद्भिः सुग्रीवादिभिर्ददृशे दृष्टः ।

पक्षे सरस्वत्या नदीविशेषस्नानेन पूततनुः, तथा तरस्वी स्वतो वेगवान्, तथा चिराय जायाविरही रेवतीवियुक्तः, तथा व्रतस्थः तीर्थयात्रया कृतनियमः ईदृशो रामो बलभद्रः संयुगधाम युद्धस्थानं कुरुक्षेत्रम् उपेयिवान् सन् हरिप्रधानैः कृष्णमुख्यैः सुहृद्भिर्युधिष्ठिरादिभिर्ददृशे । द्वयोरपि सुहृद्भूतयोः कौरवपाण्डवयोः साहायकमननुतिष्ठन् बलभद्रस्तीर्थयात्रां गतः, ततश्च प्रभूतजनक्षये संग्रामेऽतीते भीमदुर्योधनयोर्गदायुद्धसमये सरस्वतीस्नानेन पूततनुस्तद्युद्धस्थानं कुरुक्षेत्रमाजगामेति भारतम् ॥७॥

जज्ञ इति । अथानन्तरं तयोरामरावणयोः समीकं युद्धं जज्ञे बभुव । किम्भूतयोः,—स्फीताङ्गदोज्ज्वलमहाभुजयोः स्फीत उद्रिक्तोऽङ्गदो वालिपुत्रो यस्य सः, तथा उज्ज्वलावुद्दीप्तौ महाभुजो बृहद्बाहू यस्य सः, ततश्च विशेषणयोः कर्मधारयः इति रामपक्षे, रावणपक्षे तु स्फीतैर्वृहद्भिरङ्गदैः केयूरैरुज्ज्वला महा-

अन्योन्यहेतिपरिघट्टनकीर्णवह्नि-
ज्वालापरिस्फुरणतर्जितविद्युदर्चिः ॥८॥

आद्यैरायुधपातपूततनुभिर्वीरैर्विमानस्थितै-
रभ्यस्तामरसुन्दरीरतिरसैः सासूयमालोकितः ।
घोरस्यन्दनवेगनिःसहमहीदिग्दन्तिकुम्भीनस-
प्रष्ठप्रार्थितशान्तिराहवविधिस्तत्रास्तनिस्त्रासयोः ॥९॥

भुजा यस्य सः ततः सच सच ताविति सरूपेषु यद्दिष्टमित्येकशेषः । तयोः । किम्भूतं समीकं,—भुवनाय लोकाय भीतिं भयं ददत्, तथा अन्योन्यं परस्परं हेतीनामस्त्राणां यत् परिघट्टनम् संश्लेषस्तस्मात् कीर्णौ निःसृतो यो वह्निस्तस्य या ज्वाला शिखा तस्याः स्फुरणेन तर्जिता न्यक्कृता विद्युतोऽर्चिः शिखा यत्र तत् ।

पक्षे स्फीताभ्यामङ्गदाभ्यां केयूराभ्याम् उज्ज्वलौ महाभुजौ ययोस्तादृशयो-स्तयोर्भीमदुर्योधनयोः हेती गदे । शेषं समानम् । अत्र हेतिपरिघट्टनजनित-वह्निज्वालायां विद्युदर्चिरपेक्षया उत्कृष्टत्वात् व्यतिरेकः । वसन्ततिलकं वृत्तम् ॥८॥

आद्यैरिति । तत्र लङ्कायां पक्षे कुरुक्षेत्रे निस्त्रासयोर्भयरहितयोः राम-रावणयोः पक्षे भीमदुर्योधनयोराहवविधिर्युद्धानुष्ठानम् आस्त आसीत् । किम्भूतः,—आद्यैः सम्मुखयुद्धमरणेन प्रथमं स्वर्गं प्रस्थितैः, तथा आयुधस्यास्त्रस्य पातेन पूततनुभिः, तथा विमानस्थितैः विमाने स्थित्वा पश्यद्भिः, तथा अभ्यस्तः पुनः पुनरनुभूतः सुरसुन्दरीणामप्सरसां रत्नौरसः अलिङ्गनादिसम्भोगरसो यैः स्ते, तथा तैर्वीरैः कर्तृभिः सासूयं सदोषाविष्कारं यथा तथा आलोकितः । मृते-ष्वपि वीरत्वस्यानुवृत्तत्वादिति भावः । वीरा हि परकृतयुद्धं सासूयं पश्यन्ति । तथा घोर उद्भटो यः स्यन्दनयोरथयोः पक्षे युद्धगतिभेदयोर्वेगः । रामस्यापि इन्द्रेण प्रेरितं स्यन्दनमासीत् । तत्र निःसहा असमर्था या मही पृथिवी साच तिर्यक्कृतद्वारका दिग्दन्तिनश्च अधस्तद्वारकः कुम्भीनसानां सर्पाणां प्रष्ठः श्रेष्ठः अग्रगो वा अनन्तश्च तैः प्रार्थिता शान्तिरुपशमो यस्य सः । "कुम्भीनसः क्रूर-

धूतचापलतया विराजतो-
र्मार्गणाभिहतमर्मणोर्मिथः ।
नान्तरं ददृशुराहवे तदा
साधुवादमुखरा नभश्चराः ॥१०॥

रक्ताशोकस्तवकनिकरैः सावतंसा इवाशा
विद्युच्छेदैरिव कवलिताः शारदा वारिवाहाः ।
उल्काजालैरिव जटिलिता जज्ञिरे व्योमगर्भा-
स्तूर्णोत्कीर्णैः प्रसभमुभयोरायुधार्चिःकलापैः ॥११॥

सर्पे स्त्रियां लवणमातरि" इति मेदिनी । "प्रष्ठः श्रेष्ठाग्रयोः" इति भूरिः । प्रादग्रगेभ्य इति षत्वम् । अत्र पूर्वमततादृशवीरजनकर्तृकसासूययुद्धदर्शनस्य तादृशमृत्यादिकर्तृकतच्छान्तिप्रार्थनस्य चासम्बन्धेऽपि तद्वर्णनादतिशयोक्तिद्वयं संसृष्टम् । शार्दूलविक्रीडितं वृत्तम् ॥९॥

धूतेति । तदा साधुवादे मुखरा वाचालाः साधु साध्विति मुहुर्वदन्त इत्यर्थः नभसि आकाशे चरन्तीति नभश्चरा देवादयः धूता कम्पिता या चापलता धनुर्लता तया विराजतोः शोभमानयोः, तथा मिथः परस्परं मार्गणैर्बाणै-रभिहतानि ताडितानि मर्माणि पूर्वोक्तमर्मस्थानानि याभ्यां तौ, तथा तयो-रामरावणयोः आहवे युद्धे अन्तरं स्वल्पमपि विशेषं न ददृशुः तुल्यं युध्यमानौ दृष्टवन्त इत्यर्थः ।

पक्षे धूतं त्यक्तं चापलं चपलता याभ्यां तयोर्भावो धूतचापलता तया स्थिरतयेत्यर्थः विराजतोः, तथा मिथो मार्गणेन रन्ध्रान्वेषणेनाभिहतमर्मणोर्भीमदुर्योधनयोः । शेषं समानम् । अस्मिन् पक्षे गदायुद्धे धनुर्बाणाद्य-भावात् केषाञ्चित् चापलतामार्गणशब्दयोर्धनुर्लतावाणार्थकरणमज्ञ-ष्ठेयम् ॥१०॥

रक्तेति । उभयो रामरावणयोः पक्षे भीमदुर्योधनयोः तूर्णं शीघ्रं मिथः संश्लेषसमकालमेवेत्यर्थः उत्कीर्णैरुत्क्षिप्तैरायुधानां परस्परश्लिष्टानां बाणानां

मनोरथगतिध्वंसपरिवर्द्धितरोषयोः।
रणकर्म सुदक्षत्वादश्रान्तमुभयोरभूत् ॥१२॥

तथा तयोर्विक्रम उद्दिदीपे
दिदृक्षया व्योम्नि यथा समेताः।
दिवौकसोऽप्येकतरेण लभ्यं
जयं न निश्चेतुमलं बभूवुः ॥१३॥

पक्षे आयुधयोर्गदयोरर्चिःकलापैः प्रतिघातोत्थितवह्निशिखासमूहैः क्रान्त्वा प्रसभं झटिति आशा दिशः रक्ताशोकस्य स्तवकनिकरैः पुष्पगुच्छसमूहैरिव सावतंसाः सालङ्काराः जज्ञिरे जाताः। तथा शारदाः शरत्कालीनाः शरद्येव युद्धारम्भात्तत्कालीना इत्यर्थः वारिवाहा मेघा विद्युतां छेदैः खण्डैरिव कवलिता व्याप्ता जज्ञिरे। तथा व्योमगर्भा आकाशमध्यानि उल्का आकाशस्खलत्तेजोविशेषास्तासां जालैः समूहैरिव जटिलिता जातजटाव्याप्ता इत्यर्थः जज्ञिरे। सर्वत्र इवशब्दप्रयोगात् वाच्योत्प्रेक्षाणां संसृष्टिः तया च आयुधार्चिकलापानामाशामेघव्योमगर्भेष्वसम्बन्धेऽपि तद्वर्णनादतिशयोक्तिरङ्गाङ्गितया सङ्कीर्यते। मन्दाक्रान्तावृत्तम् ॥११॥

मनोरथेति। मनोरथस्य इच्छाया या गतिर्विषयः एतत्प्रहारेणैवेमं हनिष्यामीत्येवंरूपस्तस्या ध्वंसः परस्य कौशलेनान्यथाभाव-स्तेन परिवर्द्धितो रोषो ययोस्तौ, तथा तयोः मनोरथो ह्यनुपपद्यमानो रोषं जनयति। "कामात् क्रोधोऽभिजायते" इति स्मरणात् इति भावः। उभयो रामरावणयोः पक्षे भीमदुर्योधनयोः सुदक्षत्वाद्युद्धनैपुण्याधिक्यादश्रान्तम् अविरामं श्रमरहितं वा रणकर्म युद्धव्यापारोऽभूत् ॥१२॥

तथेति। तयो रामरावणयोः पक्षे भीमदुर्योधनयोर्विक्रमस्तुल्यः पराक्रमस्तथा तेन प्रकारेण उद्दिदीपे प्रवृद्धोऽभूत्, यथा दिदृक्षया युद्धकौशलदर्शनेच्छया व्योम्नि युद्धाङ्गनोर्द्ध्वभागे समेताः सङ्गता दिवौकसोऽपि का कथान्येषां। सर्वज्ञा देवा अपि एकतरेण रामेण रावणेन वा पक्षे भीमेन दुर्योधनेन वा लभ्यं प्राप्यं

मध्ये तयोरायुधघट्टजन्मा
प्रतिक्षणं वह्निशिखोल्लसन्ती ।
भीता तयोरेकतरं ग्रहीतुं
साक्षाज्जयश्रीरिव लक्ष्यते स्म ॥१४॥

पौष्पीवृष्टिः पुरस्तात्तदुपरि सुमनःसंचये खेचरौघै-
र्मुक्तामुक्ताकलापाः किलतदुपरमेकेवलाः साधुवादाः ।
संयत्संरम्भभीतास्त्रिदिवयुवतयोऽप्यञ्चलैरंशुकानां
चक्षूंषिच्छादयन्त्यो दयितमदूरमालिङ्गनीता
॥१५॥

जयं निश्चेतुम् अलं समर्था न बभूवुः। अत्र दिवौकसोऽपौत्यनेन अन्येषां जयनिश्चयस्य दूरपराहतत्वप्रतिपादनादर्थापत्तिरलङ्कारः ॥१३॥

मध्य इति। आयुधयोरस्त्रयोर्घट्टात् मिथःसम्पर्कात् जन्म यस्या स्तादृशी तयोर्मध्ये प्रतिक्षणं प्रतिप्रहारम् उल्लसन्ती वह्निशिखा तयोरेकतरं ग्रहीतुम् आलिङ्गितुं भीता अपरस्मादियं प्राप्ता साक्षाज्जयश्रीरिव विजयलक्ष्मीरिव लक्ष्यते स्म। नेयमायुधघट्टनजन्मा वह्निशिखा किन्तु एकतरमवलम्बितुम-परस्माद्भीत्या कृतविलम्बा जयलक्ष्मीः किमित्युत्प्रेक्षा ॥१४॥

पौष्पीति। खे आकाशे चरन्तीति खेचरा देवादयः। अधिकरणाचेति टः, तत्पुरुषे कृति बहुलमिति सप्तम्या अलुक्। तेषामोघैः समूहैः युद्धदिदृक्षया-गतैस्तद्दर्शनेन हृष्टैश्चेति शेषः, तयोः रामरावणयोः पक्षे भीमसुयोधनयोरुपरि तावुद्दिश्येत्यर्थः पुरस्तात् प्रथमं पौष्पी पुष्पसम्बन्धिनी वृष्टिः कृदभिहितभाव-त्वात् वृष्यमाणपुष्पाणीत्यर्थः मुक्ता त्यक्ता, ततश्च सुमनसां पुष्पाणां संचये साव-शेषमोचनेनापगमे सति मुक्ताकलापाः किल मौक्तिकदामानि च मुक्ता, तदु-परमे तेषां मुक्ताकलापानामप्यभावे च सति मोक्तव्यताद्दशवस्त्वदर्शनात् केवलाः साधुवादाः प्रशंसालापा मुक्ताः। इयं तावत् देवानां क्रिया, देवीनामाह। संयदिति—संयत्संरम्भेण युद्धाडम्बरदर्शनेन भीताः स्त्रीस्वाभाव्यात् प्राप्त-

दिग्भित्तिप्रतिनाददुन्दुभिरवप्रक्षोभिगर्भोच्छल-
न्नानानागनगेन्द्रनक्रनिकरप्रोत्क्षिप्तवीचिच्छटः ।
कूलान्तानुदलङ्घयत् कुपितयोर्नूनं तयोरायुध-
ज्वालौर्वानललङ्घितस्य नभसो निर्वापणायाम्बुधिः ॥१६

विलोक्य विद्वेषिवधे ससंशयं
रणे जगत्प्राणभुवं नृपात्मजम् ।

भयाः अतएव अंशुकानां वस्त्राणामञ्चलैरेकदेशैः कृत्वा चक्षूंषि छादयन्त्यश्छि-दिवयुवतयोऽपि देव्योऽपि दिवि आकाशे दयिततमैः स्वस्ववल्लभैर्भयापगमाया-लिङ्ग्य दूरं नीताः । अत्रेदृशानुपूर्वीकस्य श्लोकार्थस्य प्रायेणासम्बन्धेऽपि तत्-वर्णनादतिशयोक्तिः, सा च मुक्तामुक्तेति छेकानुप्रासेन मोच्यमानभेदेनानेकानां मोचनक्रियायामेकखेचरीचसम्बन्धाद्दीपकेन च एकाश्रयावस्थायित्वेन सङ्की-र्यते । स्रग्धरा ॥१५॥

दिग्भित्तीति । दिग्भित्तिषु दिग्रूपासु भित्तिषु दिक्प्रान्तेषु वा प्रतिनादः प्रतिध्वनिर्यस्य तादृशो यो दुन्दुभिरवः समरदुन्दुभिध्वानस्तेन प्रक्षोभी प्रकर्षेण क्षुब्धो यो गर्भोऽभ्यन्तरं तस्मादुच्छलन्तो वहिर्निःसरन्तो ये नाना बहुविधा नागाः सर्पा जलकुञ्जरा वा नगेन्द्रा मैनाकादयः नक्राः कुम्भीराश्च तेषां निकरः समूह-स्तेन प्रोत्क्षिप्ता प्रकर्षेणोर्द्ध्वं नीता वीचिच्छटा तरङ्गपरम्परा यस्य तादृशोऽम्बुधिः समुद्रः कूलान्तान् वेलाः । "अन्तः स्वरूपे निकटे" इति हैमचन्द्रः । उद-लङ्घयत् उल्लङ्घ्य प्रावर्तत । अत्रोत्प्रेक्षते । कुपितयोस्तयो रामरावणयोः पक्षे भीमदुर्योधनयोर्या आयुधज्वाला आयुधोत्थितवह्निशिखा सैव और्वानलः प्रलय-कारी वाडवाग्निस्तेन लङ्घितस्य व्याप्तस्य नभस आकाशस्य निर्वापणाय नूनं निर्वापणार्थमिव कूलान्तानुदलङ्घयत्, आकालिकप्रलयशङ्कयेति शेषः । अत्र पूर्वार्द्धार्थस्य वस्तुतोऽसम्बन्धादतिशयोक्तिस्तया चोत्प्रेक्षाङ्गाङ्गितया सङ्कीर्यते । नूनशब्दश्चोत्प्रेक्षावाचकः । यदाह—"मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादय" इति । शार्दूलविक्रीडितम् ॥१६॥

विलोक्येति । कोऽपि पुरातनो मुनिर्मातलिः । सहि पूर्वं मुनिर्भूत्वा

उपायमस्मै निभृतं न्यवेदय-
ज्जयोचितं कोऽपि पुरातनो मुनिः ॥१७॥
प्रवर्त्य भीमोऽथ लसन्महायुधं
विरोधिवीरं निजघान मर्मणि।
पुरेव रामः शतमन्युसम्भवं
महास्त्रमोक्षेण निशाचरेश्वरम् ॥१८॥

तपश्चकार, ततश्च तत्फलभूतम् इन्द्रस्य सारथ्यं लेभे इति आख्यायमानान्याया-दस्य मुनित्वम्। जगत्प्राणभुवं जगदार्त्तिजनानां प्राणालम्बनस्थानं दुष्ट-राक्षसादिविनाशनेन जगतां प्राणानवन्तमित्यर्थः नृपालजं रामं रणे विद्वेषिणः शत्रोः रावणस्य वधे ससंशयं छिन्नेष्वपि शिरःसु रावणस्य पुनः सशिरस्कत्वदर्श-नात् संशयितं विलोक्य अस्मै रामाय जयोचितं तद्वधयोग्यम् उपायं 'ब्रह्मा-स्त्रेणास्य वक्षसि प्रहारः कर्त्तव्य' इत्येवंरूपं निभृतं गुप्तं यथा तथा न्यवेदयत् ज्ञापयामास।

पक्षे कोऽपि पुरातनो मुनिः कृष्णप्रेरितो नरावतारोऽर्जुनः जगत्प्राणभुवं वायुतनयं नृपालजं भीमं रणे विद्वेषिणो दुर्योधनस्य वधे ससंशयं तुल्यबलतया सन्दिहानं विलोक्य अस्मै भीमाय जयोचितम् उपायम् 'अस्योरुदेशे गदया प्रहर्तव्यमित्येवंरूपं निभृतं न्यवेदयत्। स्वोरौ हस्ताघातभङ्ग्या असूचयत् ॥१७॥

प्रवर्त्येति। अथ मातलिनिवेदनानन्तरं रामः भीमो लसन् भयङ्करः सन् महायुधं महान्तं संग्रामं प्रवर्त्य अतिशयेन वर्तयित्वा महायुधं मन्त्रात्मकं ब्रह्मास्त्रं प्रवर्त्य आवर्त्येति वा पुरा पूर्वं शतमन्युसम्भवम् इन्द्रपुत्रं वालिनमिव महास्त्रस्य ब्रह्मास्त्रस्य मोक्षेण त्यागेन विरोधिवीरं निशाचरेश्वरं रावणं मर्मणि वक्षसि निजघान आहतवान्।

पक्षे अथार्जुनोपदेशानन्तरं लसन् रणे शोभमानो भीमो वृकोदरः महा-युधं महान्तं संग्रामं प्रवर्त्य कृत्वा पुरा त्रेतायां महास्त्रमोक्षेण ब्रह्मास्त्रक्षेपेण रामः शतस्य शतसंख्यजनस्येत्यर्थः मन्योः शोकस्य दैन्यस्य वा सम्भवो यस्मात् तम्। "मन्युः पुमान् क्रुधि। शोके दैन्ये च यज्ञे च" इति मेदिनी। निशा-

ततः स उच्चैर्गतमानसोऽपि
दुर्योधनश्छिन्नदशाननश्रीः।
प्राप्योरुभङ्गं जगतीं जगाम
सुरद्विषां मूर्त इवाभिमानः ॥१९॥

अन्ते संग्रामयज्ञस्य सद्यः पूर्णाहुतीकृतः।
तत्कायः परितस्तार दारुणो रणमण्डलम् ॥२०॥

परेश्वरं रावणमिव विरोधिवीरं दुर्योधनं मर्मणि कोमलत्वादतिपीड़ाकरे ऊरौ निजघान गदया अताड़यत् ॥१८॥

तत इति। ततो ब्रह्मास्त्राघातानन्तरं दुर्योधनोऽपि दुःखेन योधनीयोऽपि अतिशूरोऽपीत्यर्थः गतं मानसं यस्य सः मृत इत्यर्थः, अतएव छिन्ना नाशं प्राप्ता दशानामाननानां मुखानां श्रीः शोभा यस्य सः, तथा सुरद्विषां देवविरोधिनां राक्षसानां मूर्त्तो मूर्तिमान् अभिमान इव गर्व इवेत्युत्प्रेक्षा। स रावण उरुर्महान् यो भङ्गः पराजयस्तं प्राप्य उच्चैरुच्चस्थानात् रथनोड़ात् जगतीं पृथिवीं जगाम। ब्रह्मास्त्रेण हतो मृतश्च भूमौ पपातेत्यर्थः।

पक्षे तत ऊरौ गदाघातानन्तरम् उच्चैरुच्चाङ्गरक्षणे मानसं यस्य सः। नाभेरधो गदाप्रहारस्य युद्धशास्त्रनिषिद्धत्वात् केवलमूर्द्धाङ्गरक्षणे कृतयत्न इत्यर्थः। अतएव भीमस्य गदाप्रहारेण ऊरोर्भङ्गं प्राप्य छिन्ना नाशिता दशा सौम्यावस्था यस्मात्तादृशी आननश्रीर्यस्य सः वेदनाधिक्यान्मलिनमुखकान्तिरित्यर्थः। तथा सुरद्विषां असुराणां मूर्तोऽभिमान इव स दुर्योधनः जगतीं जगाम, भूमौ पपात। अपीति निश्चये पादपूरणे वा ॥१९॥

अन्त इति। संग्राम एव यज्ञस्तस्यान्ते पूर्णाहुतीकृतः पूर्णाहुतत्वेन रूपितस्तेनैव संग्रामयज्ञसमापनादिति भावः तस्य रावणस्य पक्षे दुर्योधनस्य कायः दारुणो भयङ्करः सन् अथच जाज्वल्यमानतया उद्भटः सन् रणमण्डलं युद्धस्थानं यज्ञवाटरूपमित्यर्थः परितस्तार व्याप्नोतिस्म। परिचस्कारेति अलञ्चकारेत्यर्थः। अत्र संग्रामे यज्ञत्वारोपस्य तत्काये पूर्णाहुतत्वारोपस्य च शाब्दत्वात् रणमण्डले तु यज्ञवाटत्वारोपस्यार्थत्वादेकदेशविवर्तिरूपकम् ॥२०॥

विससृजुरथ वृष्टिं कौसुमीमम्बुवाहा
ननृतुरमरवध्वो दध्वनुः खे मृदङ्गाः ।
जगुरनिमिषसूता दिक्पुरन्ध्र्यः प्रसेदु-
स्तुतुषुरखिललोका मङ्गलेनैव पूर्णाः ॥२१॥

तीर्त्वा प्रतिज्ञां पवनात्मजेन
प्रत्यागतेनाभिहितारिभङ्गा ।
मेने तदानीं मनुजेन्द्रपत्नी
महोत्सवं भर्तृमुखावलोकम् ॥२२॥

विससृजुरिति । अथ रावणस्य पक्षे दुर्योधनस्य पतनानन्तरम् अम्बुवाहा मेघा इन्द्रप्रेरिता इति शेषः कौसुमीं पुष्पसम्बन्धिनीं वृष्टिं कृदभिहितभावत्वात् पुष्पमाणानि कुसुमानीत्यर्थः विससृजुर्मुमुचुः । तथा अमरवध्वो देवाङ्गना ननृतुः । तथा खे आकाशे मृदङ्गा देवैर्वाद्यमाना इति शेषः दध्वनुर्ध्वानं चक्रुः । तथा अनिमिषाणां देवानां सूता मागधाश्चारणा जगुर्गानं चक्रुः । तथा दिश एव पुरन्ध्र्यः प्रसेदुः प्रसन्ना बभूवुः । तथा अखिलाः समस्ता अश्रुतैतद्वृत्तान्ता अपीत्यर्थः लोका जना मङ्गलेनैव स्वस्वेष्टसिद्ध्येव पूर्णाः पूर्णमनोरथाः सन्तस्तुतुषुः । अतिदुष्टत्वात्तस्य तस्य विनाशात् सर्वेऽपि हर्षं प्रापुरित्यर्थः ॥२१॥

तीर्त्वेति । प्रतिज्ञां सीताहर्तारं श्रीरामेण पातयिष्यामीत्येवंरूपां तीर्त्वा उत्तीर्य प्रत्यागतेन पवनात्मजेन हनूमता अभिहितः कथितोऽरेरावणस्य भङ्गः पराजयो वध इत्यर्थः यस्यै तादृशी मनुजेन्द्रस्य रामस्य पत्नी सीता तदानीं रावणवधवार्ताश्रवणकाले महान् उत्सवो यस्मात्तादृशं भर्तू रामस्य मुखावलोकं मुखदर्शनं मेने कर्तुमियेषेत्यर्थः ।

पक्षे प्रतिज्ञां सहोदरं दुर्योधनं हनिष्यामीत्येवंरूपां तीर्त्वा सम्पाद्य प्रत्यागतेन पवनात्मजेन भीमेनाभिहितारिभङ्गा कथितदुर्योधनोरुभङ्गा मनुजेन्द्रपत्नी द्रौपदी तदानीं भर्तॄणां मुखानामवलोको यत्र तद्यथा तथा महोत्सवं

महावराहेण महीव सागरात्
समुद्धृता भीमबलेन सङ्कटात्।
नरेन्द्रपत्नी प्रतिपन्नमङ्गला
जहर्ष जन्मान्तरमाश्रिता यथा ॥२३॥

पत्युः प्रतिज्ञार्णवलङ्घनेन
सकञ्चुका सञ्चितचारुवेणी।
अनल्पसन्तापहुताशमध्या-
द्विनिःसृता राजवधूर्विरेजे ॥२४॥

मेने। दुर्योधनवधं श्रुत्वा अहो महानुत्सवो मे जात इति मन्यते स्मेत्यर्थः। उत्सवसमये च प्रियजनानां मुखानि दृश्यन्ते इति प्रसिद्धिः ॥२२॥

महावराहेति। महावराहेण वराहरूपिणा भगवता सागरात् प्रलय-समुद्रात् समुद्धृता मही पृथिवीव भीमस्य शत्रुभयङ्करस्य रामस्य बलेन सामर्थ्येन, भीमानि बलानि सैन्यानि यस्य स तथा तेन रामेणेति वा सङ्कटात् रावणो-परोधात् समुद्धृता रावणवधेन विहितोद्धारा नरेन्द्रपत्नी सीता प्रतिपन्नमङ्गला प्राप्तमङ्गला सती जहर्ष हर्षं प्राप। अत्रोत्प्रेक्षते,—जन्मान्तरमाश्रिता यथा प्राप्तजन्मान्तरेव, झटित्येव दुःखराशिविनाशेन सुखातिशयसम्भवादियमुत्-प्रेक्षा।

पक्षे भीमस्य वृकोदरस्य बलेन सामर्थ्येन सङ्कटात् भर्तृराज्यापहरणजनित-दुःखात् समुद्धृता नरेन्द्रपत्नी द्रौपदी। अन्यत् समानम्। उपमोत्प्रेक्षयो-रङ्गाङ्गित्वेन सङ्करः। अत्र यथाशब्दस्योत्प्रेक्षाद्योतकत्वे अवाचकत्वदोषो बोध्यः ॥२३॥

पत्युरिति। राजवधूः सीता अनल्पः सातिशयः सन्ताप उत्तापो यस्य तादृशः नत्वल्पतर इत्यर्थः यो हुताशः परीक्षाग्निस्तस्य मध्याद्विनिःसृता अदग्ध-शरीरैव निर्गता वह्निपरीक्षया निवेदितस्वशुद्धिरित्यर्थः तादृशी सती पत्यू रामस्य सर्वशत्रुरावणवधविषया प्रतिज्ञैव अर्णवस्तस्य लङ्घनेन पारगमनेन सर्वशत्रुरावण-वधेनेत्यर्थः विरेजे सुशुभे। किम्भूता—सकञ्चुका परिहितोत्तमवस्त्रा,

राज्ये नियुक्तेन विभीषणेन
हरिप्रणेत्रानुगतो बलेन ।
विमानराजप्रभुतामुपेत्य
नराधिपः स्वां नगरीं प्रतस्थे ॥२५॥

तथा सञ्चिता बद्धा चारुर्मनोज्ञा वेणी यस्याः सा, रावणगृहवासेन सतीत्व-संशयिनो रामस्य वैमनस्यपरिहाराय वह्निपरीक्षया विशुद्धा सीता विरहा-वस्थायां नियमितैकवस्त्रवेणीधारणं विहाय विहितकेशवसनोत्तमवेशा भूत्वा शत्रुविजयिनो रामस्य समीपमुपेत्य मुमुदे इत्यर्थः ।

पक्षे पत्युर्भीमस्य प्रतिज्ञार्णवलङ्घनेन दुर्योधनवधसम्पादनेन सकञ्चुका, तथा सञ्चितचारुवेणी दुःशासनकराकर्षणमारभ्य असंयतकेशा स्थिता, संप्रति सभ्रातृकदुर्योधनवधेन बद्धकेशेत्यर्थः । पत्युर्भीमाद्धेतोः प्रतिज्ञार्णवस्य 'असत्सु धार्तराष्ट्रेषु केशसंयमनं न करिष्यामि' इत्येवंरूपस्य लङ्घनेन सञ्चितचारुवेणीति वा, राजवधूर्द्रौपदी अनल्पः सन्तापो मनोव्यथैव हुताशस्तस्य मध्याद्विनिःसृता रिपुनाशेन विगतदुःखा सती विरेजे शुशुभे । अत्र प्रथमपक्षे प्रतिज्ञार्णवेत्यत्र निरङ्गरूपकं, द्वितीये सन्तापहुताशेत्यत्रापि, तदनयोः संसृष्टिः ॥२४॥

राज्य इति । नराधिपो रामः राज्ये लङ्काधिपत्ये नियुक्तेन विभीषणेन पौलस्त्येन तथा हरिर्वानरराजः सुग्रीवः प्रणेता नायको यस्य तादृशेन बलेन वानरसैन्येन च अनुगतः सन् विमानराजं रावणेन कुवेराद्विजितं पुष्पकं तस्य प्रभुतां स्वामित्वम् उपेत्य प्राप्य पुष्पकमधिरुह्येत्यर्थः स्वां नगरीमयोध्यां प्रतस्थे ।

पक्षे नराधिपो युधिष्ठिरः राज्ये नियुक्तेन राज्यं रक्षितु-मादिष्टेन तथा विभीषणेन भयङ्करेण तथा हरिः कृष्णः प्रणेता यस्य तादृशेन बलेन युद्धावशि-ष्टेन सैन्येनानुगतः सन् विमाना विगतमाना वशीकृता इत्यर्थः ये राजान-स्तेषां प्रभुताम् उपेत्य चक्रवर्तित्वं प्राप्येत्यर्थः स्वां नगरीं हस्तिनां प्रतस्थे । एतच्च भारतीयात्सौप्तिकवधादितः परं बोध्यम् । नगरीं शोभया अमरावतीं जिगीषन्निति वा ॥२५॥

समुद्वहन् भर्त्तरि भक्तिमुत्कटां
कृपानुगामी कृतवर्मनोदनः।
तमन्वगच्छद्गुरुवंशवर्द्धनः
क्षपाचरो राजवरं विभीषणः ॥२६॥

शकुनस्यानुकूल्येन शनैरारात् पताकिनीम्।
प्रभञ्जनः कुम्भजाशासम्भवस्तामवर्द्धयत् ॥२७॥

समुद्वहन्निति। भर्तरि प्रभौ रामे उत्कटामुद्रिक्तां भक्तिं समुद्वहन् धारयन्, तथा कृपाया दयाया अनुगामी अतिदयालुरित्यर्थः, तथा कृतं वर्मणः कवचस्य नोदनं युद्धोपरमादपनयनं येन सः तथा गुरुर्महान् यो वंशः पौलस्त्यवंशस्तं वर्द्धयति सत्क्रियाभिः ख्यापयतीति गुरुवंशवर्द्धनः तादृशः क्षपाचरो राक्षसो विभीषणः राजवरं राजश्रेष्ठं तं रामम् अन्वगच्छत् अयोध्यापर्यन्तमिति शेषः।

पक्षे भर्तरि दुर्योधने उत्कटां भक्तिं समुद्वहन्, तथा कृपः शारद्वतोऽनुगामी यस्य सः, तथा कृतवर्माणं हार्दिक्यं नुदति स्वसाहाय्याय प्रेरयतीति तथोक्तः कृतवर्मसहित इत्यर्थः, तथा विभीषणो भयङ्करः तादृशो गुरोर्द्रोणस्य वंशवर्द्धनः पुत्रोऽश्वत्थामा क्षपाचरः पाण्डवभयेन रात्रौ गच्छन् सन् तं भग्नोरुतया रणभूमौ शयानं राजवरं दुर्योधनम् अनु लक्षीकृत्य अगच्छत् ॥२६॥

शकुनस्येति। आरात् समीपे शनैर्मन्दं वहन् कुम्भजोऽगस्त्यस्तस्याशा दक्षिणादिक् तत्सम्भवः प्रभञ्जनः पवनः शकुनं शुभसूचकनिमित्तम्। "शुभशंसिनिमित्ते च शकुनं स्यान्नपुंसकम्" इति मेदिनी। तस्यानुकूल्येन शकुनसूचितानुकूल्यवदानुकूल्येनेत्यर्थः अतएव निदर्शना। तां पताकिनीं वानरसेनाम् उत्तराभिमुखप्रस्थितामित्यर्थः। अतएव दाक्षिणात्यपवनस्यानुकूलत्वं। पताका सौभाग्यं तद्युक्तां सीतामिति गुरवः। अवर्द्धयत् संवर्द्धयामास असुखयदित्यर्थः।

पक्षे कुम्भजो द्रोणस्तस्याशया मनोरथेन सम्भवो यस्य सः प्रभञ्जनः शत्रुमर्दनोऽश्वत्थामा आरात् न्यग्रोधमूलस्थितस्य स्वस्य समीपे शनैर्निभृतमागतस्य शकुनस्य उलूकपक्षिण आनुकूल्येन निद्रितकाकगणविनाशनरूपसौप्तिकवधो-

अभ्यर्णे कीर्णसेनापतिपृथुकुणपं कृत्तभीष्मारिकण्ठं
योधव्रातप्रतीकैर्विषमितवसुधं ध्वस्तनानाकुमारम् ।
खेलद्वेतालमारादुपरिपरिपतत्फेरुभेरुण्डतुण्डं
श्रोतुं वा नालमासीत् पथि नृपतिवधूराजपुत्राजिरङ्गम्
॥२८॥

पदेशेन तां पताकिनीं शिखण्डिधृष्टद्युम्नद्रौपदेयाद्यधिष्ठितयौधिष्ठिरसेनां शिविरे सुखं शयानामिति शेषः अवर्द्धयत् चिच्छेद । वर्द्धच्छेदपूरणयोरित्यस्य चौरादिकस्य रूपम् । अश्वत्थामा किल रात्रौ न्यग्रोधमूले पाण्डवबलप्रतीकारं चिन्तयन् निभृतमागत्य सुप्तं काककुलं छित्वा भूमौ पातयन्तं कञ्चिदुलूकपक्षिणं ददर्श । दृष्ट्वा च तथाविधं तं सुप्तस्य रिपुकुलस्य वधोऽनेन मे उपदिष्ट इति मत्वा पाण्डवशिविरं गत्वा तत्र सुप्तान् धृष्टद्युम्नादीन् जघानेति भारती भारती ॥२७॥

अभ्यर्ण इति । नृपतिवधूः सीता पक्षे द्रौपदी राजपुत्रस्य रामस्य पक्षे राजा प्रभुर्द्रोण इत्यर्थः यद्वा अजः शिवस्तदुपासक आजो द्रोणस्तत्पुत्रस्या-श्वत्थाम्नः आजिर्युद्धस्थानं रङ्गो नाट्यशालेव आजिरेव रङ्ग इति वा, तं श्रोतुं वा श्रोतुमपि किं पुनर्द्रष्टुमिति भावः अलं समर्था नासीत् । एकत्र स्त्रीस्वाभाव्येन भीरुत्वात्, अपरत्र पुत्रभ्रात्रादिवधजनितशोकादिति भावः । किम्भूतम्— अभ्यर्णे समीपे कीर्णा विक्षिप्ताः सेनापतीनां पृथवः कुणपाः शवा यत्र, पक्षे कीर्णः सेनापतेर्धृष्टद्युम्नस्य पृथुः कुणपो यत्र तं, तथा कृत्ताश्छिन्ना भयङ्करा-णामरीणां कण्ठा ग्रीवा यत्र, पक्षे कृत्ता भीष्मारेः शिखण्डिनः कण्ठो यत्र तं, तथा योधव्रातानां भटसमूहानां प्रतीकैरङ्गैः । "अङ्गं प्रतीकोऽवयव" इत्यमरः । विषमिता उन्नतानतीकृता वसुधा यत्र तं, तथा ध्वस्ता नाशं प्राप्ता नाना बहवः कुमारा अतिकायादयः पक्षे द्रौपदेया यत्र तं, तथा आरात् समीप एव खेलन्तः क्रीडन्तो वेताला भूता यत्र तं, तथा उपरि शवानामूर्द्ध्वं परिपतन्ति कवलग्रहणाय सव्यापाराणि फेरूणां शृगालानां भेरुण्डानाञ्च मांसाशि-देवताभेदानां यक्षिणीदेवानां वा तुण्डानि मुखानि यत्र तं । "भेरुण्डा देवताभेदयक्षिण्यन्तरयोः स्त्रियाम्" इति मेदिनी । तुण्डमित्यत्र खण्डमिति

कृतप्रतीकारमरेः कृतागसः
समग्रचूडामणिमौलिनिग्रहात्।
अभिष्टुवन्तो विजयं महाभुजं
ससोदरं ते सुहृदोऽनुवव्रजुः ॥२६॥
एवं विलङ्घ्यापदमर्णवं वा
जवेन पश्चात्कृतदीर्घमार्गः।
सबन्धुवर्गं भरतप्रधानं
ददर्श राजा धृतराष्ट्रमाशु ॥३०॥

पठित्वा उपरि पतद्भिः फेरुभि र्भैरुण्डा भयानका रुण्डाः कबन्धा यत्र तमिति-व्याचक्षते केचित् ॥ २८ ॥

कृतेति। विजयं विशिष्टजयम् अभिष्टुवन्तः प्रशंसन्तस्ते सुहृदो विभी-षणादयः कृतागसः कृतसीताहरणरूपापराधस्यारे रावणस्य समग्राः चूलाश्चू-डामणयो यत्र तादृशा मौलयो मस्तकानि तेषां निग्रहाच्छेदाद्धेतोः कृतः प्रतीकारो वैरनिर्यातनम् येन स तथा तं, ससोदरं सलक्ष्मणं महाभुजं रामम् अयोध्यां प्रतिष्ठमानमिति शेषः अनुवव्रजुः अनुजग्मुः। पूर्वोक्तस्यानुवादोऽयम्।

पक्षे ते सुहृदः कृष्णादयः कृतागसः कृतद्रौपदेयादिसौप्तिकवधरूपा-पराधस्य अरेरश्वत्थाम्नः चूडायां जातो मणिश्चूडामणिस्तद्रूपो मौलिः किरीटम्। "मौलिः किरीटे धम्मिल्ले" इति मेदिनी। तस्य समग्रः संपूर्णो निग्रहश्छेदनं तस्माद्धेतोः कृतप्रतीकारं "वपनं द्रविणादानम्" इत्यादिस्मरणात् सौप्तिकवधकर्मणो वधार्हस्याश्वत्थाम्नः सहजचूडामणिच्छेदनरूपवपनेन कृतवैर-शुद्धिमित्यर्थः। ईदृशं विजयमर्जुनमभिष्टुवन्तः सन्तः ससोदरं युधिष्ठिरादिसहितं महाभुजं तमर्जुनमनुवव्रजुः ॥२६॥

एवमिति। स राजा रामः एवं पूर्वोक्तप्रकारेण अर्णवं वा समुद्रमिव ! वैतुल्यमायाम्। आपदं रावणादिजनितविपदं विलङ्घ्य उत्तीर्य। अत्र—"चंद्र-बिम्ब इवाभाति" इत्यादिवत् द्वयोरप्युपमानोपमेययोः समुद्रविपदोः प्रकृतार्थ

शिखावलानामिव वारिवाहं
पिकावलीनामिव चैत्रमासम् ।
उदन्वतामिन्दुमिवोज्जजृम्भे
प्रीतिस्तमालोकयतां जनानाम् ॥३१॥

चिराद्वियोगे तपसीव तीव्रे
गते समाप्तिं परिपाकभाजा ।
फलोदयेनेव तदीक्षणेन
कृतार्थतामापुरमात्यवर्गाः ॥३२॥

तेन समुद्रं विपदञ्च विलङ्घेत्यर्थः । जवेन रथवेगेन पश्चात्कृतोऽतिक्रान्तो दीर्घो मार्गः पन्था येन तादृशः सन् आशु अचिरादेव भरतः कैकेयः प्रधानं यस्य तं तथा धृतराष्ट्रं चतुर्दश वर्षान् रक्षितराज्यं बन्धुवर्गं शत्रुघ्नसुमन्त्रादिकं ददर्श ।

पक्षे, राजा युधिष्ठिरः अर्णवं वा समुद्रमिव दुस्तराम् आपदं दुर्योधनादिकृतविपदं विलङ्घ्य बन्धुवर्गैर्विदूरादिभिः सहितं भरतप्रधानं भरतवंशमुख्यं धृतराष्ट्रम् आम्बिकेयम् आशु प्रथमं ददर्श । शेषं समानम् । उपमा ॥३०॥

शिखेति । वारिवाहं मेघम् आलोकयतां पिकावलीनां शिखावलानां मयूराणामिव तथा चैत्रमासम् आलोकयतां पिकावलीनां कोकिलकुलानामिव तथा इन्दुम् आलोकयतामुदन्वतां समुद्राणामिव तं रामं पक्षे युधिष्ठिरम् आलोकयतां चिरात् पश्यतां जनानां प्रीतिः उज्जजृम्भे ववृधे । अत्र एकस्यानेकोपमानैरुत्कर्षणान्मालोपमा ॥३१॥

चिरादिति । अमात्यवर्गाः प्रकृतयः तीव्रे उग्रे तपसि तपस्यायामिव वियोगे विच्छेदे चिरात् चतुर्दशवर्षानन्तरं समाप्तिमवसानं गते सति परिपाकभाजा सम्पन्नेन फलोदयेनेव तस्य रामस्य पक्षे युधिष्ठिरस्य ईक्षणेन दर्शनेन कृतार्थतां कृतप्रयोजनताम् अतिसुखितामित्यर्थः आपुर्लेभिरे । यथा उग्रे तपसि समाप्ते तत् फलोदयेन जनाः कृतार्था भवन्ति, तथा वियोगे गते तद्दर्शनेनेत्यर्थः । उपमा ॥३२॥

श्रीखण्डद्रवनीरजीकृतपथा वल्गत्पताका क्वचि-
द्भास्वत्तोरणराजिरुत्सुकजनप्रारब्धरम्योत्सवा।
हृद्यातोद्यवरा ससम्भ्रमवधूक्रान्तोच्चहर्म्यावली
पत्यावेष्यति कामिनीव नगरी सा कॢप्तशोभा बभौ ॥३३॥

करकिशलयमुक्तैर्लाजवर्षैर्वधूना-
मलघुभिरनुवेलं कीर्यमाणाङ्गयष्टिः।
प्रमुदितजनवर्गं राजमार्गेण गत्वा
भवनमवनिपालः प्राविशत् पूर्वजानाम् ॥३४॥

नाथेन साकं प्रथमं गताया-
स्तेनैव सार्द्धं पुनराव्रजन्त्याः।

श्रीखण्डेति। पत्यौ स्वामिनि रामे पक्षे युधिष्ठिरे, अन्यत्र वल्लभे एष्यति आगमिष्यति सति कामिनीव वासकसज्जिका नायिकेव सा नगरी अयोध्या पक्षे हस्तिना कॢप्तशोभा रचितशोभा सती बभौ। शोभामेव विशेषणैराह, किम्भूता—श्रीखण्डद्रवेण चन्दनरसेन नीरजीकृता धूलिरहितीकृताः पन्थानो यत्र सा, तथा क्वचित्प्रदेशेषु वल्गन्त्यश्चलन्त्यः पताका यत्र सा, तथा भास्वती मालादिभिः शोभमाना तोरणराजिः वहिर्द्वारश्रेणी यत्र सा तथा उत्सुकैरानन्दमुग्धैर्जनैः प्रारब्धा रम्या उत्सवा यत्र सा, तथा हृद्यैर्मनोज्ञै-रातोद्यैर्वादित्रैर्वरा उत्कृष्टा, तथा ससम्भ्रमाभिः कुतूहलेन सत्वराभिर्वधूभिः क्रान्ता आरूढा उच्चा हर्म्यावली सौधपृष्ठसमूहो यत्र सा। उपमा ॥ ३३ ॥

करेति। अवनिपालो रामः पक्षे युधिष्ठिरः वधूनां नगराङ्गनानां करकिशलयमुक्तैः करपल्लवप्रक्षिप्तैरलघुभिर्माङ्गल्यान्महद्भिर्लाजवर्षैर्वृष्यमाणला-जैरनुवेलं वारम्वारं कीर्यमाणा छाद्यमाना अङ्गयष्टिर्यस्य तादृशः सन् राज-मार्गेण नृपगमनोचितवर्त्मना गत्वा प्रमुदितजनवर्गं तदागमनेन हृष्टजनसमूहं पूर्वजानां भवनं प्राविशत् ॥ ३४ ॥

साक्षाच्छ्रियो मूर्तिरिवाविवेश
पुरे नरेन्द्रस्य तदा पुरन्ध्री ॥३५॥

तदा तदालोकनतत्पराणां
मुखैर्वधूनां निचिता गवाक्षाः।
विकाशिहेमाम्बुजनिर्भराणां
सरोवराणां समतामवापुः ॥३६॥

चयेन दन्ताधरलोचनत्विषां
विलक्ष्यमाणानुभवेन सुभ्रुवाम्।
सुवर्णवातायनपङ्क्तयस्तदा
विचित्ररत्नोत्खचिता इवाबभुः ॥३७॥

नाथेनेति। नाथेन ईश्वरेण रामेण पक्षे युधिष्ठिरेण साकं सह प्रथमं गतायाः तद्वनगमनमारभ्य पुरस्य श्रीहीनत्वादिति भावः। तथा तेनैव नाथेन साकं पुनराव्रजन्त्या आगच्छन्त्याः तदागमनेन च पुरस्य पुनः श्रीमत्त्वादिति भावः। श्रियो लक्ष्म्याः साक्षात् मूर्तिरिव नरेन्द्रस्य रामस्य पक्षे युधिष्ठिरस्य पुरन्ध्री पत्नी सीता पक्षे द्रौपदी तदा पुरे नगरे आविवेश प्राविशत्। पुरे इति विवक्षया अधिकरणत्वं, पुरमिति समीचीनः पाठः। उत्प्रेक्षा ॥३५॥

तदेति। तदा तस्य पुरप्रवेशसमये तस्याः सीतायाः पक्षे द्रौपद्या आलोकने तत्पराणां व्यापृतानां वधूनां पुराङ्गनानां मुखैर्निचिता व्याप्ता गवाक्षाः विकाशी हेमाम्बुजानां स्वर्णकमलानां निर्भरोऽतिशयो यत्र तादृशानां सरोवराणां समताम् तुल्यताम् अवापुः। अत्र गवाक्षेषु सरोवरसादृश्यासम्भवात् तद्विशेषणीभूतानां मुखानामेव हेमाम्बुजसाम्यं बोध्यम् ॥३६॥

चयेनेति। तदा नृपदर्शनसमये सुवर्णवातायनपङ्क्तयः कनकमयगवाक्षश्रेणयः सुभ्रुवां नृपदर्शनतत्पराणां पुराङ्गनानां विशेषेण लक्ष्यमानाः प्रत्येकं दृश्यमाना अनुभवा यस्य तादृशेन प्रत्येकमनुभूयमानेनेत्यर्थः। दन्तानाम् अधराणां लोचनानाञ्च त्विषां शुक्ललोहितश्यामलकान्तीनां चयेन समूहेन

शरीरसन्धारणदुःखराशे-
रेतत् फलं श्रेय इति स्मरन्तीम् ।
स्नुषामुखन्यस्तसवाष्पदृष्टिं
भक्त्या ववन्दे जननीं नरेन्द्रः ॥३८॥

आयोधनान्मृत्युमुखादिवोग्रा-
द्विनिःसृतं भ्रातृसहायमग्रे ।
कृतप्रणामं तमवेक्ष्य माता
बालस्तदा जात इतीव मेने ॥३९॥

सम्मोचिते तस्य जटाकलापे
प्रसाधकैः कङ्कतसक्तहस्तैः ।

कृत्वा विचित्रै-र्नानाकान्तिमद्भी-रत्नै-रुत्खचिता इव सम्बद्धा इवेत्युत्प्रेक्षा, तादृश्यः सत्यः आबभुः शुशुभिरे ॥३७॥

शरीरेति । नरेन्द्रो रामः पक्षे युधिष्ठिरः भक्त्या जननीं कौशल्यां पक्षे कुन्तीं ववन्दे प्रणनाम । किम्भूतां,—शरीरसन्धारणे यो दुःखराशिस्तस्य एतत् पुत्रस्नुषामुखदर्शनरूपं श्रेयो भद्रं फलम् इति स्मरन्तीं मन्यमानां, तथा स्नुषाया वध्वाः सीतायाः पक्षे द्रौपद्या मुखे न्यस्ता अर्पिता सवाष्पा आनन्दाश्रुसहिता दृष्टिर्यया तां,चिरात् पुत्रस्नुषादर्शनेन प्रेमानन्दस्य परां कोटिमारूढामित्यर्थः॥३८

आयोधनादिति । माता कौशल्या पक्षे कुन्ती उग्राद्भयङ्करान्मृत्युमुखादिव आयोधनाद्युद्धाद्विनिःसृतं कथञ्चिद्युद्धे विनाशमप्राप्तं भ्रातृसहायं सलक्ष्मणं पक्षे भीमादिसहितं, तथा अग्रे कृतप्रणामं तं रामं पक्षे युधिष्ठिरम् अवेक्ष्य दृष्ट्वा तदा तस्मिन् समये बालोजातः अयं मे पुनर्बालको जात इतीव मेने बुबुधे । सम्भाव्यमानविनाशस्य कथञ्चिज्जीवनेनहि पुनर्जातत्वबोधो युज्यते । विशेषतस्तु मातुरित्युत्प्रेक्षा, सा च मृत्युमुखादिवेत्युत्प्रेक्षया सङ्कीर्णा ॥३९॥

सम्मोचित इति । तस्य रामस्य पक्षेऽयुधिष्ठिरस्य जटाकलापे मिथोबद्ध-केशसमूहे कङ्कतेषु केशसंस्कारणद्रव्यभेदेषु सक्ता व्यापृता हस्ता येषां ते तथा

निरन्तरग्रन्थिरपि श्लथोऽभूत्
तदा जनानां हृदयेषु शोकः ॥४०॥

अथाभिषेकाभिरतैः स्वमौलैः
सद्यो विसृष्टा निपुणाः पुमांसः ।
तीर्थाम्भसामाहरणाय चेरुः
पृथ्वीं रसानामिव सूर्यपादाः ॥४१॥

तं चार्वङ्ग्या सह दयितया भद्रपीठोपविष्टं
वारां पूरैः कनककलसावर्जितैरभ्यषिञ्चन् ।
इष्टान् मन्त्रान् जगदघहरान् व्याहरन्तो मुनीन्द्रा
मेरुं मेघा इव सनिनदाः सङ्गतं कल्पवल्ल्या ॥४२॥

तैः प्रसाधकैः संस्कारकजनैः सम्मोचिते त्याजितग्रन्थिके सति सति निरन्तर-ग्रन्थिरपि अविरलग्रन्थिरपि गाढनिबद्धोऽपीत्यर्थः जनानां हृदयेषु स्थितः शोकः तस्य राज्यच्युतिपूर्वकं वनगमनजनितदुःखं तदा श्लथः शिथिलग्रन्थिरभूत्, अप-जगामेत्यर्थः । जटाग्रन्थिशोकग्रन्थ्योर्हि समकालीनतया तुल्यकक्षो तत्र एकस्य श्लथत्वेऽपरस्य श्लथत्वं युज्यत इति भावः ॥४०॥

अथेति । अथानन्तरं रामस्य पक्षे युधिष्ठिरस्य अभिषेकेऽभिरतैः साकाङ्क्षैः स्वस्य मौलैः प्रधानैर्वशिष्ठादिभिः पक्षे धौम्यादिभिः कर्तृभिः सद्यस्तत्कालं विसृष्टाः प्रस्थापिता निपुणाः कुशलाः पुमांसः तीर्थाम्भसाम् आहरणाय रसा-नामाहरणाय सूर्यस्य पादाः किरणा इव पृथ्वीं चेरुर्बभ्रमुः । उपमा ॥४१॥

तमिति । मुनीन्द्रा वशिष्ठादयः पक्षे द्वैपायनादयः जगतो राज्यस्य अघहरान् पापहन्तॄन् । जगत्पापपुण्याभ्यामेव कुराजसुराज्ञोः सम्भवादिति भावः । इष्टान् अभीष्टार्थप्रदान् मन्त्रान् आभिषेचनिकी ऋचो व्याहरन्तो जपन्तः सन्तः चार्वङ्ग्या सुन्दरावयवया दयितया पत्न्या सीतया पक्षे द्रौपद्या सह भद्रपीठोपविष्टं सिंहासनस्थितं तं रामं पक्षे युधिष्ठिरं कनककलसावर्जितैः सौवर्णघटप्रक्षिप्तैः वारां तीर्थजलानां पूरैः प्रवाहैः अत्वा कल्पवल्ल्या कल्पलतया

जलोच्चयस्तन्मुकुटाग्रभागे
निपत्य गात्रं परितो विसर्पन्।
रराज मेरोः शिखराभिघाता-
द्विष्वग्विसारीव सुरापगौघः ॥४३॥

सद्यो विद्याधरकरपुटैर्वारिवाहैश्च मुक्ता
दूरोत्सर्पत्परिमलमिलद्भृङ्गसङ्गीतहृद्या।
ज्योत्स्नाफेनस्तवकसदृशी मङ्क्षु पर्यस्तरत् क्ष्मां
दिव्योद्यानद्रुमशिखरजा पुष्कला पुष्पवृष्टिः ॥४४॥

सङ्गतं सहितं मेरुं सनिनदाः सशब्दा मेघा इव अभ्यषिञ्चन् अभिषिक्तं चक्रुः। अत्र दयितासहितत्वकल्पवल्लीसङ्गतत्वयोर्व्याक्रियमाणमन्त्रत्वसनिनदत्वयोश्च बिम्बानुबिम्बत्वेन साधारणधर्मत्वात् पूर्णोपमा। यदुक्तं—"एकरूपः क्वचित् क्वापि भिन्नः साधारणो गुणः। भिन्ने बिम्बानुबिम्बत्वं शब्दमात्रेण वा भिदा" इति। मन्दाक्रान्तावृत्तम् ॥ ४२ ॥

जलोच्चय इति। तस्य रामस्य पक्षे युधिष्ठिरस्य मुकुटाग्रभागे निपत्य परितोऽभितो गात्रं विसर्पन् व्याप्नुवन् जलोच्चयोऽभिषेकजलप्रवाहः मेरोः शिखरे शृङ्गेऽभिघातात् विष्वग्विसारी अलकनन्दादिरूपेण चतुर्दिग्गामी सुरापगायाः गङ्गाया ओघः प्रवाहइव रराज शुशुभे। उपमा ॥ ४३ ॥

सद्यइति। सद्यस्तत्कालं विद्याधराणां करपुटैः तथा वारिवाहैर्मेघैश्च मुक्ता त्यक्ता पुष्पाणां वृष्टिः मङ्क्षु झटिति क्ष्मां पृथिवीं पर्यस्तरत् आच्छादयामास। तद्राज्याभिषेकमाङ्गल्यायेति भावः। किम्भूता—दूरमुत्सर्पन् यः परिमलो गन्धस्तेन मिलन्त उपतिष्ठन्तो ये भृङ्गा स्तेषां सङ्गीतेन झङ्कारेण हृद्या मनोज्ञा, तथा ज्योत्स्नायाः फेनस्तवकस्य फेनपुञ्जस्य च सदृशी अतिशुक्लेत्यर्थः, तथा दिव्योद्यानानां नन्दनचैत्ररथादीनां ये द्रुमाः पारिजातादय स्तेषां शिखरेषु जाता, तथा पुष्कला प्रचुरा शोभना वा ॥ ४४ ॥

प्रासादान् प्रतिनादयन् क्षितिभृतां द्राक् कन्दरान् पूरयन्
दिग्भित्तीः प्रतिघट्टयन् प्रगुणयन्नम्भोनिधीनां ध्वनिम्।
मूर्च्छन्नुच्चविमानसद्मसु मुहुः स्वर्लोकवाद्यस्वनै-
राध्मातः शिवमाविरास जगतः कल्याणतूर्यध्वनिः॥४५॥

तं तरुण्योऽभिषेकान्ते राजानं निरराजयन्।
दीपैर्विद्युत्कलापेन मेघमाला इवाचलम्॥४६॥

परितापमपानुदज्जनानां
क्षितिभर्तुः कृतशोभमातपत्रम्।

प्रासादानिति। तदा कल्याणतूर्यध्वनिः मङ्गलवाद्यानां ध्वनिः जगतः पृथिव्याः शिवं शुभकरं यथा तथा आविरास प्रादुर्बभूव। किम्भूतः—प्रासादान् राजगृहाणि प्रतिनादयन् प्रतिध्वनियुक्तान् कुर्वन्, तथा द्राक् झटिति क्षितिभृतां पर्वतानां कन्दरान् दरीः पूरयन् व्याप्नुवन्, तथा दिश एव भित्तयः दिशांभित्तयः प्रान्तभागा वा ताः प्रतिघट्टयन् आक्रामन् प्रतिनादिनीः कुर्वन् वा, तथा अम्भोनिधीनां समुद्राणां ध्वनिं कल्लोलशब्दं प्रगुणयन् स्वसम्पर्केण वर्द्धयन्, तथा उच्चानि यानि विमानसद्मानि नृपगृहाणि दर्शनार्थमागतानां देवानां व्योमयानरूपगृहाणि वा। "विमानो व्योमयाने च सार्वभौमगृहेऽपि च" इति मेदिनी। तेषु मूर्च्छन् वृद्धिं गच्छन् तथा स्वर्लोकवाद्यानां हृष्टैर्देवैर्वादितानां भेर्यादीनां स्वनैः शब्दैर्मुहुराध्मातः पुष्टिं नीतः। अत्र यथायथं तस्य तथासम्बन्धेऽपि तद्वर्णनादतिशयोक्तिः। शार्दूलविक्रीडितम्॥४५॥

तमिति। तरुण्यो युवत्यः अभिषेकस्यान्ते दीपैर्मङ्गलप्रदीपैः कृत्वा तं राजानं रामं पक्षे युधिष्ठिरं विद्युतां कलापेन समूहेन अचलं पर्वतं मेघमाला इव निरराजयन् नीराजितवत्यः। अत्र दीपैरित्येकमात्रस्य पदस्योत्तरार्द्धपतितत्वेनार्द्धान्तरैकपदत्वदोषो न लक्षितः कवीनां निरङ्कुशत्वादिति ध्येयम्। उपमा॥४६॥

निरवद्यतदीयकीर्तिगङ्गा

नवपूरोत्सुकहंसमण्डलीव ॥४७॥

विमलमुकुटमौलिः कुण्डलेन्द्राङ्गदश्री-

र्मणिवलयविलासी तारहाराभिरामः।

परिगतकटिसूत्रः सोऽधिकं प्रेक्ष्य आसी-

दपर इव जनानां पुण्यजः पारिजातः ॥४८॥

पुराणभूपालपरम्पराणां

साम्राज्यलक्ष्मीहरकार्मणं सः।

परितापेति। कृता मुक्तादामादिभिर्जनिता शोभा यस्य तादृशं क्षितिभर्तूराज्ञो रामस्य पक्षे युधिष्ठिरस्य मूर्ध्नि धृतमिति शेषः आतपत्रं छत्रं। क्षितिभर्तुः कृतशोभं शोभाजनकमिति कश्चित्। निरवद्या अनिन्दिता शुद्धेत्यर्थः। नद्यो वदेर्गर्हिते इतिक्यः। तदीया या कीर्तिः सैव स्वच्छत्वात् गङ्गा तस्या यो नवो नवीनः वर्षाप्रारम्भजात इत्यर्थः पूरः प्रवाहः प्रकृते प्रसरस्तत्र उत्सुका सतृष्णा हंसमण्डलीव राजहंसश्रेणीवेत्युत्प्रेक्षा जनानां प्रजानां परितापं राज्यभ्रंशजनितदुःखम् अपानुदत् व्यनाशयत्। अत्र हंसमण्डलीवेत्युत्प्रेक्षा, कीर्तिगङ्गेति रूपकेणाङ्गाङ्गितया सङ्कीर्णा। औपच्छन्दसकम् ॥४७॥

विमलेति। विमलं परिष्कृतं मुकुटं मौलौ मस्तके यस्य सः। गड्वादेः सप्तम्यन्तं परमिति सप्तम्यन्तस्य मौलेः परनिपातः। तथा कुण्डलाभ्याम् इन्द्राङ्गदाभ्यां रत्नमयत्वेनोद्दीप्तकेयूराभ्याञ्च श्रीः शोभा यस्य सः। तथा मणिवलयाभ्यां रत्नमयकटकाभ्यां विलसतीति सः, तथा तारहारेण शुद्धमौक्तिकदाम्ना। "तारो वानरभिन्मुक्ताविशुद्धयोः शुद्धमौक्तिके" इति मेदिनी। अभिरामः सुन्दरः तथा परिगतं परिहितं कटिसूत्रं रत्नमेखला येन सः तादृशः स रामः पक्षे युधिष्ठिरः जनानां प्रजानां पुण्यजः पुण्याज्जातः अपरः पारिजात इव देवतरुविशेष इव तत्रापि मुकुटाद्यलङ्काराणां सद्भावादियमुत्प्रेक्षा। अधिकं यथा तथा प्रेक्ष्यो दर्शनीय आसीत्। स्वतः सुन्दरोऽपि नृपचिह्नमुकुटादिधारणादतिसुन्दरो बभूवेत्यर्थः। मालिनी ॥४८॥

मणिप्रभाभासुरमध्यतिष्ठत्
सिंहासनं सूर्य इवोदयाद्रिम् ॥४९॥
मणिदर्पणमण्डले मनोज्ञे
परिफुल्ला विरराज तस्य मूर्तिः ।
सुधियां हृदयेषु तद्गुणौघः
ककुभां भित्तिषु पुण्यकीर्तिपूरः ॥५०॥
लीलायत्तैर्नयनवलनैः सस्मितैर्भ्रूविलासै-
र्यूनां चित्ते मनसिजदशां गाढमुद्बोधयन्त्यः ।

'पुराणेति । स रामः पक्षे युधिष्ठिरः उदयाद्रिं पूर्वपर्वतं सूर्य इव सिंहासनम् अध्यतिष्ठत् आरुरोह । यत्रार्थेऽधिष्ठादेरित्यधिकरणस्य कर्मत्वम् । किम्भूतं—पुराणभूपालपरम्पराणां पूर्वाभिषिक्तनृपसमूहानां साम्राज्यलक्ष्म्याश्चक्रवर्तित्वशोभाया हरे हरणे । भावे डः । कामेणं मन्त्रतन्त्रादिना वशीकरणकारणम् । "कार्मणं मन्त्रतन्त्रादियोजने कर्मठेऽपि च" इति विश्वः । साम्राज्यलक्ष्मीहरं यत् कार्मणं तद्रूपमिति वा । वरेति पाठे वरं श्रेष्ठं कार्मणमित्यर्थः । तस्मिन् सिंहासनारूढे अन्येषां साम्राज्यभङ्गादिति भावः । तथा मणीनां प्रभाभिर्भासुरमुज्ज्वलम् । उपमा ॥४९॥

मणीति । तस्य रामस्य पक्षे युधिष्ठिरस्य परिफुल्ला अभिषेकालङ्करणादिना प्रफुल्ला मूर्तिर्देहः मनोज्ञे सुन्दरे मणिदर्पणमण्डले मणिमयादर्शाभ्यन्तरे विरराज प्रतिविम्बितत्वेन शुशुभे । तथा तस्य गुणौघो गुणसमूहः सुधियां सुबुद्धिमतां हृदयेषु विरराज । तथा तस्य पुण्यः पवित्रः कीर्तिपूरो यशःकदम्बं ककुभां भित्तिषु दिक्प्रान्तेषु विरराज । अत्राभिषेकाद्यनन्तरं दर्पणप्रतिविम्बे देहदर्शनस्यैव वर्णनीयत्वेन प्रकृतत्वात् गुणौघकीर्त्तिपूरयोस्तदानीमवर्णनीयत्वेनाप्रकृतत्वात्तेषाम् एकविराजनक्रियासम्बन्धाद्दीपकम् । औपच्छन्दसकं वृत्तम् ॥ ५० ॥

लीलेति । अवला वाराङ्गनाः चञ्चन्तो वाहुविक्षेपणाच्चलन्तः अतएव शिञ्जन्तो मधुरं कूजन्तो वलयाः कटकानि येषु तादृशा निजाः स्वीया ये

चञ्चच्छिल्लद्वलयनिजदोर्वल्लरीवेल्लितैस्तं
सेवन्तेस्म प्रबलमबलाश्चामरालीमरालैः ॥५१॥
प्रसन्नचक्षुर्ललितं सलक्ष्मणं
किरीटकोटीषु कराग्रसम्पुटम्।
विधारयन्तः सुहृदश्चिराय तं
यथोचितस्थानजुषः सिषेविरे ॥५२॥

दोषो बाहवस्ते मनोज्ञत्वाद्वल्लर्यो मञ्जर्य इव तास्तथा ताभिर्वेल्लितैश्चालितैः चामराणाम् आल्यः श्रेणयः शुभ्रत्वान्मराला राजहंसा इव ते तथा तैः कृत्वा तं रामं पक्षे युधिष्ठिरं प्रबलम् अधिकं यथा तथा। प्रवणमिति पाठे सप्रश्रयमित्यर्थः, प्रणयमिति पाठस्तु न मनोरमः। सेवन्तेस्म उपासितवत्यः। किम्भूताः— लीलाया विलासस्य आयत्तैर्वशं गतैः लीला आयत्ता येषां तैरिति वा, सविलासैरित्यर्थः नयनवलनैश्चक्षुर्विक्षेपैः सकटाक्षनिरीक्षणैरित्यर्थः, तथा सस्मितैः सहासैर्भ्रूविलासैर्भ्रूभङ्गिभिश्च कृत्वा यूनां चित्ते गाढं सातिशयं यथा तथा मनसिजदशां कामावस्थाम् उद्बोधयन्त्य उद्दीपयन्त्यः अतिसुन्दर्य इत्यर्थः। अत्र दोर्वल्लरीत्यत्र चामरालीमरालैरित्यत्र च लुप्तोपमयोः संसृष्टिः। मन्दाक्रान्ता ॥ ५१ ॥

प्रसन्नेति। सुहृदो मित्राणि अमात्या इत्यर्थः किरीटकोटीषु स्वस्वमुकुटाग्रेषु कराग्रसम्पुटम् अञ्जलिं विशेषेणातिभक्त्येत्यर्थः धारयन्तः सन्तः अञ्जलिना प्रणम्य तदाज्ञां गृह्णन्त इत्यर्थः। तथा यथोचितस्थानजुषः यथायोग्यस्थाननिविष्टाः सन्तश्च प्रसन्नं चक्षुर्ललितं नयनविलासो यस्य तं, सर्वान् सप्रसादं निरीक्षमाणमित्यर्थः, तथा सलक्ष्मणं सौमित्रिणा सहितं एतदुपलक्षणं, भरतशत्रुघ्नसहितमपीति बोध्यं, पक्षे साम्राज्यचिह्नसुवर्णदण्डादिसहितम् तं रामं पक्षे युधिष्ठिरं चिराय सिषेविरे उपासितवन्तः। प्रसन्नचक्षुश्चलनेक्षणक्षणमिति पाठे प्रसन्नयोश्चक्षुषोश्चलनेन यदीक्षणम् आज्ञाप्रदानार्थं दर्शनं तस्य यः क्षणः समयस्तमेव व्याप्य किरीटकोटीषु कराग्रसंपुटं विधारयन्तः वितण्डामन्तरेण सादरं प्रणम्य तदाज्ञां गृह्णन्त इत्यर्थः ॥ ५२ ॥

अयाचिताभीष्टवरप्रदाने-
रुत्साहविश्रम्भकरैश्च वाक्यैः।
कृतानुयोगैश्च गुणानुरूपै-
रतूतुषन्मित्रजनं जनेशः ॥५३॥
अग्र्यासु सम्पत्तिषु सन्निवृत्ताः
वृता वरार्थं सुहृदः प्रसाद्य।
ययाचिरे सम्पदमानतास्ते
तद्भृत्यभावादधिकां न काञ्चित् ॥५४॥
अनुज्झितास्थानकगर्भमानकै-
र्ध्वनद्भिरारात् प्रथमं निवेदितैः।

अयाचितेति। जनेशः प्रजानाथो रामः पक्षे युधिष्ठिरः अयाचितानामप्रार्थितानामपि अभीष्टानां वराणां श्रेष्ठवस्तूनां प्रदानैः तथा उत्साहः क्रियास्वौत्सुक्यं विश्रम्भो विश्वासः तौ कुर्वन्तीति तादृशैर्वाक्यैश्च तथा गुणानुरूपैर्गुणयोग्यैः यस्य यादृशा गुणास्तदुचितैरित्यर्थः कृता ये अनुयोगाः प्रश्नाः। "प्रश्नोऽनुयोगः पृच्छा च" इत्यमरः। कृतानां कर्मणाम् अनुयोगा वा तैश्च कृत्वा मित्रजनम् अतूतुषत्। सर्वथा चित्तानुवर्तनेन तोषयामास ॥५३॥

अग्र्यास्विति। प्रसाद्य प्रसन्नचित्तीकृत्य वरार्थम् अभीप्सितवस्तुग्रहणाय। "वरो जामातरि वृतौ देवतादेरभीप्सिते" इति विश्वः। वृताः कृतानुरोधा अपि अग्र्यासु उत्तमास्वपि सम्पत्तिषु तेन दीयमानास्विति शेषः संनिवृत्ताः सम्यङ्-निवृत्तमनस्काः। अपादानत्वात् पञ्चम्यां प्राप्तायां विवक्षावशात् कारकाणि भवन्तीत्यधिकरणविवक्षया सप्तमी। तेन दीयमाना उत्तमा अपि सम्पत्तीरगृह्णन्त इत्यर्थः, तादृशाः सुहृदः आनता दर्शितविनयाः सन्तः तस्य रामस्य पक्षे युधिष्ठिरस्य भृत्यभावात् भृत्यत्वपदात् अधिकाम् उत्कृष्टां काञ्चित् कामपि सम्पदं न ययाचिरे प्रार्थयन्ते स्म, तद्भृत्यत्वमेव ययाचिरे इत्यर्थः ॥५४॥

अनुज्झितेति। स रामः कुशलैर्निपुणैः कुशीलवैः कुशीलवो वाल्मीकिः। "कुशीलवस्तु वाल्मीकौ नटयाचकयोरपि" इति मेदिनी। तेनाध्यापिताः

अशेषसङ्गीतकलाविचक्षणैः
क्षणात् स भेजे कुशलैः कुशीलवैः ॥५५॥
ततेषु विज्ञैर्विततेषु कोविदै-
र्घनेषु दक्षैः शुषिरेषु सूरिभिः ।
अवादि वाद्यं पुरतोऽस्य वादकै-
रमुक्तगीतैर्लयबन्धसुन्दरम् ॥५६॥

कुशीलवाः । बहुलवचनाद्द्वन्द्वाभावः । तैः वाल्मीकिशिष्यैः रामतनयैः कुशलवैरित्यर्थः । द्वित्वेऽपि सङ्गीतप्रावीण्याद्गौरवे बहुवचनम् । क्षणादुत्सवमुद्दिश्य । "क्षण उद्धव उत्सव" इत्यमरः । यज्गर्भत्वात् पञ्चमी । भेजे प्राप्तः सेव्यतेस्मेति वा । किम्भूतैः—आतिष्ठति मर्त्यलोकं प्राप्नोत्यस्मादित्याख्यानकःपिता रामः । अपादाने ल्युट् स्वार्थिकश्च कप्रत्ययः । गर्भो गर्भधारिणी सीता । लाक्षणिकोऽयं प्रयोगः । मीयतेऽनेनेति मानं चिह्नम् । अनुज्झितमपरित्यक्तम् आख्यानकगर्भयो राम्सीतयोर्मानं चिह्नं यैस्ते तथा तैः । अकृच समासान्तादेतिकः । तथा प्रथममयोध्यामागत्यैवेत्यर्थः आराद्दूरे ध्वनद्भिरुच्चैर्गायद्भिः ततश्च तद्दर्शिभिर्निवेदितैः रामाय कथितैः तथा अशेषसङ्गीतकलासु सर्वसङ्गीतविद्यासु विचक्षणैः पण्डितैः । एतेनात्रानुक्तमपि सगर्भायाः सीतायाः परित्यागादिकमाकरदृष्ट्या बोध्यमिति सूचितम् ।

पक्षे स युधिष्ठिरः कुशलैः कुशीलवैर्नटैः क्षणात् क्षणकालं प्राप्य नत्वनेकसमयं तस्याव्यसनित्वादिति भावः । भेजे किम्भूतैः—अनुज्झिताख्यानकगर्भम् अपरित्यक्तसभामध्यं यथा तथा सभामध्यं प्राप्येत्यर्थः, आरात् समीपे ध्वनद्भिरानकैः पटहैः । "आनकः पटहोऽस्त्री स्यात्" इत्यमरः । नृपप्रबोधनार्थं तैर्वाद्यमानैः पटहैः कर्तृभिरित्यर्थः, प्रथमं निवेदितैर्ज्ञापितैः । अन्यत्तुल्यम् ॥५५॥

ततेष्विति । अस्य रामस्य पक्षे युधिष्ठिरस्य पुरतोऽग्रे वादकैर्वाद्यकारकैर्जनैः वाद्यं चतुर्विधं वीणादिकम् अवादि वादितं । किम्भूतैः—ततेषु वीणादिषु विज्ञैर्निपुणैः, विततेषु ततविपरीतेषु चतुर्विधवाद्यानां प्रक्रमात् आनद्धनामकमुरजादिष्वित्यर्थः कोविदैः पण्डितैः, तथा घनेषु कांस्यतालादिषु दक्षैः कुशलैः, तथा शुषिरेषु वंश्यादिषु सूरिभिः पण्डितैः । "ततं वीणादिकं

सकेतकदलं यथा चतुरनेत्रचारैः सदः
सपल्लवचयं यथा करतलाञ्चलैः शोभयन् ।
सविद्युदिव गात्रकैः सकमलावलीवाङ्घ्रिभि-
र्ननर्त ललितक्रियं निपुणलासकस्त्रीगणः ॥५७॥

सचन्द्रलेखस्खलद्धंसपक्षतिः
सपद्मकोषः शुकतुण्डभासुरः ।

वाद्यमानद्धं मुरजादिकम् । वंश्यादिकन्तु शुषिरं कांस्यतालादिकं घनम्" इत्यमरः । तथा लयो गानवाद्ययोः साम्यम् । "लयः साम्यम्" इत्यमरः । तस्य बन्धेनाश्रयणेन सुन्दरं यथा तथा असुक्तानि अत्यक्तानि गीतानि यैस्तैः तथा तैः गानमपि कुर्वद्भिरित्यर्थः ॥५६॥

सकेतकेति । निपुणो नृत्यप्रयोगकुशलो लासकस्त्रीगणो नर्तकीवर्गः । "नर्तकीलासिके समे" इत्यमरः । ललिता मनोज्ञा क्रिया नटनादिव्यापारो यत्र तद्यथा तथा ननर्त नृत्यं चकार तस्य पुरत इति शेषः । किं कुर्वन्—चतुरा मनोज्ञा ये नेत्राणां चारा विक्षेपास्तैः कृत्वा सदः सभां सकेतकदलं यथा केतकपुष्पदलसहितमिव कृत्वा शोभयन् नेत्राणां पक्ष्मलत्वेन श्वेतत्वेन च सकण्टकत्वेन च केतककुसुमसाम्यादियमुत्प्रेक्षा, यथाशब्दस्योत्प्रेक्षावाचकत्वे अवाचकत्वदोषः कवीनां निरङ्कुशत्वानादरणीयः एवमग्रेऽपि । तथा करतलानामञ्चलैरेकदेशैरन्तैरित्यर्थः करतलैर्वसनाञ्चलैश्चेति वा सपल्लवचयं यथा प्रवालवृन्दसहितमिव कृत्वा सदः शोभयन् करतलाञ्चलानामारक्तत्वेन पल्लवसाम्यादिति भावः । तथा गात्रकैरङ्गैः सविद्युदिव तडित्सहितमिव गात्राणां सालङ्कारपीतत्वेन विद्युत्साम्यादिति भावः । तथा अङ्घ्रिभिश्चरणैः कृत्वा सदः शोभयन् सकमलावलीव कोकनदवृन्दसहितमिव कृत्वा सदः शोभयन्, अङ्घ्रीणां लोहितत्वेन कोमलत्वेन च कोकनदसाम्यादिति भावः । अत्रोत्प्रेक्षाणां संसृष्ट्या नेत्रादिषु केतकदलादिसाम्यं व्यज्यते, तेनालङ्कारेणालङ्कारध्वनिः । पृथ्वीवृत्तम् ॥ ५७ ॥

सचन्द्रेति । तदा सुदृशां नर्तकीनां कराङ्गहारः अभिनयार्थं कराणां विक्षेपः । "अङ्गहारोऽङ्गविक्षेप" इत्यमरः । सम्भेदेनान्यतरवैयर्थ्यमिति

करार्ङ्गहारः सुदृशामशोभय-
त्तदा शरत्काल इव प्रभोः सभाम् ॥५८॥

स स्थूललक्षो बहुलक्षसंख्यै-
र्वनीयकौघानवनीपवर्यः।
धनैस्तदानीमधिनोदधिश्रीः
शस्यानि पाथोभिरिवाम्बुवाहः ॥५९॥

र मा र सा सा र मा र
मा न ता न न ता न मा
र ता ग मा मा ग ता र
सा न मा न न मा न सा ॥६०॥

सर्वतोभद्रः।

न्यायादङ्गशब्दस्य वैयर्थ्यं बोध्यम्। सचन्द्रलेखो मेघापायाच्चन्द्ररेखासहितः, तथा चला मानसाङ्ग्यामापतनाच्चञ्चला हंसानां पङ्क्तिः पक्षमूलं यत्र सः तथा सपद्मकोषः पद्मपुटकसहितः, तथा शुकानां शालिमञ्जरीग्रहणार्थमागतानां कीराणां तुण्डैर्मुखैर्भासुरः शोभमानः एतादृशः शरत्काल इव प्रभो रामस्य पक्षे युधिष्ठिरस्य सभाम् अशोभयत्। अत्र सचन्द्रलेखत्वादिविशेषण— सहितस्यैवोपमानस्य शरत्कालस्य प्रयोगात् उपमेयभूतकरेषु नखरशोभितत्व-मन्दचञ्चलत्वमुकुलितत्वलोहितत्वधर्माः प्रतीयन्ते, तेषाञ्चदृष्टान्तवत् परस्परं प्रतिविम्बनम् ॥ ५८ ॥

सइति। स्थूललक्षो बहुप्रदः। "स्युर्वदान्यस्थूललक्षदानशौण्डा बहुप्रदे" इत्यमरः। तथा अधिश्रीरधिकसम्पत्तिकः सः अवनीं पान्ति रक्षन्तीति अवनीपा राजान स्तेषां वर्यः श्रेष्ठो रामः पक्षे युधिष्ठिरः पाथोभिर्जलैः शस्यानि अम्बुवाहो मेघइव बहुलक्षसंख्यैरसंख्यैर्धनैः कृत्वा वनीयकौघान् याचकगणान्। "वनीयको याचनक" इत्यमरः। तदानीम् अधिनोत् प्रीणयामास। धिःकृञ्च धिविकृव्योरिति धिविप्रीणने इत्यस्य लङि धिरादेशः ।उपमा ॥ ५॥ ९

रमेति । रमा लक्ष्मीः सीतेत्यर्थः सीताया लक्ष्म्यवतारत्वात् । रसायां भूम्यां भूमिमध्ये इत्यर्थः सारं गमनं प्रवेशमित्यर्थः आर प्राप । ऋगतावित्यस्य लिटि रूपम् । पुनः स्वचारित्रशोधनार्थं रामेणाहूता सीता मातर्वसुन्धरे यद्यहं रामादन्यं न जाने तदा तेन सत्येन विवरं देहीत्युक्तायां भूम्यां विदीर्यमाणायां तत्र प्रविवेशेत्यर्थः । किम्भूता—यतः मानस्य चित्तसमुन्नतेस्ताने विस्तारे नता प्रह्वा अतिमनस्विनीत्यर्थः, प्रकृते परित्यागपारुष्येण तद्विपरीतकारिणि रामे अनमा अनम्रा प्रणयकोपवशात् पुनःसंग्रहमिच्छो रामस्याभिप्रायमनङ्गीकुर्वतीत्यर्थः अतएव रते अनुरक्तेऽपि रामे अगमोऽगमनं यस्याः सा । अस्याः सतीत्वं विशेषणेनाह—यतः, अरीरावणस्तस्येमे आराः सानमाननमाः सानं भूषणादेर्दानम् । षणुदाने इत्यस्य रूपम् । मानः सम्मानः नमो नमस्कारः । सच सच सचेति द्वन्द्वः । प्रलोभनार्थं रावणप्रयुक्ता दानमाननमस्कारा इत्यर्थः, मागता न प्राप्ता अनङ्गीकृता इत्यर्थः । आरा रावणसम्बन्धिनः सानमाननमा यया सा दानादिना प्रलोभितापि कथमपि रावणमनङ्गीकृतवतीत्यर्थः । ईदृक्सतीत्वेऽपि जनापवादभीरुणा भर्त्रा परित्यक्तत्वात् अनं प्राणनं स्यति नाशयतीति अनसा । षोऽन्तकर्मणीत्यस्मात् आदन्तादमादेरप्रादेरित्यनेन अङ् प्रत्ययः । लक्ष्मीरूपायास्तस्याः प्राणत्यागाभावात् तिरोहितरूपेत्यर्थः । यद्वा मागतं न गतम् आरयोः रावणकर्तृकयोः सानमाननयो-र्दानसम्मानयो-र्मानसं यस्याः सा । अथवा मां शोभां गता प्राप्ता लोकैः प्रशस्यमानेत्यर्थः । तथा आरेण अरिकर्मणा रावणकर्तृकहरणेनेत्यर्थः सानमम् आनमनेन सहितम् आनम्रमित्यर्थः आननं मुखं मानसञ्च यस्याः सा । मानसस्य नम्रत्वं लज्जया कुण्ठितत्वम् ।

पक्षे, रमा राज्यलक्ष्मीः रसायां पृथिव्यां सारं श्रेष्ठं युधिष्ठिरम् आर प्राप । किम्भूता—मानताने मानस्याधिक्ये सत्यपि नतेषु नम्रेषु जनेषु नतु मानगर्वितेष्वित्यर्थः, आनमा सम्यङ्नम्रा अगर्वितानां वश्येत्यर्थः । तथा रतेष्वनुरक्तेषु आगमो यस्याः सा, तथा मागतानाम् अननुरक्तानाम् आरे प्राप्तौ सानमं वैमनस्यानम्रम् आननं मानसञ्च यस्याः सा, अननुरक्तजनान् अभजन्तीत्यर्थः । लक्ष्मीर्हि अगर्वितैस्तदनुरक्तैश्च लभ्यते नतु गर्वितैर्विरक्तैर्वा, अतो गर्वितम् असम्यग्व्यायशीलत्वादननुरक्तञ्च दुर्योधनं विहाय तद्विपरीतगुणकं युधिष्ठिरं भेजे इति भावः । अस्मिन् पक्षे राजलक्ष्म्यां सच्चरित्रनायिकाव्यवहारप्रतीतेः समासोक्तिः । अतएव आननादिमत्त्वं युज्यते ।

रम्या कल्पविलासिनो क्षितिपतेर्लावण्यतेजस्विनो
नित्याविष्कृतमण्डनास्थितिमतीयाभीष्टलोकान्तरा।
लक्ष्मीराश्रयते स्म सा मतिमतामाद्यं सुसेव्यं मुदा
दातारं रमिता निजेन लसतानीकेन रामं तदा॥६१॥

चक्रबन्धः।

इदञ्च सर्वतोभद्रनामकं चित्रकाव्यं, तच्च सर्वतो भ्रमणात् सर्वतोभद्राख्यं। यदाह भोजराजः। "तदिष्टं सर्वतोभद्रं सर्वतो भ्रमणं यदि" इति। तत्र निवेशक्रमस्तु चतुःषष्टिकोष्ठेषु क्रमेणाद्यपङ्क्तिचतुष्टये पादचतुष्कं विलिख्य अनन्तरं पङ्क्तिचतुष्टयेऽप्यधःक्रमेण पादचतुष्टयलेखने प्रथमासु चतुर्षु प्रथमः पादः सर्वतो वाच्यते, एवं द्वितीयादिषु द्वितीय इत्यादि॥६०॥

रम्येति। सा लक्ष्मी राज्यलक्ष्मीः अभीष्टं चपलत्वात् आश्रयितुमिष्टं लोकान्तरं जनान्तरं यया तादृश्यपि तदा तस्मिन् काले मुदा हर्षेण रामं दाशरथिं पक्षे रमयतीति रामो लोकरञ्जनस्तं युधिष्ठिरम् आश्रयतेस्म सेवतेस्म। यतो मतिमतां बुद्धिशालिनामाद्यंमुख्यं तथा दातारं तथा सुसेव्यं सुखेन सेवितुं योग्यम् अक्रोधनमित्यर्थः, मतिमत्त्वदातृत्वाक्रोधनत्वगुणैर्वशीकृता सती चपलापि अन्याश्रयणाभिलाषं परित्यज्य तमेव हर्षेण सिषेवे इत्यर्थः, एतेन मूर्खे कृपणे क्रोधने च लक्ष्मी न चिरं तिष्ठतीति सूचितम्। सा केत्याह—या रम्या भोग्या नतु सञ्चयार्हेत्यर्थः, तथा कल्पः शास्त्रं प्रकृते नीतिशास्त्रं न्यायोवा। "कल्पः शास्त्रे विधौ न्याये" इति मेदिनी। तेन विलसतीति सा अनीतिमार्गानुसारिणम् अन्यायाचारिणं वा न भजतइत्यर्थः तथा क्षितिपते राज्ञो-लावण्येन सौन्दर्येण शक्त्यादिभिर्भूषितत्वेन तेजस्विनी तेजसेव स्फुरन्ती, अन्यथा मलिनेत्यर्थः, तथा नित्यं प्रतिदिनमेव आविष्कृतं प्रकटीकृतं मण्डनं स्वामिनो भूषणं यया सा, तथा स्थितिमती मर्यादयोल्लसन्ती मर्यादाभेत्तरि नैव तिष्ठतीत्यर्थः, तथा निजेन लसता अनीकेन सैन्येन रमिता तोषिता रक्ष्यमाणेत्यर्थः, लक्ष्मीर्हि सैन्येनैव रक्ष्यते इति भावः।

अत्र चक्रबन्धाख्यश्चित्रविशेषः शब्दालङ्कारः, यदाह भोजराजः—"पुरः पुरो लिखेत् पादानत्र त्रीन् षडरीकृतान्। तुर्यन्तु भ्रमयेन्नमी नामाङ्कश्चक्रसंविधिः" इति। तन्निवेशक्रमात् दशमण्डलरेखात्मके नवमण्डलान्तरालवर्ति चक्रे

श्रुतचित्रकथस्तीर्थभूतात् कुम्भभुवः कवेः ।
स्वपुरप्राप्तये चक्रे राजा हरिविसर्जनम् ॥६२॥
स पूज्यानभिषेकान्ते स्वापतेयैरपूजयत् ।
यथा ते संपदा प्रापुर्नरकिन्नरराजताम् ॥६३॥

अरूपेषु षट्कोष्ठेषु प्रथमादिपादत्रयस्य सर्वमध्याक्षरं विना सर्वे वर्णा यथाक्रमं समसूत्रन्यायेन षड्रेषु लेख्याः, मध्यवर्णास्तु नाभिकोष्ठे लेख्याः, स च प्रतिपादत्रयोच्चारणे उच्चरितत्वात् श्लिष्टः, चतुर्थपादवर्णानान्तु मध्ये प्रथमचतुर्थसप्तमदशमत्रयोदशषोडशोनविंशवर्णान् विना द्वादश वर्णाः षट्सु अरान्तरालेषु नेमौ युग्मयुग्मतया लेख्याः, अराणामादिस्थितैः प्रथमादिवर्णैः सहोच्चारणे चतुर्थपाद उच्चार्यमाणो भवति, तृतीयपादस्यान्त्यवर्णस्तु चतुर्थपादाद्यन्तयोरुच्चरितत्वात् श्लिष्टः। अत्र नामाङ्कन्तु पादत्रये प्रथमादन्ताच्च तृतीयस्थानेषु कविराजकाव्यमित्युद्धृतो भवति। अस्मिन् श्लोके पुस्तकान्तरेषु पाठान्तराणि दृश्यन्ते, तान्यनन्वितत्वान्निरुक्तबन्धविरोधाच्चोपेक्षितानि ॥६१॥

श्रुतेति। राजा रामः तीर्थभूतात् पावकत्वेन पुण्यजलरूपात् कुम्भभुवोऽगस्त्यात् तथा तीर्थभूतात् उपाध्यायात् मन्त्रिरूपाद्वा कवेर्वाल्मीकेश्च सकाशात्। "तीर्थं शास्त्राध्वरक्षेत्रोपायनारीरजःसु च। अवतारर्षिजुष्टाम्बुपात्रोपाध्यायमन्त्रिषु" इति मेदिनी। श्रुता चित्रा नानाविधाः साद्भुता वा येन तादृशः सन् स्वपुरप्राप्तये स्वस्वगृहगमनाय हरीणां वानराणां विसर्जनं चक्रे। एतदुपलक्षणं, विभीषणादीनामपीति बोध्यम्। सुग्रीवादीन् स्वस्वगृहान् प्रस्थापयामासेत्यर्थः।

पक्षे कुम्भभुवो द्रोणस्य। कर्मणि षष्ठी। कवेर्वर्णयितुः प्रशंसितुरित्यर्थः। कव्र वर्णने इत्यस्य रूपम्। तीर्थं गङ्गा तस्माद्भूतादुत्पन्नाद्भीष्मात् श्रुता चित्रा राजधर्मदानधर्मादिविषयिका कथा येन तादृशो राजा युधिष्ठिरः स्वपुरस्य द्वारकायाः प्राप्तये हरेः कृष्णस्य विसर्जनं चक्रे ॥६२॥

स इति। स रामः अभिषेकस्यान्ते पूज्यान् पूजार्हान् जनान् वशिष्ठादीन् स्वापतेयैर्धनैः। "द्रव्यं वित्तं स्वापतेयम्" इत्यमरः। तथा अपूजयत् अर्चयामास, यथा ते जनाः सम्पदा तद्दत्तधनसमृद्ध्या नरकिन्नरराजतां नरराजतां नृपतित्वं किन्नरराजतां कुवेरत्वञ्च प्रापुः।

श्रिया जुष्टः सभारत्या सानुजः साधुवत्सलः।
पृथिवीं पालयामास कामदेव इवापरः ॥६४॥

इति श्रीहरधरणीप्रसूतकादम्बकुलतिलकचक्र-
वर्त्तिवीरकामदेवप्रोत्साहित-श्रीकविराज-
पण्डितविरचिते राघवपाण्डवीये
महाकाव्ये त्रयोदशः सर्गः।
समाप्तश्चायं ग्रन्थः।

पक्षे स युधिष्ठिरः अभिषेकान्ते अश्वमेधावभृतस्नानान्ते। शेषं तुल्यम्। अत्र नरकिन्नरराजताप्राप्तेरसम्भवेन सादृश्ये पर्यवसानान्निदर्शना। अयञ्च श्लोको न बहुषु पुस्तकेषु दृश्यते सङ्गतत्वाद्व्याख्यातः ॥६३॥

श्रियेति। अपरः कामदेवः कन्दर्प इव अथच एतत्काव्यकारयितृनृप-विशेष इव सभारत्या सरस्वतीसहितया श्रिया लक्ष्म्या जुष्टः सेवितः पण्डितः सम्बद्धिमांश्चेत्यर्थः सानुजो भरतादिसहितः पक्षे भीमादिसहितः साधुषु वत्सलः स्नेहवान् रामः पक्षे युधिष्ठिरः पृथिवीं पालयामास ॥६४॥

इति श्रीप्रेमचन्द्रतर्कवागीशभट्टाचार्यविरचितायां कपाटविपाटिकाख्यायां
राघवपाण्डवीयटीकायां त्रयोदशः सर्गः।
सम्पूर्णम्।

यस्याभवज्जननभूः किल शाकराढा
राढासु गाढगरिमा गुणिनां निवासात्।
ग्रामो निकामसुखवर्द्धनवर्द्धमान-
राष्ट्रान्तरालमिलितः सरितः प्रतीच्याम् ॥१॥
अधीयानस्तर्कविद्यां विद्यामन्दिरमध्यगः।
अलङ्काराध्यापनायां राज्ञा यो विनियोजितः ॥२॥
देशमेतं परित्यज्य प्रस्थाने विहितोद्यमम्।
पुनर्यदनुरोधेन कवित्वं स्थातुमिच्छति ॥३॥
सोऽयं क्षौणपकण्ठकण्टकवनीसंहारदावद्युतेः
श्रीरामस्य पदाम्बुजस्मरणतः सम्पन्नवाग्वैभवः।
शाके सायकसप्तिशैलकुमिते वर्षेऽतिहर्षप्रदां
चक्रे राघवपाण्डवीयविवृतिं श्रीप्रेमचन्द्रो द्विजः ॥४॥

# श्लोकानुक्रमणिका ।

# गङ्गास्तोत्रम् ।

नमस्ते स्याद्गङ्गे ! द्रुहिणहरिरुद्रप्रभृतिभि-
र्नुते मातर्दीने मयि शरणहीने कुरु कृपां ।
शरण्ये ! विश्वेषां तव चरणपङ्केरुहमहं
प्रपन्नः पाहीमं कृपणमतिभीमाद्भवदवात् ॥ १
स्पृहाशून्या धन्या मखजफलभोगे त्रिपथगे !
कृताशेषक्लेशाः श्रवणमननादावविरतं ।
लभन्ते यां सन्तस्तव तु सलिले मज्जनवतां
करस्था सा मुक्तिः कलुषकलितानामपि नृणां ॥ २
विधानं यज्ञानामभिदधति केचिच्छुभकरं
परे निस्त्रैगुण्ये महसि परीणामं च मनसः ।
अहं त्वेकं मन्ये सकलजनसाधारणतया
निदानं ते नीरं परमपुरुषार्थस्य न परं ॥ ३
पतन्ती स्वर्लोकान्नयसि पतितानुच्चपदवीं
जलध्यन्तर्यान्ती भवजलधिभीतिं शमयसि ।
जडात्मापि व्यक्तं कलुषजडतां नाशयसि तत्
विचित्रं ते कृत्यं जननि ! जनमध्ये बिजयते ॥४
किमापः किं तापत्रयशमनसिद्धौषधमिदं
किमाधारो मुक्तेः किमु परमधाम्नः परिणतिः ।
विकल्पान् यानेव त्वयि जननि ! लोका विदधते
समस्ताः सत्यास्ते तव महिमसीमा न सुगमा ॥ ५
विदूरेऽस्तु स्नानं नच सलिलपानं न यजनं
नवा वासस्तीरे जननि ! सुरलोकादपि वरे ।
तथापि त्वन्नाम प्रसरति यदीयश्रुतिपथं
स सद्यः शुद्धात्मा यमनृपतिधानीं न विशति ॥ ६
भवारण्ये मन्ये नहि भवति तेषां निवसति-
नवा भीतिर्भीमाकृतिकुपितकालोल्बणमुखात् ।

त्वमम्ब ! प्रोद्दामाखिलदुरितदाम्नां निरसने
निशातासिर्यासि क्षणमपि यदीयेक्षणपथं ॥ ७
सपर्यासम्भारैः सततमनुगानैर्मनुजपै-
रभीष्टं भक्तानां फलति सुचिरेणामरगणः ।
निमग्नाङ्गो गङ्गे ! सकृदपि तरङ्गे तव पुन-
र्भवेत् सद्यो धन्यो भवविलयवर्त्मन्यपि जनः ॥ ८
शिवाभिः संश्लिष्टानमरललनाश्लेषरसिकाः
मिलद्भाङ्कक्षोल्लोषान् स्फुरदमरवन्दिस्तुतिगिरः ।
विमाने राजन्तः पयसि तरतस्ते तत इतः
स्वदेहान् पश्यन्तस्त्रिदशनगरीं यान्ति कृतिनः ॥ ९
विपज्ज्वालालीढान् निरवधिगतायातविधुरान्
अतिश्रान्तान् शश्वत्परिचितकृतान्तान् कलुषितान् ।
जनान् दृष्ट्वा नूनं भवपथिकविश्रामपदवी
विधात्रा कारुण्याज्जननि ! जगति त्वं प्रकटिता ॥ १०
त्वदीयं पानीयं त्रिदशनदि ! तापत्रयहरं
त्रिलोकीवस्तुभ्यः परमतममेकं विलसति ।
नचेदेवं देवः कृतचरणसेवः सुरनरैः
कथं धत्ते मस्ते गुणगरिमलुब्धोऽन्धकरिपुः ॥ ११
न गङ्गेति प्रोक्तं नच जननि ! पीतं तव जलं
नवा तत्र स्नातं सकृदपि मया पूर्वजन्मषि ।
नचेदित्थं तथ्यं कथमवनिदावे निपतितो
भ्रमाम्याशाखाशाशतजनितदुःखान्यनुभवन् ॥ १२
सुरधुनि ! धनदारापत्यभृत्यादिसम्पत्
क्षितिपरिवृढता वा त्वत्पदान्नार्थनीया ।
भगवति ! सति काले तीरनीरान्तराले
वपुरपगममेकं याचते प्रेमचन्द्रः ॥ १३

इति महामहोपाध्याय-श्रीप्रेमचन्द्रतर्कवागीशविरचितं गङ्गास्तोत्रं समाप्तम् ।